SRI VAISHNAVA SAMPRADAYA GRANTHAMALA—No.

Editor :—PROF. P. V. RAMANUJASWAMI, M.A.

# VEDARTHASANGRAHA

OF

## SRI RAMANUJACHARYA

With the Commentary Tatparyadipika of Sri Sudarsanabhatta

EDITED BY

NYAYA VEDANTA SAHITYA SIROMANI, VIDVAN

T. K. V. N. SUDARSANACHARYA

Assistant Editor

Sri Vaishnava Sampradaya Granthamala

Sri Venkatesvara Oriental Institute

&

PUBLISHED UNDER THE AUTHORITY OF

SRI C. ANNA RAO, B.A

EXECUTIVE OFFICER

on behalf of the Board of Trustees, T. T. Devasthanams, Tirupati




1953

PRINTED AT

TIRUMALA-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI

श्रीवैष्णवसम्प्रदायग्रन्थमाला सं. ३.

सम्पादकः – श्री प. वें. रामानुजस्वामी, एम्. ए.
श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाध्यक्षः

श्रीभगवद्रामानुजमुनिविरचितः

श्री

# वेदार्थसंग्रहः

श्रीमच्छ्रुतप्रकाशिकाचार्यैः श्रीमत्सुदर्शनभट्टारकैः अनुगृहीतया

श्री

तात्पर्यदीपिकया युक्तः

( उपोद्घात – अनुबन्धादिभिः सहितः )



श्रीवैष्णवसम्प्रदायग्रन्थमालासहायसम्पादकेन
साहित्य–न्याय–वेदान्तशिरोमणिना
उभयवेदान्तविदुषा
श्री ति. कृ. वें. न. सुदर्शनाचार्येण
सम्पादितः

श्री तिरुमल-तिरुपति देवस्थानमुद्रणालये मुद्रितः
१९५३

# FOREWARD



This is the third volume to be issued in the series named the Sri Vaishnava Sampradāya Granthamāla published by this Institute and the first in the series in Sanskrit. The volume contains the Vedārthasaṅgraha of Sri Rāmānuja with the commentary of Tātparya Dīpikā by Sudarśana Bhaṭṭa, famous as Srutaprakāśikāchārya. There is a peculiar propriety in publishing this work as the first Sanskrit volume in the Series which is published by an Institute which bears the name of Venkatesvara. The series was started to make available to the public the standard works of Vaishnava faith which have long been out of print or which have not yet been published. Rāmānuja has done so much for the establishment and propagation of the faith that it is aptly called the Rāmānuja Siddhānta. Further, it is expressly stated by the commentator that the subject-matter of this work was delivered in the form of a lecture in the presence of Srīnivāsa in the temple at Tirumalai. Rāmānuja had special faith in Srīnivāsa and took the responsibility of arranging the management and system of worship in His temple.

The importance of this work lies in the fact that Rāmānuja wrote commentaries on the *Brahmasūtra* and the *Bhagavadgīta* but not on the *Upaniṣads* which together form the three basic works for the Vedānta system of Philosophy according to every school. In the present work alone we find his method of interpretation of all the important Upaniṣadic passages as supporting the system of Visishtādvaita Philosophy, firmly established, though not originally propounded, by him.

The work is edited with an elaborate introduction and detailed table of contents and a comprehensive index of quotations with indications of their sources. Sri T. K. V. N Sudarśanāchārya who is in charge of the editorial work of the series is an eminent and versatile scholar well-steeped in the *Sampradāya* and as such it is difficult to find a better man for such work.

I am very glad to introduce the edition to the public in the hope that it will serve to propagate the philosophy of Rāmānuja.

S. V. O. INSTITUTE
TIRUPATI
1-12-53

P. V. RAMANUJASWAMI,
*General Editor*



श्रीरस्तु

श्रीमते वेङ्कटेशाय परस्मै ब्रह्मणे नमः

श्रीमते रामानुजाय नमः

# उपोद्घातः

ॐ नमो वेङ्कटेशाय जगन्मङ्गलभूमये ।
वेदार्थसंग्रहसुधा यत्प्रसादाद्विनिसृता ॥

वेदार्थसंग्रहसुधां वेदान्ताब्धेर्य आहरत् ।
रामानुजाय मुनये तस्मै भगवते नमः ॥

अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावमखिलं हृदम् ॥

अयि सारासारविवेकज्ञाः सहृदयतल्लजा विपश्चिदपश्चिमाः !

अमलोऽयं निबन्धवरस्समाविरस्ति सर्वाङ्गसुन्दरः सर्वाङ्गीणमङ्गलमयः सर्वातिशायी निरुपमः, यो वा प्रबन्धृ – प्रबन्ध – प्रमेय परमवैलक्षण्यादि दिव्यपरिमलपरिकर्मितः तत्त्व – हित – पुरुषार्थानां परमयाथार्थ्यनिरूपणचणः, परमपुरुषार्थप्रापणालङ्कर्मीणः, मृदुमधुरोदारोदात्तगम्भीरपदबन्धसन्दर्भः, विकल्पासह–विविधकुतर्ककल्कसकलित – कुदृष्टिमतविततितूलवातूलः, श्रीमान् — अस्यां श्रीमत्यां श्रीपदपुर्यां समुल्लसन्त्यां श्री वेङ्कटेश्वरभगवद्दिव्यकृपाकटाक्षसन्धुक्षितायां प्राच्यविद्यापरिशोधनमहाशालायां विद्योतमानायां श्री श्रीवैष्णवसम्प्रदायग्रन्थदिव्यप्रसूनमालायां, देवनागरदिव्याक्षरेषु सार्वजनीनेषु प्रकाशितेषु दिव्यप्रबन्धरत्नेषु प्रप्रथमं, तृतीयं च तदितरसर्वप्रबन्धेषु, सर्वतोमुखं सर्वतश्च विराजमानं “वेदार्थसंग्रह” नामकं ह्यनवद्यं अतिमहार्घं [1] प्रकरणप्रबन्धदिव्यसूनरत्नम् ॥

---

१. शास्त्रप्रतिपाद्यसर्वविषयकवैशद्यसम्पादकः सुलभावबोधः अनतिसंक्षिप्तविस्तृतः ग्रन्थविशेषः – प्रकरणम् नाम । अयं च ग्रन्थः श्रीमतः विशिष्टाद्वैतवेदान्तशास्त्रस्य प्रशस्तं प्रकरणं भवति ।

अन्वग्राहीदं खलु श्रीमद्भिर्भगवद्भिः श्रीभाष्यकारैः श्रीमद्भिर्निगमान्तसम्प्रदाय महाम्भोधपरिष्करणचुञ्चुभिः, भवभयाभितप्तजनभागधेयैर्भवभाविताभव्यावतरणैः, परस्मे व्योम्नि परमपुरुषदिव्यसंकल्पकल्पानुवर्तिस्वरूपस्थितिप्रवृत्तिभेद — अशेषशेषतैक-रतिरूप — नित्यनिरवद्यनिरतिशयनिरुपाधिक — सकलविधभगवत्कैङ्कर्यदिव्यसाम्राज्य लक्ष्मीधुरन्धर — श्रीमन्नित्यसूरिपरिषन्निर्वाहक — श्रीमदनन्तगरुडविष्वक्सेनाद्यपरावतारैः, सर्वज्ञैः, सत्यसंकल्पैः, परमकारुणिकैः, परमोदारोदात्तस्वभावैः, दिव्यरमणीय-मञ्जुलमङ्गलविग्रहैः, निखिललोकोज्जीवनैकनिरतैः, सर्वदा सर्वथा सकलचिदचित्प्राणि-कोटिहितनमप्रवर्तकैः, स्वोत्तमाङ्गदिव्यगन्धसम्बन्धतः पूर्वेषां, स्वचरणारविन्द-निष्यन्दिदिव्यमकरन्दबिन्दुसन्दोहसम्बन्धतश्च अवरेषां, सर्वेषामाचार्याणां स्वहस्त गतीकृतमुक्तिकन्यापरिष्वङ्गैः, सकलदिव्यसूरिस्वरूपैः, श्रीमच्छठारातिदिव्यसूक्तिमार्ग-सोमैरिव निखिलदिव्यसूरिवर — परमर्षि — परमाचार्यसहजस्वरूपैः, आचार्यसार्वभौमैः श्री भगवद्रामानुजमुनिपुङ्गवैः—निखिललोकतिलकायमाने सुभगभूतले त्रिविधविलक्षण दिव्यरूप दिव्यगन्ध दिव्यस्पर्शोपशोभित दिव्यप्रसूनपरिमलाकृष्ट — सकलदिगन्ताव-लम्बिदिव्यमधुकरझंकारादिमुखरित — दिव्यारामशतसहस्रपरिवृते निरन्तरनिरवधिक-निष्यन्दमान—निर्मलमधुररमणीयप्रसन्न — सलिलझलझलारावप्रतिध्वनितदशदिगन्तदिव्य-सरसीकाशतसहस्रकोटिपरिमण्डिते निस्सीमवैभवोपेते निखिललोकनिवासिभक्तलोक-समुदयसमाराधिते निस्समाभ्यधिके निसर्गरमणीये श्रीमद्वृषभाद्रिशिखरवरे विराजमानस्य शिखरशेखररत्नस्य, दिव्यकमनीयनिरुपमरूपलावण्य — सौभाग्यभाग्य - कल्याणगुणगण — शीलविलासादिनिरात्मानुरूपया अशरण्यशरण्यया निजेन कारुण्या-मृताभिवर्षणेन सन्ततं सकलमपि विश्वमाप्याययन्त्या निखिलजगदीशान्या निखिल-लोकानामपि निरुपाधिकजनन्या नित्यानपायिन्या क्षणमपि विश्लेषसम्भावनागन्ध-मसहमानया अनन्यार्हया अनन्यशरण्यया अनन्यभोग्यया तरुण्या अरविन्दनिवासिन्या परमवल्लभया दिव्यमहिष्या श्रीदेव्या नित्यं गाढमाश्लिष्टेन सुविशालविमलकमनीयमङ्गल-दिव्यवक्षःस्थलेन विद्योतमानस्य, परमपुरुषस्य परस्य ब्रह्मणो निखिललोकशरण्यस्य, निखिलहेयप्रत्यनीककल्याणैकतानदिव्यमङ्गलविग्रहविभूषितस्य, उल्लोकया सर्वावयव-सौन्दर्यसम्पदा सर्वचेतसां सदा सम्मोहनस्य साक्षान्मन्मथमन्मथस्य निखिलकल्याण-

गुणगणमहार्णवस्य, आश्रितवात्सल्यैकजलधेः कलियुगप्रत्यक्षदैवतस्य कल्याणकल्पमहीरुहस्य, भगवतो नारायणस्य निखिलवेदवेद्यस्य श्रीनिकेतनस्य दिव्यया परमाज्ञया, सारासारविवेकज्ञ — विमत्सर — प्रमाणपरतन्त्र — विपश्चिदपश्चिम — दिव्यसूरिगुरुवरपरिषत्परिमेदुरे तस्य दिव्यसन्निधौ सकलवेद वेदान्त — तदुपबृंहण — सकलशास्त्रहृदयसर्वस्वस्य, स्वप्रतिष्ठापितपरमसिद्धान्तस्य प्रमाणन्यायोपपन्नस्य वादाहवविजितविविधप्रतिवादिमत्तभविपुलकुम्भस्थलविनिबद्धविजयफलकस्य विज्ञापनोपन्यासरूपेण ।

जग्रन्थे च अनुपदमेव विलेखनेन ग्रन्थरूपतया, श्रीमद्भिः श्रीमतो विशिष्टाद्वैतदर्शनस्य विजयस्तम्भायमानैः विकुण्ठत्वश्रीकण्ठमङ्गलसूत्रायमाणसरससाररमणीयदिव्यश्रीसूक्तिभिः श्रीभगवद्भाष्यकाराणामत्यन्तमन्तरङ्गैः प्रधानप्रथमशिष्यावतंसैः दक्षिणभुजस्थानीयैः लोकोत्तरप्रतिभाप्रभावसमुदञ्चित — विशुद्धविज्ञानवैराग्य — परभक्ति — परज्ञान — परमभक्तिपरिपूर्णैः, सुनिशितशेमुषीविलासपरिपाकपरिकलितकसन्धाग्राहिभिः, सर्वज्ञैः, सत्यसंकल्पैः, परमसात्त्विकैः, आचार्यैकदैवतैः, परमविलक्षणातिकठोरानुष्ठाननिष्ठानिरतैः * श्रीमत्सुदर्शनांशसम्भूतैः श्रीवत्साङ्कमिश्रैः आचार्यतल्लजैः, श्रीभाष्यादिनिबन्धा इव सपदि, सकलचेतनसमुदयसमभ्युदयसम्पादनाय ।

समुदटङ्कि किलायं सुभगो भवुकवृत्तान्तः, श्रीमद्भिः श्रीहारितकुलतिलकश्रीमद्रामविजयसूनुभिः श्री श्रीवत्साङ्कमिश्रवंश्यैः श्री श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयैः श्रीमद्वरदाचार्यपादसेवासमधिगत — श्रीमद्वेदार्थसंग्रहपरमतात्पर्यैः श्रीसुदर्शनसूरिभिः वेदार्थसंग्रहस्यास्य व्याख्यानभूतायाः तात्पर्यदीपिकायाः समन्वारम्भे । यथा हि —

श्रीभाष्यकृदुपन्यस्तो यः श्रीशैलपतेः पुरः ।
† वेदार्थसंग्रहस्यास्य कुर्मस्तात्पर्यदीपिकाम् ॥ इति ।

* श्रीरामांशसम्भूता इति केचित् ।

† अयं च ग्रन्थः सरस्वतीभाण्डारमधिवसन्त्या सरस्वत्या स्वशिरसा धृतः, श्लाघितश्च इति दिव्यसूरिचरिताद्विज्ञायते । यथा : —

कप्यासं वचनमभाणि शङ्करेण लय्यन्ते कपिशुदमित्ययुक्तवाक्यम् ।
अद्य त्वं कमलपदित्यनन्यथार्थं सद्व्याख्यस्तदसि ममापि पूजनीयः ॥
इत्युक्त्वा निगमशिखार्थसंग्रहाख्यं त्रिनयनां कृतिमुररीचकार मूर्ध्ना ।
वाग्देवी कुमतिनिरासनं स्वमूर्ध्ना दामेवाधित विदुषां मुदा समक्षम् ॥ इति ।

अभ्यर्थिणि तैरेव च इदमपि यत् तद्ग्रन्थान्ते — "भगवानयं भाष्यकारः संयमीन्द्रवृन्दवृन्दारकपरिपत्पाकशासनः, निर्मन्थ्य स्वमतिमन्थानेन सर्ववेदान्तविशुद्ध-

— —

परमयोगिविलासनामके आन्ध्रभाषामये चारित्रकग्रन्थेऽप्येवाभिवर्ण्यते । यथा —

భువనంబులన్నియు బొగడఁ దా మున్న
సవరించు వేదాంత సంగ్రహం బెత్తి
యోము చేసిన శాస్త్ర మిది గీనఁ దప్పు
లే మేని గల్గిన సెలగింపు మనుచు
దన కేల నున్న పుస్తకము పంకేజ
తనుజాత రాణి హస్తములకు నొసఁగ
ధరలోన సకలశాస్త్రముల కల్గ వ్రదు
సరకుగ గొనక మెచ్చక యుండు వాణి
యిరవొందు నా స్తుమఁ డిచ్చు శాస్త్రంబు
శిరసావహించి మెచ్చి బానివరుఁడు
సత్కటి బోధాయనాఖ్య నిర్వా
కృత్తి శారదచేత వేగ గైకొనుచు

इति ।

वेदार्थसंग्रहस्य "वेदान्तसंग्रह" इत्यपि व्यवहारः आन्ध्रदेशे आसीदिति ज्ञायते, यतोऽत्र, मुमुक्षुजनकल्पके, आचार्यसूक्तिमुक्तावल्यां च तथैव निरदेशि ।

श्रीशैलपूर्णानां सविधे रामायणार्थश्रवणसमये वेदार्थसंग्रहमुखाः सर्वेऽपि प्रबन्धाः, तेभ्यो निवेदिताः, तैश्च आदृताः :— इत्यपि अभिवर्ण्यते —

"श्रीरामायणगदितं वृषाद्रिपूर्णात्
श्रुत्वार्थं सुदृढममुं निजप्रबन्धान् ।
संश्राव्याकृतकवचोऽर्थसंग्रहादीन्
सोऽनैषीत्तनयममुष्य शिष्यतां हि ॥" इति ॥

तात्पर्यदीपिकायां तु — "श्रीशैलपतेः पुर उपन्यस्तः" इत्यभिवर्ण्यत इति पूर्वमेव न्यवेदि ।

अत्रायं समन्वयप्रकारः — सरस्वतीसंशयच्छेदनाय कप्यासश्रुत्यादीनां परमार्थाः प्रतिपादिताः, ततो ग्रन्थे निबद्धाश्च । विजयवृत्तान्तप्रकारज्ञापनाय श्रीशैलपतिना श्रीमुखैः तत्सन्निधौ उपन्यस्तः अयं ग्रन्थः, तदनु च श्रीशैलपूर्णेभ्योऽपि विज्ञापितः स्यात् " इति ।

दुग्धवारिधिं, आरादाजहार वेदार्थसंग्रहसुधामिमां संसाराग्निविदीपनव्यपगतप्राणात्मसंजीविनीं परमया निर्हेतुकया दिव्यया कृपया " इति । तथाह्ययं श्लोकः —

वेदार्थसंग्रहसुधां वेदान्ताब्धेर्य आहरत् ।
रामानुजाय मुनये तस्मै भगवते नमः ॥ इति ।

---

## भगवद्रामानुजाचार्याणामवतारः, देशकालादिविवेकश्च

श्रियःपतिः अखिलहेयप्रत्यनीककल्याणगुणगणैकतानः स्वेतरसमस्तवस्तुविलक्षणसत्यज्ञानानन्दानन्तामलस्वरूपः निखिलजगदुदयविभवलयलीलः पुरुषोत्तमो भगवान् नारायणः, अत्यर्कानलदीप्ते शुद्धसत्त्वज्योतिर्मये आनन्दैकमहार्णवे श्रीमति वैकुण्ठलोके प्रकृष्टविज्ञानबलैकधामनि फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि अनन्तभोगिनि स्वैश्वर्यरूप्येण विलासचेष्टितैरपूर्ववद्विस्मयमादधानया श्रिया सहासीनः, अनन्तपरिजनपरिचारिकापरिचरितचरणनलिनयुगलः, नित्यमुक्तानुभाव्यः, अवाप्तसमस्तकामः, अमन्दानन्दसन्दोहनिर्भरोऽपि सर्वेश्वरः—तादृगमन्दानन्दसन्दोहमकरन्दानुभवभाग्यानपि स्वभावसहजं स्वात्मस्वरूपं परमपुरुषशेषत्वमपि सुदूरं विस्मृत्य विस्मृत्य, तिलतैलवत्, दारुवह्निवत्, दुर्विवेचमभिव्याप्तया प्रतिक्षणमुपचीयमानदिव्यवैभवया गुणमय्या दुरन्तया दुरत्ययया प्रकृतिपिशाचिकया भृशमावेश्यमानान्, अनेकप्रकारातिकठोरदुर्भरदुःखसंयातनानुभवनिर्भरान्, दुर्भगशेखरान्, प्रलयसीमनि पक्षशून्यानिव अण्डजान्, करणकलेबरविधुरान्, अचिद्विशेषितान्, संसरतश्चेतनान् दर्शंदर्शं, स्मारंस्मारं च तद्दुर्गतिं दयमानमनाः, पटुभिः करणकलेबरैः तानेतान् संयोजयन्, स्वयमपिताननुप्रविशन्, अनुगृह्य च स्वातन्त्र्यशक्त्यादीन्, कर्तव्याकर्तव्यशासकं स्वस्वरूपरूपगुणविभूति - स्वाराधान - तत्फल - तदनुभवप्रकारादिप्रदर्शकं स्वतःप्रमाणम् अनादिनिधनं अविच्छिन्नसम्प्रदायं नित्यनिर्दुष्टं निगमाख्यं प्रमाणप्रदीपं प्राहिणोत् — परमकारुणिकः, अपारवात्सल्यैकजलधिः, निखिललोकप्रथमाचार्यः चतुर्मुखमुखादिदिव्यपरम्परया ।

एवं कृतेऽपि सुविस्तृते प्रयत्ने, " नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किञ्चित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम् " इत्युक्तरीत्या तत्तत्कर्मानुरूपमतिविल-

रिताजनित - अप्रतिपत्ति - अन्यथाप्रतिपत्ति - विपरीतप्रतिपत्त्याद्यनल्पकलुषशेमुषीविशेषाभि-भासाः सकलमपि श्रुतिमार्गं कण्टकितं कुर्वन्तः स्वस्वरूपनाशं स्वयमेवोज्जृम्भमाणाः पराञ्चकमिरे प्रतीपगतयो विमूढमार्गगामाः संसारिणः ।

तदेतत्सर्वमवलोक्य पुनः परमपुरुषः —

“ संकीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् सकलान् वेदानुज्जहार हरिः स्वयम् ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।
ब्रह्मरुद्रादिदेवेषु मनुष्यमृगपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः ॥ ”

इति प्रतिपादितदिशा, श्रीमद्बादरायणरूपेण अवतीर्य, वेदान् सर्वान् समुद्धृत्य, विभज्य, संस्थाप्य च याथात्म्येन, तान् विवरीतुं प्रवृत्तः, स्वान्तरङ्गशिष्येण जैमिनिमुनिना, कर्मभागस्य अनुष्ठानोपयिकत्वेन सुलभावगाहतया, स्वाराधनैकवेषकर्म-बोधकपूर्वभागार्थविचाररूपपूर्वमीमांसासूत्राणि कारयित्वा, ज्ञानमार्गस्य अत्यन्तं दुरवगाहतया, जीवपरयाथात्म्यादिस्वरूपनिरूपणतत्परवेदान्तभागार्थविचाररूपशारीरकमीमांसासूत्राणि स्वयमेव अनुजग्राह ।

तानि च शारीरकमीमांसासूत्राणि भगवद्बोधायनादिभिर्महानुभावैः महानिबन्धैः विशदीकृतानि, सर्वसदर्थस्थापनपरसत्सम्प्रदायपरम्परया । परं तु मध्येकालमिमानि सूत्राणि, औपनिषदपरमपुरुषवरणीयताहेतुगुणविरहितैः अनादिपापवासनादूषिताशेषशेमुषीकैः अनधिगतपदवाक्यस्वरूप - तदर्थयाथात्म्य - प्रत्यक्षादिसकलप्रमाणवृत्त-तदितिकर्तव्यतारूपसमीचीनन्यायमार्गैः कुदृष्टिभिः कैश्चिद्व्याकुलीकृतानि ।

तामेतां दुरवस्थां तपस्विन्याः श्रुतेः तत्तत्त्वार्थप्रतिष्ठापकसूत्राणां च अव-लोक्य, भृशं निर्विण्णः, स भगवान् — तत्संरक्षणाय, सदर्थस्थापनाय च अन्यं

कमपि युक्ततमं पुरुषमपश्यन् "निवासशय्यासनपादुकांशुकोपधानवर्षा-तपवारणादिभिः । शरीरभेदैस्तव शेषतां गतो यथोचितं शेष इतीर्यते जनैः" इत्यभिवर्णितदिशा भ्वस्य सर्वदेश - सर्वकाल - सर्वावस्थोचित - सकलविध-कैङ्कर्यनिर्वहणैकप्रवणं अनितरसाधारणया "आदिशेष" इति समाख्यया विख्यातं श्रीमन्तम् अनन्तं नित्यसूरिवरं स्वान्तरङ्गनित्यकिङ्करं स्वकीयानां निरवग्रहदिव्यकृपा-कटाक्षाणामनुत्तमं पात्रमतानीत् ।

स च भगवतो नारायणस्य श्रीमतः कटाक्षपात्रभूतः श्रीमानादिशेषः सूरीणा-मग्रणीः, तमकुण्ठितं सर्वेश्वरसंकल्पं यथावदनुपालयितुं, समुद्धर्तुं च संसारिणः सर्वान् घोरादस्मात्संसारसागरात्, अवनावस्यामवतितीर्षुः समुचितं देशमाकल-यन, श्रीमच्छ्रीकान्तचरणाम्बुरुहपरमैकान्तिकात्यन्तिकभक्तियोगनिष्ठागरिष्ठैः प्रामाणिकैः प्रपन्नजनैः परिमण्डिते श्रीमन्महाभूतपुरे, निरन्तरनिर्वर्त्यमानानैकविधसततन्तु-समाराधितरमारमणस्य शान्तशमदमाद्यनन्तकल्याणगुणगणालङ्कृतस्य, श्रीहरितकुल-कलशाब्धिराकाशशाङ्कस्य सर्वक्रतुदीक्षितस्य श्रीमत्केशवसोमयाजिनाम्नो विप्रवर्यस्य धर्मपत्न्यां, श्रीमद्यामुनमुनिशिष्यावतंसानां श्रीमतां श्रीशैलपूर्णानां प्रियसहोदरायां श्रीभूदेवीसमाख्यानायां कान्तिमत्यां पूर्वसन्ध्यायां, श्रीरामदिवाकर —— अच्युतभानू, श्रीकौसल्यादेवकीदेव्योरिव, रामानुजदिवाकरस्सन् समाविरासीत्, पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च, अष्टादशोत्तरशतोत्तरचतुःसहस्रसंख्याकेषु (४११८) गतेषु कल्यब्देषु, अष्टात्रिंशदुत्तरे गते नवशते (९३८) शालिवाहनशताब्दानां, जगन्मङ्गलमये श्रीमति पिङ्गले वर्षे, श्रीमति च चैत्रे मासि, शुभतिथौ च शुक्लपक्षपञ्चम्यां, श्रीमदार्द्रानक्षत्रयुजि गुरोर्वासरे, श्रीमति मध्याह्ने कर्कटे चातिप्रशस्ते उच्चस्थग्रहपञ्चके लग्ने, सकललोकभाग्योदये पुष्करांशे । *

---

* आधुनिक विमर्शकदृष्ट्या कालनिर्णयः

एतदाचार्यचरणविहितानां सर्वेषामपि समारम्भाणां कालः निश्चयश्च एव आधुनिकदृष्ट्यापि । दिव्यसूरीणां समयनिर्णये गुरुपरम्परादिसम्प्रदायग्रन्थानां, चरित्र–शासनाद्युत्तम्भित–विम-र्शकग्रन्थानां च यो वा समुल्लसति मतभेदः, सोऽप्येषामाचार्याणां विषये नावतरत्येव ।

"धीर्लब्धा" "धर्मो नष्टः" इति वाक्याभ्यां श्रीभगवद्रामानुजाचार्याणां लीलाविभूता-वस्यां स्थितिसमयः सम्यङ् निर्णेतुं शक्यते । "कादि नव, टादि नव, पादि पञ्चकम्,

अत्र च अनुसन्धीयन्तो इमे श्लोकाः —

आम्नाये समजनि चैत्रमासि नक्षात्र
आद्रास्मा बहुलकृपारसेन कश्चित् ।
निस्सीमाखिलगुणसज्जनाश्रयत्वात्
श्रीरामानुजमकृतास्वयया पिता नमः ॥
( दिव्यसूरिचरितम् )

धाम्नो ” इति अक्षरसंकेतशास्त्रसूत्रानुगुण्येन यदि वयमत्र परिशीलयेम, तदा “ धीर्लब्धा ” इत्यत्र “ ध ” कारेण नवत्व (९) संख्या, “ ल ” कारेण त्रित्व (३) संख्या, पुनः “ ध ” कारेण नवत्व (९) संख्या च बोध्यन्त इति निश्चिनुमः । “ अङ्कानां वामतो गतिः ” इति व्युत्क्रमेण संख्या निबध्यते इति च, संकेतशास्त्रपरिपाटीविदाम् अतिरोहितो विषयः । अत्र पूर्वं गणनाक्रमाद्-दपि एकैव संख्या सिद्ध्यति । इयं ९३९ संख्या शालिवाहनशकसम्बन्धिनी । अस्या ७८ संख्या-मेलने ह्रूणशकवर्षसंख्या निर्गलति । सा च १०१७ ( की. प ) भवति । एवं च यतिराज-राजानां जन्मकालः की.प १०१७ वत्सर इति सिद्ध्यति । एवमेव “ धर्मो नष्टः ” इत्यनेन शालिवाहशकवर्षं १०५९, ह्रूणशकवर्षः ११३७–इति च परिनिष्पद्यते । स एव संयमीन्द्राणां परमपदावाप्तिकालः । तावता विंशत्युत्तरशतं वत्सरान् (१२०) न्यवसन् श्रीमद्रामानुजाचार्याः अस्यां लीलाविभूतौ–इति सिद्धान्तीकर्तुं शक्यते ; कुत एवैवं विमर्शैः विनिर्णये सप्रमाणोऽस्ति । एवं सर्वेषां समारब्धमाणानामेतेषां कालः सुव्यक्तं निर्णेतुं शक्यत एव ।

## रामानुजाचार्याणां जीवितकालसूची

1. भूतपुर्यां–जन्मकालः ... की. प. १०१७
2. यादवप्रकाशसकाशे–विद्याभ्यासः ,, १०३३
3. श्रीयामुनमुनि संदर्शनार्थं–श्रीरङ्गनगरे प्रथमप्रवेशः ,, १०४२
4. दिव्याज्ञा स्वीकरणम्– (करेण दाशरथि मठाधामप्र) .. ,, १०५०
5. महीशूरपुरीगमनम् चोलबाधया– (श्रीभाष्यनिर्माणम्) . . , १०५६
6. होयसालदेशाधिपतेः बिट्टिदेवस्य वैष्णवमते प्रवेशः–“ विष्णुवर्धन ” नामवितरणं च ... ,, १०९८
7 तिरुनारायणपुरे – भगवत्प्रतिष्ठापनम् ,, ११००
8. तत्रैव–निवासः ... ,, १११६
9. श्रीरङ्गनगरं प्रति–आगमनम् ... ,, १११८
10. परमपदं प्रति–प्रस्थानम् . ... ,, ११३७

आहत्य जीवितकालः १२० वत्सराः

श्रीमद्वेदान्ताचार्यचरणैः यतिराजसप्तत्यामपि —

"प्रथयन् विमतेषु तीक्ष्णभावं प्रभुरस्मत्परिरक्षणे यतीन्द्रः ।
अपृथक्प्रतिपन्नयन्मयत्वैः ववृधे पञ्चभिरायुधैर्गुरार्ते ॥" इति ।

किञ्च तैरेव —

"विश्वं त्रातुं विषयनियतं व्यञ्जितानुग्रहस्सन् ।
विष्वक्सेनो यतिपतिरभूत् वेत्रसारस्त्रिदण्डः ॥" इति,

विष्वक्सेनावतारत्वम्,

काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता ।
सा मूर्तिर्मुरमर्दनस्य जयति अत्यन्तसंरक्षिणी ॥" इति,

मुरमर्दनावतारत्वमपि समुदटङ्कि ।

अपि च —

शेषो वा सैन्यनाथो वा श्रीपतिर्वेति सात्त्विकैः ।
वितर्क्याय महाप्राज्ञैः भाष्यकाराय मङ्गलम् ॥ इति,

महद्भिराचार्यैर्मङ्गलशासनपरैः अनुसन्धीयमानोऽयं श्लोकोऽपि विषयममुं स्वहस्तयति ।

किञ्च श्रीमहालक्ष्म्या अवतारोऽयमित्यपि केचन आचार्याः प्रतियन्ति ।

वस्तुतस्तु, श्रीमन्मुरमर्दन — विष्वक्सेन — दिव्यपुरुषात्मक पञ्चायुधप्रभृतीनां सर्वेषां सारतमसर्वदिव्यांशसम्पत्सम्पन्नः श्रीमाननन्त एव, रामावतार इव, श्रीमद्रामानुजरूपेण अवततार — इति महतां आचार्याणां निर्वाहः ।

एवमेव हि अभिवर्ण्यते यादवगिरिमाहात्म्ये —

अनन्तः प्रथमं रूपं द्वितीयं लक्ष्मणस्तथा ।
बलभद्रस्तृतीयं तु कलौ कश्चित् भविष्यति ॥ इति ॥

दिव्यसूरिचरितेऽपि —

"पर्यङ्करंगभाविविप्रयोगप्रस्तावासह" इति, "भौजङ्गं वपुरपहाय शेषभोगी, यद्रूपं त्रिभुवननन्दितं जगाम" इति च शेषावतारत्वमेव एतेषामभिवर्ण्यते ।

अपि च यतिराजदण्डके —

"नमः श्रुत्यन्तपर्यन्तजयोपन्याय वेधसे ।
नरकेभ्यः शेषाय गुरवे परवेदिने ॥" अत ।

"श्रीपादिद्वराय शेषावताराय" इति च,

श्रीरामानुजार्यणाम् —

"तस्मात्तु निगमपद्धतिमेव जज्ञे स शेषः ।
श्रीमान् रामानुजमुनिरसौ श्रीमहाभूतधाम्नि ॥" अत ।

च अभिवर्ण्यते ।

श्रीमद्यतिराजसार्वभौमैकदैवतैः श्रीमद्भिरान्ध्रपूर्णैरपि, स्वकीय यतिराजवैभवग्रन्थे-

"वेदान्तसिद्धान्तसमर्थनाय बाह्यान्तरध्वान्तमतापनुत्त्यै ।
शेषांशकः केशवयज्वदेव्यां तेजोनिधिः कश्चिदिहाविरासीत् ॥"

इति समभिवर्ण्यते ॥

भगवद्भाष्यहेवाकपाकमहाराज्ञः महाप्राज्ञश्च श्रीमानादिशेष एव हि । अतः स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरस्य परस्य ब्रह्मणः श्रीमन्नारायणस्य परमतत्त्व-प्रतिपादकं, परमपुरुषपादारविन्दशरणागतिवैभवप्रकाशकं, श्रीमन्नारायणचरणनलिन-परिचरण परमानन्द — मोक्षसाम्राज्यसमर्पकं विशिष्टं शिष्टजनोपदिष्टं श्रेष्ठं गरिष्ठं च शुद्धान्तसिद्धान्ततत्त्वमिदं व्यवस्थापयतः श्रीमतो यतिराजस्य, साम्प्रतम् प्राधान्येन अनन्तावतारत्वम् अत्यन्तं युक्तमेवेत्युपश्यामः ।

किं बहुना —

"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलि रानतोऽस्मि ॥"

इति वर्ण्यमानप्रकारेण सर्वेषामपि चेतनानां त्रिविधकरणमलापहरणचण—शास्त्र—प्रमाण-निबन्धनिर्माणचातुरीचुञ्चुः, निखिलजगद्रक्षणजागरूकस्य भगवतो विष्णोरत्यन्तवल्लभः, सर्वप्राणिसमुत्तरणाद्यम्मविष्णुः, भगवत्प्रवर्तितसर्वशास्त्रविशदीकरणनिपुणः, भगवतः प्रकृष्टान्तरङ्गतत्त्वयाथात्म्यवेदी सूरीणामग्रणीः — स एव हि भगवान् अनन्तसूरिः । अतः सर्वं समञ्जसम् ।

एतेषामाचार्याणां भविष्यदाचार्यावतारः समजनि, पञ्चजनानन्यैः निर्हेतुक-भगवत्कटाक्षपीयूषपरिपाकपरीवाहसम्भावितनिशुद्धविज्ञानैः, उन्मीलत्कीभूतपरभक्ति, पर-ज्ञान — परमभक्तिपरिपूर्णैः श्रीमद्भिः शठरातिदिव्यसूरिमार्गीणैरपि "कलियुं केडुम् कण्डुकोळ्मिन्" ( कलिरपि नश्यति पश्यत लोकाः ) इति, "कण्डोम् कण्डोम् कण्डोम्" ( अद्राक्ष्म अद्राक्ष्म अद्राक्ष्म ) इति च सर्वेषामपि स्वचरणनलिनाश्रितानां भक्तानाम् — इति प्राञ्चो व्याहरन्ति ।

श्रीपाञ्चरात्रेऽपि —

लक्ष्मीः —

"कस्मिन् कुले भवान् विष्णो! करिष्यति गुरोर्जनिम् ।
कस्मिन् युगेऽवतीर्णस्त्वं भविष्यसि वद प्रभो! ॥"

इति श्रीदेव्या पृष्टो भगवानेवमाह —

श्रीभगवान् —

'अहमाचार्यरूपेण भविष्यामि युगे युगे ।
तत्रापि योगिनां पुंसां कुले सद्रति जन्म मे ॥
विशिष्य मे देवि! कलौ युगे गुरोर्जनिर्भवित्री खलु सत्कुले रमे ।
त्रिदण्डकाषायपटोर्ध्वपुण्ड्रभाक् भविष्यतो सा हि भुजिष्य भूयसी ॥
सर्वोपायदरिद्राणां चेतनानां वरानने ।
ममाभिमानात्सर्वेषां मुक्तिर्गुरुशरीरिण ॥" इति ।

स च अवतारः श्रीमद्रामानुजमुनिरेवेति महतां आचार्याणां निर्वाहः ।

"अर्वाञ्चो यत्पदसरसिजद्वन्द्वमाश्रित्य पूर्वे मूर्ध्ना यस्यान्वयमुपगता देशिका मुक्तिमापुः" इति,

"कर्म ज्ञानं च भक्तिः प्रपदनमिति च प्राप्यसिद्ध्यर्थमेतान्
आलोच्यालोच्य हेतून् पुनरिह सुतरां दोषदृष्टिं विधाय ।
कर्तुं शक्ता न पूर्वे यतिवरचरणद्वन्द्वमूर्धाभियुक्ताः
तत्कारुण्याभिमानात् तदनु च गुरवो मुक्तिमाप्ता महान्तः ॥"

इति च अभिवर्णितरीत्या एतेषां यतिसार्वभौमानां सम्बन्धादेव सर्वेषामपि मुक्तिः करस्थिता, तिष्ठति, स्थास्यति इति च सुस्फुटमवगम्यते ।

विगमयन्तु परमाचार्याः । अपि च चरमाचार्याः, श्रीमद्रम्यजामातृमुनयश्च-

“ उ[illegible] पञ्च[illegible]विशीर्णलक्ष्यथा ते
 श्लाघ्यलक्ष्मणमुने श्रीवत्स [illegible]विशीर्णम् ।
 श्रुत्वा वचं तद्गुण[illegible]वलिं
 नित्य प्रसीद भगवन् ! मयि रङ्गनाथ ! ॥ ” इति ।

“ कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य शरणं भगवत्क्षमैव ।
 सा च त्वयैव कमलारमणेऽर्थिता यत्
 क्षेमः स एव हि यतीन्द्र ! भवच्छ्रितानाम् ॥ ” इति च

न्यासतिलक — यतिराजविंशति गतश्लोकाभ्याम् ।

“ एतौपामुल्लोकमहनीयदिव्यवैभवानामवतरणेन (१) निरस्ता भीतिः तपस्विन्याः श्रुतेः अल्पश्रुतविनिश्चयकुर्मतिमन्यितविकल्पितप्रतारणावागुरातः, (२) नष्टश्च कलियुगो दुष्टशिखामणिः, (३) अपगतश्च दुस्तरो नारः सर्वसहायाः, (४) परितुष्टाश्च प्राचार्याः पराङ्कुशादयः प्रपन्नजनजीवातवः, (५) परमानन्दनिर्भराश्च सञ्जाता निखिलदिव्यदेशनिवासिनः श्रीरङ्गनाथाद्याः श्रियःपत्युर्मूर्तिभेदाः ” इति श्रीभगवद्रामानुजमुनिचरणानां अवतारवैभवमभिवर्णयन्ति श्रीमद्रम्यजामातृमुनयः श्रीमति आर्तिप्रबन्धे—

१. “ शाङ्कर – बार्कर – यादव – बाट्ट – प्रभाकरर् तङ्गळ् मतम् ,
 शाय्वुर वादियर् मायगुवरेन्रु चतुमरैवाऴ्न्दिडु नाळ् ,
२. वेङ्कलि यिङ्गिनि वीरु नमक्किलै येन्रु मिकत्तळर् नाळ् ,
३. मेदिनि नम् शुमै याक्मेन तुयर् विट्टु विळङ्गिय नाळ् ,
४. मक्कैयराळि परांकुशमुन्नवर् वाऴ्वु मुळैत्तिडु नाळ् ,
५ मन्निय तेन्नरङ्गापुरि मामलै मत्तु मुवन्दिडु नाळ् ,
 शेङ्कयल् वाविकळ् शूऴ् वयल् नाळुं शिरन्द पेरुम्बूदूर् ,
 शीमानिळैयाऴ्वार् वन्दरुळिय नाळ् तिरुवादिरै नाळे ” इति ।

---

## श्रीमद्रामानुज नामधेयवैभवम्

न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी ।
कामवस्थां प्रपद्यन्ते जन्तवो हन्त मादृशः ॥ इति ।

तेनासमभङ्गुरविभूतेः परमपवित्रस्य "नारायण" नामधेयवत् मन्त्ररत्नायमानस्य श्रीनामधेयस्य वैभवमनवधिकमनुसन्धीयते प्राचीनैराचार्यचरणैः ।

श्रीमल्लोकाचार्यसगोत्रैः श्रीमद्भिः अनन्तार्यैः अनुगृह्यतेऽत्र चतुःश्लोकी : —

"गुरुः 'रा' र्थो, 'आ' र्थो हरिरनघजीवेन सहितः
'नु' कारार्थो हेतुः सह घटकभावेन 'ज' इति ।
भुवि प्रादुर्भूतं वदति स हि रामानुज इति
प्रसिद्धो नः पायात् प्रबलतरसंसारभयतः ॥

विपक्षप्रध्वंसात् सकलजगदुज्जीवनगुणात्
फणीन्द्रत्वात्, रामान्वितय मनुजत्वाच्च जननात् ।
"सपापानां कार्यं करुण"मिति निर्धारणगुणात्
श्रियं चाप्यार्येन्द्राद्वदति स हि रामानुज इति ॥

परब्रह्म प्रोक्तं प्रथितमिह रामेति तदनु
प्रविष्टो जातो यस्तदनुज इतीदं वदति वै ।
तथार्यात्मानं चेत्यखिलविधया यद्गुणगणं
प्रवक्ति श्रीरामानुजपदमसौ नस्सुखयतु ॥

सारो मूलमनो "र्गुरोश्चरणता" "सा यतीन्द्रे स्फुटा ।"
तन्निष्ठा वरयोगिनि स्फुरति सा लभ्या तदङ्घ्र्यन्वयात् ।
स्वाचार्येण तदन्वयोऽस्ति स गुरुः श्रेयसां साधनम् ।
ज्ञात्वेति स्थितिमान् यतीन्द्रकृपया सिद्धिं परां विन्दति ॥" इति,

"रामानुजाय मुनये नम उक्तिमात्रं
कामातुरोऽपि कुमतिः कलयन्नभीक्ष्णम् ।
यामामनन्ति यमिनां भगवज्जनानां
तामेव विन्दति गतिं तमसः परस्तात् ॥

रामानुजेति यदिदं विदितं जगत्यां
नामापि न श्रुतिसमीपमुपैति येषाम् ।
मा मा मदीय इति साङ्गरुपेक्षितास्ते
कामानुविद्धमनसो निपतन्त्यधोऽधः ॥

नासानुजैर्य नवकालिङ्गं यतीन्द्रं
 मोक्षाधिरोहति पदं सकलोऽपि लोकः ।
रामानुजो यतिपतिर्यदि नाविरासीत्
 को वा दृशः प्रभविता भवमुत्तरीतुम् ॥ ”

इत्यादि रामानुजाष्टकेऽपि एतन्नामप्रभावः समाम्नायते ।

श्रीमतो नामधेयस्यास्य ---

“ रामस्य अनुजः, रामः अनुजः यस्य सः, रामायाः अनुजः, रामा अनुजा यस्य सः, ” इत्यादयो नैकविधा व्युत्पत्तयः पत्यपादिगत प्राक्तनैराचार्यैः, एतत्कल्याणगुण-चरित्र–विग्रह–विभूत्यादीनां परिकल्पनेनेति, अतिरोहितोऽयं विषयो विद्वद्वरेण्यानाम् ।

(१) बाल्यात्प्रभृति सुस्निग्धाः, भगवत्कैङ्कर्यनिर्वहणैकनिरताः, “ श्रीमल्लक्षण-मुनयः ” इति सर्वत्र सर्वतोमुखं प्रथमानाः, नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदि-तराणि तृणाय मन्वानाः, श्रीमद्दशरथात्मजानुजसौमित्रिरूपा एते भवितुमर्हन्तीति, आद्या व्युत्पत्तिः सूपपन्ना भवति ।

अथवा, एते आचार्यसार्वभौमाः, कलिकोलाहलप्रशमनाय, श्रीकूरनाथ — कुरु-केश — दाशरथि — गोविन्दार्यादिमहाभक्तजनसमुज्जीवनाय, अनादिनिधनवेदधर्मसंस्थाप-नाय च सद्भिः कारागृहतया भाव्यमाने प्रकृतिमण्डलेऽस्मिन् कृतावतरणाः, जगतां मातापितृभ्यां श्री–श्रीवराभ्यां परिपोष्यमाणे अष्टमे गुरुपरम्परागर्भे सञ्जाताः, श्रीभूत-पुरी–काञ्चीनगरी – श्रीरङ्गनगररूपस्थलत्रितयं, स्वप्रादुर्भाव — समभिवृद्धि–नित्यावास-स्थानतया स्वीकृतवन्तः, स्वचरणकमलसमाश्रयणपराणां कामक्रोध-पुण्यपाप-सुखदुःखादि-रूपद्वन्द्वविमोचनमनुगृह्णन्तः, [1]शमितोदयशङ्करादिगर्वाः, स्वबलादुद्धृतयादवप्रकाशाः,

1. “ शमितोदयशङ्करादिगर्वः स्वबलादुद्धृतयादवप्रकाशः ।
 अवरोपितवान् श्रुतेरपार्थान् ननु रामावरजस्स एव भूयः ॥ ”

इति यतिराजसप्तति श्लोकः ।

“ विविधमुनिगणोपजीव्यतीर्थो विगमितसर्पगणा परेण पुंसा ।
 अभजत यमुना विशुद्धिमग्र्यां शमितबहिर्मतसंप्लवा त्रयीव ॥ ”

इति यादवाभ्युदय ( ४–१२८ ) श्लोकः ।

"उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् ।
शरणागतसार्थवाहमीडे शिखया शेखरिणं पतिं यतीनाम् ॥"

इत्यादि च अभियुक्तैरभिवर्ण्यते । एतत्सर्वमिदानीमपि, तेषामाचार्यसार्वभौमानाम् अर्चादिव्यमङ्गलविग्रहसंसेवनेनापि व्यक्तीभविष्यति ।

तदित्थमभिवर्ण्यते :—

पुण्ड्रैर्द्वादशभिर्युतं विलसितं दण्डैस्त्रिभिर्मण्डितं
काषायेण शिखोपवीतरुचिरं दोर्मूलचक्राम्बुजम् ।
आसीनं जलजासने च तुलसीपद्माक्षमालाञ्चितं
युक्तं चाञ्जलिमुद्रया रविनिभं श्रीभाष्यकारं भजे ॥ इति ।

"करुणाकाकुत्स्थ" इति अभिवर्ण्यमानात् श्रीरामचन्द्रादपि अतिशयितकारुण्यपौष्करसपरिपूर्णा एते कृपामात्रप्रसन्नाचार्याः, अनुवृत्तिप्रसन्नपूर्वाचार्यानपि अतिशेरते वात्सल्यकारुण्यौदार्यसौशील्यादिभिरिति सुस्फुटोऽयं विषयः, मन्त्रोपदेशप्रक्रियादिषु समयेषु सर्वेषाम् ।

३. अनन्यार्हत्व—अनन्यशरण्यत्व—अनन्यभोग्यत्वरूप—आकारत्रयसंपन्नायाः, [1]मृदुमधुरमङ्गलगुणविग्रहायाः, मङ्गलदेवतायाः, देवदेवदिव्यमहिष्याः, निखिलजगदीशानायाः, तत्सदृशकल्याणगुणगुम्भिता एते आचार्याः, अनुजा भवितुमर्हन्तीति, तृतीयाऽपि व्युत्पत्तिरुपपद्यते ।

४. करुणया कमला, साक्षात्क्षमा, श्रीविष्णुचित्तकुलनन्दनकल्पवल्ली गोदा आमुक्तमाल्यदा देवी, दिव्यसौन्दर्यसौकुमार्यलावण्यगाम्भीर्यादिपरिपूर्णा, एतेषामाचार्याणां [2]स्वसेति, तुरीयाऽपि व्युत्पत्तिः सुष्ठूपपद्यते नितराम् ।

---

1. अङ्गं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गुम्भतः
क्षीराब्धेः किमृजीषतामुपगता मन्ये महार्घास्ततः ।
इन्दुः कल्पलता सुधा मधुमुखा इत्याविलां वर्णनां
श्रीरङ्गेश्वरि ! शान्तकृत्रिमकथं दिव्यं वपुर्नार्हति ॥

इति श्रीगुणरत्नकोशश्लोकोऽत्र अनुसन्धेयः ।

2. "பெரும்பூதூர் மாமுனிக்குப் பின்னானாள் வாழியே"
इति श्रीसूक्तिः, तदुपष्टम्भकमैतिह्यमपि अत्रानुसन्धेयम् ।

## विशिष्टाद्वैतदर्शनस्य “रामानुजदर्शन” मिति प्रथाया औचित्यम्

एवं वाचामगोचरमहाप्रभावविशेषभासुराणाम् एतेषामाचार्यसार्वभौमानां नाम्नैव खलु इदानीं प्रथते चास्माकमिदमनादिसिद्धं हृद्यमनवद्यं श्रीमद्विशिष्टाद्वैतमौपनिषदं दर्शनम्- “श्रीमद्रामानुजदर्शनम्” इति । श्रीमद्भिर्भगवद्भिरेभिः संयमिसार्वभौमैः अतिविशिष्ट-क्रमेण सर्वतोमुखं साङ्गोपाङ्गं सपरिकरबन्धं चेदं दर्शनं तथा प्रवर्तितम्, यथा एतदुपज्ञ-मेवेदं दर्शनमिति सर्वेषां निर्व्यूढं ज्ञानं समुदियादिति । अयमर्थः सम्यगुपपादि-तः सर्वज्ञैः परमकारुणिकैः श्रीमद्वरवरमुनीन्द्रैः उपदेशरत्नमालाख्यायाम् —

[1] अस्योचितां परमवैदिकदर्शनस्य
रामानुजार्यरचितोपकृतिं कृतज्ञः ।
रङ्गेश्वरः प्रथयितुं रचयांचकार
“रामानुजस्य मत” मित्यभिधानमस्य ॥ इति ।

सर्वतन्त्रस्वतन्त्रैः कविकथककण्ठीरवैः श्रीमद्भिर्वेदान्ताचार्यचरणैरपि यतिराजसप्ततिना-मस्यवर्णि प्रश्नप्रतिवचनाभ्यामेवम् —

“यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किम् ?
ततः प्रागेवाभूद्यद तदपि किं वर्णनिकथे ।
निशाम्यन्तां यद्वा निजमतितिरस्कारविगमात्
निरातङ्काः टङ्क-द्रमिड-गुहदेवप्रभृतयः ॥” इति,

निराबाधा बोधायनभणितिनिष्यन्दसुभगा
विशुद्धोपन्याससङ्गतिभिदुरशारीरकनयाः ।
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखैः
अनिद्राणप्रज्ञारसधमनि वेधाय सुधियाम् ॥ इति च ।

त एवेमे मीमांसापादुकायाम्— “विश्चित् केनापि दृष्टम्” इत्यग्रे श्लोके “प्रत्ये-तव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा” इति चतुर्थचरणेन सम्यगेवमभिमन्य-

---

[1] எம்பெருமானார் தரிசனமென்றே இதற்கு
நம்பெருமாள் பேரிட்டு நாட்டி வைத்தார், அம்புவியோர்
இந்தத் தரிசனத்தை எம்பெருமானார் வளர்த்த
அந்தச் செயலறிகைக்கா.

இति द्राविडपाशुरस्य संस्कृतश्लोकोऽयम् ।

आग्रहयांचक्रुः ; यादवाभ्युदयेऽपि — " तत्वं नूतनं सर्वमाप्त्यां न पुनातनम् । न दोषायैतदुभयं न गुणाय च कल्पते " इत्यभिदधिरे ।

एवं श्रीमतां यतिसार्वभौमानां दिव्यश्रीसूक्तिगुणप्रभावमपि, सम्प्रदाये भाविनिर्वित्तं मतावष्टम्भं सोत्साहसम्भ्रमं पाण्डित्यं च समभिवर्णयन्ति कविकथकवर्येश्वराः –

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥

कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलकुभाषितैः गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैः तदनुसारिजल्पैरपि
प्रतारितमिदं जगत् प्रगुणितं यतीन्द्रोक्तिभिः ॥

इदं प्रथमसम्भवत्कुमतिजालकल्कषाः
मृषामतविषानलज्वलितजीवजीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तयः
चिरन्तनसरस्वती चिकुरबन्धसैरन्ध्रिकाः ॥ इत्यादिना ।

### श्रीमद्रामानुजाचार्याणां अभिमान एव सर्वेषाम् उज्जीवनहेतुः

" आसन्नत्वात् दयालुत्वात् ज्ञानित्वात् गुरुभावतः ।
चरमस्यावतारस्य गुरुरूपस्य मे सदा ॥
प्राप्यत्व - प्रापकत्वे द्वे स्वनिष्ठे सगुणौ मतौ ।
तस्मान्मत्पादयुगलं शरण्यं मोक्षकामिनाम् ॥ "

इति पाञ्चरात्रे भगवता स्वयमेवोक्तत्वात्, आचार्यत्वपराकाष्ठाधिष्ठितानां स्वानुवृत्ति-प्रसन्न- -सर्वेश्वराद्याचार्यापेक्षया अतिविशिष्टानां कृपामात्रप्रसन्नाचार्याणां श्रीभगवद्रामानुज-मुनिपुङ्गवानां चरणारविन्दसम्बन्ध एव संसारोत्तरणोपायो भवतीति नापह्नवीणम् ।

" सोमासियाण्डान् " नामकगुरुवरैः चरमोपायविवरणनिबन्धे समर्थांकृत-देवम् —

विशिष्टाद्वैतदर्शनस्य "रामानुजदर्शन" मिति प्रथायाः निरुक्तिः

एवं वाचामगोचरमहाप्रभावविशेषभासुराणाम् एतेषामाचार्यसार्वभौमानां नाम्नैव खलु इदानीं प्रथते चास्माकमिदमनादिसिद्धं ह्यमनवद्यं श्रीमद्विशिष्टाद्वैतमौपनिषदं दर्शनम्– "श्रीमद्रामानुजदर्शनम्" इति । श्रीमद्भिर्भगवद्भिरेभिः संयमिसार्वभौमैः अतिविशिष्ट-क्रमेण सर्वतोमुखं साङ्गोपाङ्गं सपरिकरबन्धं चेदं दर्शनं तथा प्रवर्धितम्, यथा एतदुपज्ञ-मेवेदं दर्शनमिति सर्वेषां निर्व्यूढं भानं समुद्भियान्नाम । अयमर्थः सम्यगुपपादि सर्वज्ञैः परमकारुणिकैः श्रीमद्वरवरमुनीन्द्रैः उपदेशरत्नमालायाम् —

* अस्योचितां परमवैदिकदर्शनस्य<br>
रामानुजार्यरचितोपकृतिं कृतज्ञः ।<br>
रङ्गेश्वरः प्रथयितुं रचयांचकार<br>
"रामानुजस्य मत" मित्यभिधानमस्य ॥ इति ।

सर्वतन्त्रस्वतन्त्रैः कविकथककण्ठीरवैः श्रीमद्भिर्वेदान्ताचार्यचरणैरपि यतिराजसप्तत्यामिद-मभ्यवर्णि प्रश्नप्रतिवचनाभ्यामेवम् —

"यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किम् ?<br>
ततः प्रागेवान्यद्यदि तदपि किं वर्णनिकषे ।<br>
निशाम्यन्तां यद्वा निजमतितिरस्कारविगमात्<br>
निरातङ्काः टङ्क – द्रमिड – गुहदेवप्रभृतयः ॥" इति,

निराबाधा बोधायनभणितिनिष्यन्दसुभगा<br>
विशुद्धोपन्याससव्यतिभिदुरशारीरकनयाः ।<br>
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजगुणैः<br>
अनिद्राणप्रज्ञारसधमनि वेधाय सुधियाम् ॥ इति च ।

त एवैमे मीमांसापादुकायाम्— "किञ्चित् केनापि दृष्टम्" इत्यष्टमे श्लोके "प्रत्ये-तव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा" इति चतुर्थचरणेन सर्वेषामभिमतम्

* எம்பெருமானார் தரிசனம் என்றே இதற்கு<br>
நம்பெருமாள் பேரிட்டு நாட்டிவைத்தார், அம்புவியோர்<br>
இந்தத் தரிசனத்தை எம்பெருமானார் வளர்த்த<br>
அந்தச் செயலறிகைக்கா.

आम्रेडयांचक्रुः ; यद्वाग्गुरवोऽपि — "न ह्यात्वे नूतनं सर्वमायत्यां न पुरातनम् । न दोषायैतदुभयं न गुणाय च कल्पते" इत्यभिदधिरे ।

एवं श्रीमतां यतिसार्वभौमानां दिव्यश्रीसूक्तिमुक्ताप्रबन्धमपि, सप्रपञ्चं सन्निविष्टं सेतरावगतं सोत्साहसम्मोदं पौढगाम्भीर्यं च समभिवर्णयन्ति कविकथककण्ठीरवाः —

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥

कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलकुभाषितैः गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैः तदनुसारिजल्पैरपि
प्रतारितमिदं जगत् प्रगुणितं यतीन्द्रोक्तिभिः ॥

इदंप्रथमसम्भवत्कुमतिजालकल्ङ्कपाः
मृषामतविषानलज्वलितजीवजीवातवः ।
क्षपन्त्यमृदमक्षरं यतिपुरन्दरस्योक्तयः
चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ इत्यादिना ।

श्रीमद्रामानुजाचार्याणां अभिमान एव सर्वेषाम् उज्जीवनहेतुः

"आसन्नत्वात् दयालुत्वात् ज्ञानित्वात् गुरुभावतः ।
चरमस्यावतारस्य गुरुरूपस्य मे सदा ॥
प्राप्यत्व - प्रापकत्वे द्वे स्वनिष्ठे सगुणौ मतौ ।
तस्मात्मत्पादयुगलं शरण्यं मोक्षकाङ्क्षिणाम् ॥"

इति पाञ्चरात्रे भगवता स्वयमेवोक्तत्वात्, आचार्यत्वपराकाष्ठाधिष्ठितानां स्वानुवृत्तिप्रसन्न–सर्वेश्वराद्याचार्यापेक्षया अतिविशिष्टानां कृपामात्रप्रसन्नाचार्याणां श्रीभगवद्रामानुजमुनिपुङ्गवानां चरणारविन्दसम्बन्ध एव संसारोत्तरणोपायो भवतीति नापह्नवनीयम् ।

"मामाश्रियाण्डान्" नामकगुरुवर्यैः चरमोपायविवरणनिबन्धे समर्चिकृत

सेनाप —

"भगवत्प्रवृत्तिविरोधि—स्वप्रवृत्तिसामान्याया भक्तेः स्वातन्त्र्यरूपाहङ्कारजनकत्वात्, भगवन्तमुपेत्य तच्चरणारविन्दयुगलशरणागतेरपि निरङ्कुशैश्वर्यभगवत्त्वात् स्वातन्त्र्यस्मरणद्वारा भीतिहेतुत्वाच्च, तदुभयविषयभगवदवतारभूत—परमकारुणिक—रामानुजयोगि—चरणारविन्दशरणागतिरेव सर्वोज्जीवनाय प्रवर्तते इति समर्थितम्" इति ।

श्रीमद्वादिकेसरिसौम्यजामातृमुनिचरणैरपि स्वकीयचरमगुरुचरितग्रन्थे--

पारतन्त्र्यं स्वरूपं हि सर्वजीवात्मनामपि ।
तद्विरुद्धा हि भक्तिस्तु जीवयत्नाभिलापिणी ॥

त्यागो निवृत्तिसाध्योऽयं निर्मलानन्तशायिनः ।
स्वातन्त्र्यस्मृतिमात्रेण भीतिहेतुर्भविष्यति ॥

तस्माद्भक्तिं प्रपत्तिं च विहाय विमलाशयाः ।
अस्मदीया महात्मानः सदार्यचरणाश्रयाः ॥

तत्कृतेनाभिमानेन निस्तरन्ति भवार्णवम् ।
लघूपायेन लब्धव्ये फले महति देहिनाम् ।
गुरूपायद्वयात् किं वा कर्तव्यं स्यान्मुमुक्षुभिः ॥ इति ।

प्रामाणिकाग्रेसरैः श्रीमद्भिः पराशरभट्टार्यैरपि स्वविरचितगुरुप्रभावदीपिकायाम् —

"परमकारुणिकस्य परमगुरोः भगवतः श्रीमन्नारायणस्य पुण्डरीकदलामलायतेक्षणमुखकमलविकासहेतुभूतं हि भगवद्रामानुजचरणारविन्दशरणवरणम् । तस्मात्तदेव अस्माकमुज्जीवनाय अलमिति अस्मत्तातपादा मेनिरे"

इति च अनुगृहीतम् ।

"लक्ष्मणार्यगुरुपादसेविनां रक्षणाय खलु तत्कृपा परम् ।
यत्क्षणेन निजमुख्यमानिनां व्युदिक्षणोति फलतीति तत्त्वतः ॥"

इति च अभिमुक्ताग्रेसराणां प्राचामाचार्याणां मुक्तकं किञ्चित्समाविरस्ति ।
श्रीमद्भिः "नैनाराच्चान्पिळ्ळै" स्वामिभिरपि —

स्वव्यापारेण साध्या भजनगतिरियं स्वानुरूपस्वहानात्
त्याज्या पूज्यैः प्रपन्नैः शरणवरणिता देशिकैर्नाऽप्युपात्ता ।

किं त्वाचार्याभिमानात् परमपदमहो ! लभ्यते नान्यतो नः
तस्माद्रामानुजार्यांघ्रियुगमनुपमं साधनं आश्रयामः ॥" इति,

मुक्तकण्ठमन्वग्राहि ।

श्रीमन्तः 'वेदान्ती' ति विख्याताः "नञ्जीयर्" स्वामिनोऽप्येवमन्वगृह्णन्--

"यत्श्रीलक्ष्मणयोगिवर्यचरणद्वन्द्वाश्रयी नाभवत्
तस्याप्यन्तदयादिसद्गुणनिधिर्नारायणः श्रीपतिः ।
दातुं मुक्तिमनादरो भवबृहद्वाराशये सन्ततं
निक्षिप्यैनं कदापि नो गणयति प्राक्सद्दुष्कर्मवैरिणः ॥" इति ।

"श्रीमद्रामानुजपदच्छाये" ति प्रथिताः श्रीमन्तः गोविन्दभट्टपादाः ('एम्बार्' स्वामिनः) एवमनुजगृहुरुदारवाचः —

"श्रीशश्रीमत्पदाब्जे शरणमिति धिया तत्र भक्तित्वराणाम्
श्रीमद्रामानुजार्यप्रणतिमभजतां गूढचित्ताशयानाम् ।
कारुण्यक्षान्तिसिन्धुः स्वपदनिवसतिं नेश्वरो दातुमिच्छेत्
इत्येवं चिन्तकानामपि परमपदं दातुकामः स जातु ॥" इति,

"श्रीमन्नारायणचरणारविन्दशरणागतिरेव उज्जीवनाय भवतीति बुद्ध्या, भगवन्तं परमकारुणिकं परमोदारं अपारकारुण्यादिकल्याणगुणाकारं अपरिमितवात्सल्य-सौशील्यसागरं अशरण्याखिलजनशरण्यं अनवरतमाश्रयणीयचरणकमलयुगलं अभिमतानु-रूप — निरवधिकानन्दसन्दोहजनक — नित्यसूरिपरिषदन्तर्भावमहाफलप्रसादकं अस्म-दुसारकं अतिरमणीयविमलतरलावण्याकरदिव्यमङ्गलविग्रहं अतिशीतलविमलगम्भीर-जलाशयप्रभव-- मिहिरतरुणकिरणनिकरविकसितविराजमान-- कमलदलायत-- दिव्यनयन-युगलं स्ववशगमितचिदचिदीश्वरतत्त्वत्रयसूचकदण्डत्रयरूपमण्डनमण्डितं, अस्मन्मातरम्, अस्मत्पितरम्, अमृतलहरीवदनुकूल--नव्यदिव्यकोमलविमलमधुरायमाणनिजसूक्तिकलापै-राश्रितान् अखिलजनान् आह्लादयन्तम्, श्रीमन्तम्, आर्यजनाभिवन्द्यम्, अस्मत्कुल-नाथम्, असदसाधारणशेषिणम्, अस्मदादिरक्ष्यवर्गसर्वप्रकाररक्षणैकदीक्षागुरुं, श्रीरामा-नुजाचार्यम् अनादृत्य, 'परमकारुणिको भगवानेव स्वचरणकमलसमाश्रितानामस्माकं स्वप्राप्तिरूपफलं प्रयच्छति' इति स्वमतेन विचिन्त्य वर्तमानानाम्, तत्त्वज्ञानलवलेशदेशा-तिगानां दुरभिमानसहकृतपरश्रामकवृत्तानां रूपवेषधारिणां "वयमेव श्रीवैष्णवाः"

ही । स्वगतेन आत्मानं वञ्चयमानानां चेतनानाम्, आचार्यरूपधर्मात्मज-सौशील्यैकनिधिरपि भगवान् पुरुषोत्तमः श्रीमन्नारायणः, अस्मत्कुलस्वामिनो भगवतः श्रीमद्रामानुजगुरोः चरणयुगलसम्बन्धराहित्यं हृदि निधाय, कदाचिदपि स्वधामनिःश्रेयस-मोक्षफलमकुर्वाणः, यावच्छास्त्रमपि—अवतारविस्मयो "विपाण्यजकम्" इति वदन् निदिध्य, कदाचिदपि, तान् हृदा न गणयन्, रामानुजगुरुकृपाभिमानान्तर्भूत—सात्त्विकजनेषु नित्यदत्तदृष्टिः, तेभ्यः सर्वस्वदानकरणेऽपि, 'किमपि न दत्तमेव' इत्यद्यापि अपरितुष्टः, रामानुजगुरुचरणयुगलप्रावण्यैकरत्नमेमप्रदानैकनिष्णातो वर्तते" इति च सुविपुल-निपुणम् ।

किञ्च, "श्रीमद्रामानुजमुनिचरणनिमलनलिनमङ्गलकटाक्षनिक्षेपैकप्रवणानां चरण-पर्वाधिकारिणां श्रीवैष्णवानां वक्तव्या परमा भूमिस्तु – श्रीमद्रामानुजमुनिचरणचरण-कमलचञ्चरीकैः आनन्दनिर्भरैः श्रीवैष्णवैः समलङ्कृतो दिव्यदेश एव" इति च समुपादिशन् श्रीमन्तः नायनाराचार्यनिर्हेतुस्वामिनः । तद्यथा —

"अस्मद्देशिक—भगवद्रामानुजयोगि—चरणयुगलमाश्रितानां तदभिमानैकनिष्ठानां तद्गुणसन्दोहानुभवानन्द — अमृतसागरतरङ्गावलीकरसम्बन्धशीतलहृदयानां तदीयदिव्य-नामोच्चारणजनित—हर्षप्रकर्षवशात् ससंभ्रमनर्तनं कुर्वतां सात्त्विकाग्रसराणां शमदमादि-गुणोपेतानां तत्त्ववित्तमानां अस्मत्स्वामिनां आन्ध्रपूर्ण—गोविन्दार्य- तुल्यस्वभावानां उपा-देयतमदिव्यज्ञानभक्तिवैराग्यनिष्ठानां श्रीवैष्णवानां आवासस्थानमेव अस्मदादिचरमाधि-कारिणामपि आवासभूमिः" इति ।

अत एव निखिला अप्याचार्याः श्रीमद्यतिराजचरणनलिनराजहंसायितमानसाः कृतार्थाः सञ्जाताः । श्रीमद्वेदान्ताचार्याणां श्रीमति यतिराजराजे अत्युत्कटं प्रावण्यं समुल्लसितमासीदिति तदीयप्रौढगम्भीरयतिराजसप्तत्यादिश्रीसूक्तिभिरेव सुस्फुटं विजायते । श्रीमन्तो रम्यजामातृमुनीन्द्रास्तु "यतीन्द्रप्रवणाः" इति अनितरसाधारणीं प्रथां प्रपन्नाः, श्रीमत्सु यतिराजविंशति—आर्तिप्रबन्धादिषु दिव्यनिबन्धेषु अतिमात्रं तत्प्रावण्यातिरेकं प्राचीकशन् । अतः, कृपामात्रप्रसन्नाचार्यसार्वभौमानां श्रीमद्यतिराजराजानां निरवग्रहोऽनु-ग्रह एव सुकरः सकलजनसन्तरणपरमोपाय इति सिद्धम् ।

तेषां च चरमं नियमनं परमहिततमम् प्रस्फुरत्येवम् :—

कासाराद्विमहद्भिस्सूरिकृतिमत्सोपानपङ्क्तीं कृप-
श्रीमन्त्रोभयपार्श्वदण्डघटितां श्रीभाष्यकीर्त्यध्वराम् ।
निश्रेणिं निर्मितो जनस्य परव्योमस्थलीप्रापिकां
स्वाचार्यनिरूपितार्थनिरताः शास्त्राधिरोहन्तु सदा ॥

पठित्वा भाष्यं तत्प्रवचनसमर्थो शठरिपोः
गिरि श्रद्धा वासः प्रभुपरिचितस्थाननिवहे ।
प्रभोः कैङ्कर्यं वा प्रपदनमनोरर्थमननं
प्रपन्नानां वा मे भवतु परिचर्यापरिचयः ॥

कुटीं कृत्वा तस्मिन् यदुगिरितटे निवसतिः
षडर्थाः श्रीशस्य प्रपदनविधौ साधकतमाः ॥ इति ।

## वेदार्थसंग्रहस्य प्रणयनप्रकारः

भगवन्तः कृपामात्रप्रसन्नाचार्याश्च इमे संयमिसार्वभौमाः — अनाद्यविद्यासंवलितशेमुषीकान् अज्ञान — अन्यथाज्ञान — विपरीतज्ञान — संशयाद्यवरुद्धबुद्धिप्रबोधान् सन्ततमन्तन्यमान—परमपुरुषदिव्यनियमनरूपशास्त्रविहितधर्मानुष्ठानातिक्रमणजनित-अनन्तक्लेशभाजनसांसारिकमायाचक्रे बम्भ्रम्यमाणान् , दवदहनदन्दह्यमानदारुदरविघूर्णमानानिव घुणसंघातान् , महाप्रवाहमध्यगतान् प्रतिकूलेनैव वातेन नीयमानान् सांयात्रिकगणान् , कुणितकपिकपोलान्तर्निपतनविदीर्यमाणपक्वोदुम्बरफलमध्यगतानिव मशकसमूहान् , मुग्धमूढांस्तपस्विनो जन्तूनवलोक्य संजातनिर्वेदाः, दयार्द्रहृदयाः, तेषामेषामेतत्संसृतिबन्धनिवारणे किमप्यन्यन्निदानमपरिकल्पयन्तः, कल्पयन्तश्च पुरुषोत्तमप्रसादमेकमेव परमोपायम् , तस्य च सम्पादने भक्तिप्रपत्ती परं हेतू भवत इति निश्चिन्वानाः, तयोस्स्वरूपं, तदनुष्ठानोपयिकं जीवपरयाथात्म्यादिकं च अवबोधयितुं, अवगमयितुं च निखिलनिरवद्यवेदशास्त्रपुराणादीनां हृद्यं परमं हृदयरहस्यम्, अपेक्षितनिखिलार्थसार्थप्रबोधकं सकलवेदवेदान्तशास्त्रसर्वस्वमूलं वेदार्थसंग्रहमिमं निबन्धवरं व्यरचयन् ।

# वेदार्थसंग्रहस्य प्रथमतः स्वीकारणे कारणम्

अनादिनिधनाविच्छिन्नसम्प्रदायनित्यनिर्दुष्टवेदवेदान्तेषु, तदुपबृंहणीभूत-स्मृति-पुराणेतिहाससूत्रशास्त्रादिषु च प्रतिबोध्यमानः, विमलानूचानसत्सम्प्रदायपरम्पराप्राप्तः, अनादिसिद्धश्च अयं श्रीवैष्णवसम्प्रदायः—प्रथमतः प्रथमाचार्येण श्रीमन्नारायणेन उपदिष्टः, तदनु परमाचार्यैः श्रीभगवद्बादरायण—बोधायन-पराशरादिभिर्महर्षिभिः परं परिपोषितः, भगवन्निरवग्रहानुग्रहसम्पत्समासादित-विशिष्टविमलविज्ञान-परभक्ति परज्ञान-परमभक्त्यादिपरिपाकैः, परमपुरुषदिव्यचरणारविन्दयुगलविन्यस्तात्मात्मीयैः, पुरुषोत्तमदिव्यचरणारविन्दद्वन्द्वैकनिबद्ध — अकृत्रिमापरिमेयदिव्यव्यामोहस्नेह- प्रणय प्रेमानुबन्धैः प्रपन्नजनकूटस्थैः दिव्यसूरिपरिषत्प्रधानैः श्रीमद्भिः शठगोपदिव्यसूरिभिः सुगुल्मं सुव्यक्तं सर्वप्राणिहृदयंगमं सर्वजनसाधारणमभिरमणीयं च अभिवर्णितः, श्रीमन्मधुजिदङ्घ्रिसरोज-तत्त्वज्ञानानुरागमहिमातिशयान्तसीमभिः, अनुत्तमाद्भुताक्लिष्टज्ञानवैराग्यराशिभिः, अगाध-भगवद्भक्तिसिन्धुभिः, स्वहस्तबदरीकृतनैगमिकपरमतत्त्वैः, उभयवेदान्तामृतनिष्यन्दजन्म-मूलधरणीधरैः, श्रीमन्नाथयामुनादिभिः परमार्षिकल्पैराचार्यसार्वभौमैः करतलामलकीकृतः, सकलाचार्यस्वरूपैः श्रीमदनन्तावतारैः श्रीमन्नारायणदिव्यचरणारविन्दयुगलैकान्तिकात्यन्तिक—परभक्ति—परज्ञान—परमभक्तिपरीवाहमकरन्दनिपानमत्तमनोमधुपैः, दिव्यसूरि-परमर्षि — परमाचार्यदिव्यश्रीसूक्तिनिरन्तरानुसन्धानसमधिगतपरावरतत्त्वयाथात्म्यैः, सुनिशितप्रतिभाप्रभावसंकलित—सकलवेदवेदान्तशास्त्रादिपरमहृदयैः सर्वतन्त्रनिष्णातैः परमकारुणिकैः निखिललोकक्षेमंकरैः श्रीभगवद्रामानुजमुनिसार्वभौमैः — न केवलं, विलक्षणैः अधीतिबोधाचरणप्रचारणैर्विशिष्टकार्यक्रमैः, न केवलं च, देवायतन — राजास्थान — पण्डितपरिषत् — पामरगोष्ठीषु सुसम्पाद्य अतिविशिष्टं, अविचाल्य च परिवर्तनम्, उन्मूल्य रजस्तमसी, उद्दीप्य च उद्रिक्तसत्त्वप्रदीपम्, निष्कास्य च सुदूरमज्ञानान्धतमसम्, प्रज्वाल्य च विज्ञानघनञ्जयम्, विदन्दह्य पापवितताण्डवम्, अनुभाव्य सर्वत्र भगवद्भक्तिभानूदयम्, अभिवर्ष्य च सर्वतः श्रीकान्तस्य भगवतो दिव्यवात्सल्यपीयूषरसम्, पर्यरक्ष्यत निखिलप्राणिसमुदयसस्यजातम्, अपितु, समुपन्यस्य निरर्गलं वेदार्थसंग्रहमनर्घं—उपनिषत्प्रस्थानम्, विरचय्य विशिष्टप्रक्रियान् वेदान्तसार-श्रीभाष्य—वेदान्तदीपानमूल्यान् निबन्धान्—सूत्रप्रस्थानम्, अनुगृह्य च महार्घं सरलसुभगं महितगम्भीरं

गीताभाष्यं—गीताप्रस्थानम्, विज्ञाप्य च मृदुलमधुरं निखिललोकप्रियङ्करं वेदान्तकर्पूर-चामीकरकरण्डकं अतिमहार्घं परमरहस्यं गद्यत्रयं-परमरमणीयां प्रपदनपदवीम्, प्रणीय च परमपावनं परमोपादेयं परमैकान्तिनां भगवदाराधनक्रमं—प्रपन्नानुष्ठानसरणिं च संप्रकाश्य, निष्कण्टकीकृत्य निष्कलङ्कं निरुपमं परमसिद्धान्तघण्टापथम्, समपोह्य निखिलकुमतिमत-विततिमायायामिनीं, निखिलजगद्धितानुशासनप्रवृत्त—वेदशिरःसहस्रभानु—विज्ञानभानवः सर्वतः संप्रसारयां बभूविरे[1] ।

तेषु नवसु[2] ग्रन्थरत्नेषु वेदार्थसंग्रहोऽयम्—प्रस्थानत्रयप्रसिद्धानां सर्वेषां वेदान्त-

---

1. लक्ष्मीनाथाख्यसिन्धौ शठरिपुजलदः प्राप्य कारुण्यनीरम्
नाथाद्रावस्यषिञ्चत् तदनु रघुवराम्भोजचक्षुर्झराभ्याम् ।
गत्वाऽतो यामुनाख्यं सरितमथ यतीन्द्राख्यपद्माकरेन्द्रम्
सम्प्राप्य प्राणिसस्ये प्रवहति नितरां देशिकेन्द्रप्रमोघैः ॥

इति श्लोकोऽत्रानुसन्धेयः ।

2. विष्वक्चर्चीकृतभवनोत्सुको जनानाम्
श्रीगीताविवरण - भाष्य - दीप - सारान् ।
तद्गद्यत्रयविवरणमकृत प्रपन्ना-
नुष्ठानक्रममपि योगिराट् प्रबन्धान् ॥
................................ ।
इत्युक्त्वा निगमशिखरार्थसंग्रहाख्यम् ॥

(दिव्यसूरिचरिते)

श्रीभाष्यमित्थं कृपया लोकानुग्रहकारणात् ।
वेदान्तदीपं वेदान्तसारं वेदार्थसंग्रहम् ॥
गीताभाष्यं च योगीन्द्रः सुस्पष्टं शास्त्रसम्मतम् ।
विधाय लक्ष्मणाचार्यः सर्वलोकैकपूजितः ।
प्रथमं यामुनार्यस्य दुःखं महदपोहयत् ॥

(प्रपन्नामृतम्)

गीताभाष्यं भूयवेदान्तभाष्यं सारं दीपं किञ्च गद्यत्रयं च ।
वेदार्थानां सङ्ग्रहं नित्ययागं प्राहैतान् यस्तं यतीन्द्रं भजेऽहम् ॥

(गुरुपरम्पराग्रन्थे)

సాదరంబగు వేదాంత దీపంబు
వేదాన్తసారము వేద్యమై గట్టి

शास्त्रग्रन्थानां मूलभूतानामुपनिषदां सर्वसमन्वयव्याख्यानशेखर इति, श्रुतिवाक्येष्वपि भेद — अभेद — घटक — सगुण — निर्गुणवाक्यानां, एवमेव, श्रुति स्मृति — पुराण — इतिहासानां, परमर्षिभिः परमाचार्यैश्च आरचितानां सूत्रशास्त्रग्रन्थानां च सर्वेषां सामरस्यसम्पादकम्, समीचीनव्युत्पत्तिपरिपूरकवेदान्तशास्त्रमधिजिगमिषूणां छात्राणां सर्वेषाम् अत्यन्तोपकारकम्, अतिविशिष्टं च प्रकरणमिति, अस्य अखिलोपलोकशरण्यस्य अस्मत्कुलधनस्य अपारवात्सल्यैकजलधेः श्रीशेषशैलपतेः श्रीनिवासस्य स गुरुः, तस्मै शङ्खचक्रप्रदानेन

అరయించ దగ్గ యామునార్యస్వామి క్రమము
గరమొప్ప నీ బగుల గద్యత్రయంబు
దగుకౌస్తుభమ్ము గీతాభాష్యము

( परमयोगिविलासः )

పుడమి ప్రత్యక్షమై కుంభపురముగంగ
యతిపతింబర నానుదేవుని యాజ్ఞ వడసి
భాష్యమొనరింప దలచి.........
సరస వేదాంతసంగ్రహ సారదీపి
కాఖ్య దివ్యప్రబంధము లొనరియు
వానిం గూరేశు డాయమ్మ వ్రాసెననుచు

( आचार्यसूक्तिमुक्तावलिः )

1. श्रीमद्रामानुजमुनिसार्वभौमानां अन्तरङ्गप्रियशिष्यैः तदेकदैवतैः चरमपर्वनिष्ठागरिष्ठैः महाशयैः श्रीमदान्ध्रपूर्णैः प्रणीते श्रीरामानुजाष्टोत्तरशतनामस्तोत्रे श्रीमद्रामानुजाचार्याणां श्रीवेङ्कटाचलाधीश-शङ्खचक्रप्रदानादिकं चरित्रं, महिमा च सम्यगभिवर्ण्यते। यथाहि—

“ कान्तिमत्यात्मजः श्रीमान् लीलामानुषविग्रहः ।
सर्वशास्त्रार्थतत्त्वज्ञः सर्वज्ञः सज्जनप्रियः ॥
नारायणकृपापात्रं श्रीभूतपुरनायकः ।
काञ्चीपूर्णप्रियसखः प्रणतार्तिविनाशनः ॥
पुण्यसंकीर्तनः पुण्यो ब्रह्मराक्षसमोचकः ।
यादवापादितापार्थवृक्षच्छेदकुठारकः ॥
अमोघो लक्ष्मणमुनिः शारदाशोकनाशनः ।
निरन्तरजनाज्ञाननिर्मोचनविचक्षणः ॥
वेदान्तद्वयसारज्ञो वरदाम्बुप्रदायकः ।
पराभिप्रायतत्त्वज्ञो यामुनाङ्गुलिमोचकः ॥

देवराजकृपालब्ध – षड्वाक्यार्थमहोदधिः ।
पूर्णार्यलब्धसन्मन्त्रः शौरिपादाब्जषट्पदः ॥
त्रिदण्डधारी ब्रह्मज्ञो ब्रह्मध्यानपरायणः ।
रङ्गेशकैङ्कर्यरतो विभूतिद्वयनायकः ।
गोष्ठीपूर्णकृपालब्ध – मन्त्रराज – प्रकाशकः ।
वररङ्गानुकम्पात्त – द्राविडाम्नाय – पारगः ॥
मालाधरार्यसुज्ञात – द्राविडाम्नाय – तत्त्वधीः ।
चतुस्सप्ततिशिष्याढ्यः पञ्चाचार्यपदाश्रयः ॥
रङ्गेशवेङ्कटेशादिप्रकटीकृतवैभवः ।
देवराजार्चनरतो मूकमुक्तिप्रदायकः ॥
यज्ञमूर्तिप्रतिष्ठाता मन्नाथो धरणीधरः ।
अनन्ताभीष्टफलदः विठ्ठलेन्द्रप्रपूजितः ॥
श्रीशैलपूर्णकरुणालब्ध – रामायणार्थकः ।
व्याससूत्रार्थतत्त्वज्ञो बोधायनमतानुगः ॥
श्रीभाष्यादिमहाग्रन्थसाधकः कलिनाशनः ।
कुरङ्गनगरीपूर्णमन्त्ररत्नोपदेशकः ॥
भाषादत्तहयग्रीवो भाष्यकारो महायशाः ।
पवित्रीकृतभूभागः कूर्मनाथप्रकाशकः ॥
श्रीवेङ्कटाचलाधीश – शंखचक्रप्रदायकः ।
श्रीवेङ्कटेशश्वशुरः श्रीरमासखदेशिकः ॥
कृपामात्रप्रसन्नार्यो गोपिकामोक्षदायकः ।
क्रिमिकण्ठनृपध्वंसी सर्वमन्त्रमहोदधिः ॥
अङ्गीकृतान्ध्रपूर्णार्यः सालग्रामप्रतिष्ठितः ।
श्रीभक्तग्रामपूर्णेशो विष्णुवर्धनरक्षकः ॥
बौद्धध्वान्तसहस्रांशुः शेषरूपप्रदर्शकः ।
नगरीकृतवेदाद्रिः ढिल्लीश्वरसमर्चितः ॥
नारायणप्रतिष्ठाता सम्पत्पुत्रविमोचकः ।
सम्पत्कुमारजनकः साधुलोकशिखामणिः ॥
सुप्रतिष्ठितगोविन्दराजः पूर्णमनोरथः ।
गोदाग्रजो दिग्विजेता गोदाभीष्टप्रपूरकः ॥

सर्वसंशयविच्छेत्ता विष्णुलोकप्रदायकः ।
अव्याहतमहद्धर्मा यतिराजो जगद्गुरुः" इति ।

यतश्च श्रीमन्तः आन्ध्रपूर्णाश्रमे श्रीमद्भाष्यकाराणां रामवाल्लिकाः, अत्यन्तमन्तरङ्गाः, ततश्च अस्मिन् स्तोत्रे प्रतिपाद्यमानविषया. सर्वे अत्यन्तं प्रामाणिका —इति निश्चप्रचो विषयः । एवम् :—

वेदान्तान् शङ्कराद्यैः कुमतिभिरसदर्थान् हि नीतांश्च भूयः
स्वार्थे तात्पर्ययुक्तान् कल्पयितुमपि च श्रीशठार्यादिभक्तैः ।
प्रोक्तान् दिव्यप्रबन्धान् शरणवरणयोगात्मकान् प्रस्फुटार्थान्
कृत्वोद्धर्तु मखाब्धेः अखिलजनर्सभूत् यो महाभूतधाम्नि ॥
वेदान्तानामशीस्त्रां गुरुतरगहनार्थैकवाक्यत्वपूर्वम्
व्याख्यातृत्वाच शेषं गुरुवरवहनादीशितुः सैन्यनाथम् ।
राधुत्राणात् तदन्यप्रमथनकरणाच्चापि तत्पञ्चहेतीन्
आचार्यत्वस्य पूर्त्यै समुरुतरकृपं श्रीपतिं चाहुरार्याः ॥
श्रुत्यर्थान् प्राप्य तत्त्वेन च वरदगुरोरादाज्ञया तस्य सर्वम्
सङ्गं त्यक्त्वा त्रिदण्डाञ्चितमहितकरो रङ्गधाम्न्यास्त पश्चात् ।
आर्यैस्साकं च लक्ष्मीरमणकृतपदान् दिव्यदेशान् धरायां
सेवं सेवं प्रकल्प्याथ च महितसमाराधनं तत्र तत्र ॥
यातो यः शारदायाः सविधमथ तया सत्कृतस्वप्रबन्धः
बाह्यान् वेदात् कुदृष्टीनपि कपटरतून् वादतो निर्जिगाय ।
प्रादक्षिण्येन गच्छन् भुवमखिलजनं वैष्णवाढ्यं च कुर्वन्
न्यासाख्यं देवगुह्यं परमहितमपि प्राक् प्रकाशं च कृत्वा ॥
रङ्गे वेदान्तभाष्यं व्यतनुत च ततः श्रीटकण्ठस्य हेतोः
गत्वा यो होसलाख्यं जनपदममले यादवाद्रौ निवेश्य ।
पश्चादागत्य रङ्गं गुरुवरमुखतो वैदिकाग्र्यं विशिष्टा-
द्वैतं सिद्धान्तमस्मिन् जगति बहुमुखं विस्तृतं कारयित्वा ॥
आवाप्यास्ते यदुक्ष्मामृति महितदयश्चाक्षुषीं स्वीयमूर्तिम् ।
कुर्वाणस्तं यतीन्द्रं गुरुकुलनृपतिं नौमि रामानुजार्यम् ॥
व्यासो वा भगवान् पराशरमुनिः श्रीशौनको वाऽथवा
साक्षान्नारद एव वा शठरिपुर्वागीश्वरो वा स्वयम् ।
लोकेशः पुरुषोत्तमः फणिपतिः शेषो जगच्छेष
इत्याख्यातुं जगतां हिताय समभूत् रामानुजार्यो मुनिः ॥

इति विपश्चिदपश्चिमैरभियुक्ताग्रेसरैरनुगृहीतेषु श्लोकेष्वमीषु गुरुपरम्परायामुदाहृतेषु श्रीभगवद्भाष्यकाराणां वैभवमनवधिकं, चरित्रांशाश्चानेके विज्ञायन्ते ।

तदाचार्यभूतैः, वक्षःस्थले प्रियवल्लभायाः पद्मावत्याः समर्पणेन श्वशुरभूतैः, श्रीपदपुर्यां सुप्रतिष्ठितगोविन्दराजैः, अस्मन्नाथैः, श्रीशेषावतारैः, अशेषजनसंत्राणैकनिबद्धकङ्कणैः, श्रीवैष्णवसम्प्रदायपरम्परामध्यमणिभिः श्रीमद्रामानुजमुनिचरणैः समुपन्यस्त इति च, प्रथममयं ग्रन्थः स्वीकृतोऽस्माभिः, अस्यां श्रीश्रीवैष्णवग्रन्थमालायां महत्यां प्रकाशनाय ।

## नवानां ग्रन्थानां परिचयः, पौर्वापर्यनिर्णयश्च

एषु नवसु रामानुजीयेषु ग्रन्थेषु, त्रयो ग्रन्थाः, वेदान्तसार — वेदान्तदीप — श्रीभाष्यनामकाः, भगवतो बादरायणस्य शारीरकमीमांसासूत्राणां व्याख्यानरूपा विलसन्ति । तेषु वेदान्तदीपः, वेदान्तसारश्च संग्रहात्मकौ, छात्रजनमनोऽभिरामौ; श्रीभाष्यं तु अतीव विपुलात्मकम्, कथकजनमनोऽभिरामम् ।

वेदान्तसारे श्रीभाष्यादीनामनुल्लेखनेन, वेदान्तदीपे च [1]त्रिषु प्रदेशेषु श्रीभाष्यस्य समुल्लेखनेन च सुस्फुटमिदमवगम्यते — श्रीभाष्यम्, वेदान्तसारादनन्तरं, वेदान्तदीपात् पूर्वं च विरचितमिति ।

**वेदान्तसारः**—अयं तु न केवलं ब्रह्मसूत्रव्याख्यानग्रन्थानां, किंतु, सर्वेषामपि श्रीभगवद्रामानुजाचार्यानुगृहीतानां ग्रन्थानां प्रथमः, परमाचार्याणां श्रीमद्यामुनमुनीन्द्राणां स्वैः प्रतिश्रुतस्य प्रथमनियोगस्य परिपालनाय, वाक्य—द्रमिडभाष्य—आगमप्रामाण्य — सिद्धित्रयादीनां पूर्वतनानां ग्रन्थानां समेषामवलोकनेन प्रसन्नधीभिः श्रीमद्रामानुजमुनिपुङ्गवैः द्रमिडभाष्यमादर्शीकृत्य अतिसंक्षिप्ततया, प्रमुखसारांशमालनिबडतया च विरचितः, श्रीमद्विशिष्टाद्वैतसिद्धान्तानुसारेण सूत्राधिकरणपादाध्यायादिनिखिलप्रमेयनिरूपणैकतानो मणिदर्पणस्थानीयः, वेदान्तवण्टापथपथिकजनविश्रान्तिदायी कल्पकमहीरुहश्च ।

अत्र "अन्तस्तद्धर्मोपदेशात्" इति सूत्रविवरणघट्टे वाक्य — द्रमिडभाष्ये समुद्दङ्किते । यथा —

---

1. श्रुतिन्यायविरोधस्तु तेषां भाष्ये प्रपञ्चित इति नेह प्रतन्यते। भाष्योदितोऽधिकरणार्थः ससूत्रार्थविवरणः सुखग्रहणाय संग्रहेणोपन्यस्यते ( वे. दी. उपोद्घाते )

. खद्योताशादिदोषा भाष्ये प्रपञ्चिताः ( वे. दी. इतरव्यपदेशाधिकरणे )

" तदेतत् वाक्यकारश्चाह — " हिरण्मयः पुरुषो दृश्यत इति, प्राज्ञः सर्वान्तरस्यात् लोककामेशोपदेशात् तथोदयात् पाप्मनाम् " इत्युक्त्वा, तद्रूपस्य कार्यत्वं, मायामयत्वं वा ? इति विचार्य, " स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात् " इति निरसनीयं मतमुपन्यस्य " रूपं वाऽतीन्द्रियं अन्तःकरणप्रत्यक्षनिर्देशात् " इति । व्याख्यातं च द्रमिडाचार्यैः — " न वा मायामात्रम्, अञ्जसैव विश्वसृजो रूपम् ; तत्तु न चक्षुषा ग्राह्यम् ; मनसा त्वकलुषेण साधनान्तरवता गृह्यते " न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन " इति श्रुतेः । न ह्यरूपाया देवताया रूपमुपदिश्यते ; यथाभूतवादि हि शास्त्रम् । यथा " माहारजनं वासः, वेदाहमेतं पुरुषं महान्तं आदित्यवर्णम " इति प्रकरणान्तरनिर्देशात " — इति । ' साक्षिण ' इति, ' हिरण्मय ' इति च रूपसामान्याच्चन्द्रमुखवत् " इति च वाक्यम् । तच्च व्याख्यातं तैरेव — ' न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः " इत्यादिना " इति ।

बोधायनादीनां ग्रन्थाः, अत्र नामतो वा नोल्लिखिताः । आकाशाधिकरणे — " रविकरविकसितपुण्डरीकनयनस्य " इति परं " कप्यास " शब्दं मनसि निधाय विशेषणं समर्पितं भगवतो वासुदेवस्य, न तु विपुलतया वेदार्थसंग्रहादाविव कप्यासश्रुतिर्व्याख्याता । जन्माद्यधिकरणे — सर्वश्रुतिस्मृतिसूत्रादीनामैककण्ठ्यं सुष्ठूपपाद्य, ब्रह्मणो जगन्निमित्तोपादानत्वं सम्यगुपपादितं । तत्रैव शाङ्करभास्करपक्षावपि समुदाहृतौ — " चिदचितोः परस्य च प्रलयकालेऽपि व्यवहारानर्हसूक्ष्मभेदः, सर्वैर्वेदान्तिभिः अभ्युपगतः ; अविद्याकृतभेदस्य, उपाधिकृतभेदस्य च अनादित्वाभ्युपगमात् " इति । वेदार्थसंग्रहादिषु तु विपुलतममुपपादि तन्मतप्रक्रियादिकं सर्वम् ; अत्र तु न तथा ।

किंच प्रथमसूत्रव्याख्याने — " कर्मणां च प्रकृतिविकृतिरूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः " प्रभुत्वादार्त्विज्यम् " इत्यन्तेन सूत्रकलापेन सङ्कर्षणेन कृतः " इति संकर्षणकाण्डः प्रस्तुतः, यश्च तदनन्तरग्रन्थेषु नोल्लिखितः । संकर्षणकाण्डस्तु " अन्ते हरौ तद्दर्शनात्, स विष्णुराह हि.स विष्णु राह हि " इति विष्णोः परदेवतात्वख्यापनेन समाप्तो दृश्यते । तमेव विष्णुशब्दमुपादाय " विष्णवे नमः " इति मङ्गलश्लोकोऽत्र कृतः । " परमपुरुषप्रसादात् वेदान्तसार उद्ध्रियते "

इति ग्रन्थ आरब्धः; तदनन्तरग्रन्थेषु तु आचार्यवन्दनादिकमपि ग्रन्थादौ निबद्धमुपलभ्यते । मङ्गलश्लोक — सूत्रव्याख्यान — विषयप्रतिपादनादिषु वचनरचनाप्रकारः सूक्ष्मेक्षिकया यदि परिशील्यते, तदा अवश्यमयं श्रीभाष्यकाराणां प्रथमः प्रयत्नः—इति सुस्पष्टं' ज्ञायत एवेति सुधियां निर्णयः ।

बोधायनवृत्तिग्रन्थप्रदानाय संवादिरूपतया काश्मीरराजेन पर्यनुयुक्ताः श्रीमदाचार्यपादाः, तदेव प्रणीयैनं तस्मै प्राहिण्वन् । तमिमं वेदान्तसारं बोधायनवृत्तिप्रतिपाद्यविषयसजातीयविषयपरिमिलितं सारतमं सरलगम्भीरं अतिप्रशस्तमवलोक्य प्रहृष्टान्तरङ्गेण, एतेषु अत्यन्तभक्तिभारमुद्वहता, तेन राज्ञा सद्य एव उपहारीकृतः बोधायनवृत्तिग्रन्थः; एते च विधिवदतिमात्रमभ्यर्चिताः ससम्भ्रमाश्चर्यपुलकितगात्रेण भक्तिभारविनमितोत्तमाङ्गेन सपरिकरबन्धेन साञ्जलिबन्धेन तेन" इति केषुचित् चारित्रकग्रन्थेषु दरीदृश्यते ।

अतः, सर्वथाऽयं वेदान्तसारः, प्राथमिकः प्रबन्धः श्रीभगवद्रामानुजीयेषु प्रबन्धेषु इति निर्णयो नानुपपन्न इति प्रतिभाति ।

**श्रीभाष्यम्** — अतिविपुलां विशिष्टां च श्रीमद्बोधायनीयां वृत्तिमवलम्ब्य, सुविपुलनिपुणं सप्रमाणोपपत्ति सकलप्रातिकथक — कुदृष्टिपक्षविक्षेपणेन भगवद्भिर्भाष्यकारैः साभिनिवेशादरं प्रत्यवतारितमिदम्—सूत्राधिकरणपादाध्यायप्रबन्धानां परमार्थपरिमलपरिमिलितं विद्वज्जनमनोरञ्जकं कमनीयमृदुमधुरगम्भीर—पदबन्धसन्दर्भ—रचनाचातुरीविराजमानं समाभ्यधिकदरिद्रं सर्वाङ्गसुन्दरं अतिप्रशस्तं "श्रीभाष्यम्" इति सर्वत्र सर्वतः सर्वथा जोघुष्यमाणं श्रीमच्छारीरकमीमांसासूत्राणां अत्युज्ज्वलं भाष्यप्रदीपरत्नम् ।

एतदधिकृत्य वक्तव्यं सुमहदस्ति विषयजातम्; तत्सर्वं भगवतः श्रीनिकेतस्य निरवग्रहेणानुग्रहेण अचिरादेव प्रकाश्यमानस्य तद्ग्रन्थरत्नस्य भूमिकायां विज्ञापयिष्यते ।

इदं च वेदान्तसारादिव वेदार्थसंग्रहादपि परत एव आविरासीदिति सुस्पष्टं विज्ञायते । श्रीभाष्ये हि — जिज्ञासाधिकरणे महापूर्वपक्षे, सद्विद्यावाक्यार्थनिरूपणप्रकरणे — "प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे; अत्रापि आरम्भणाधिकरणे निपुणतरमुपपादयिष्यामः" इति, एवमेव शरीरवाचिनां शब्दानां शरीरिपर्यन्तबोधनप्रकरणेऽपि

— "अयमर्थो वेदार्थसंग्रहे समर्थितः" इति च समुद्घोषति वेदार्थसंग्रह-ग्रन्थो मुक्तकण्ठम् ।

एवं वेदान्तदीपात् पूर्वमेवेदं प्रणीतमित्यपि सुस्पष्टं विज्ञायते । तथा हि — वेदान्तदीपे प्रथमत उपोद्घातान्ते — "श्रुतिन्यायविरोधस्तु तथा भाष्ये प्रपञ्चित इति नेह प्रतन्यते; भाष्योदितः अधिकरणार्थः ससूत्रार्थविवरणः सुखग्रहणाय संक्षेपेण उपन्यस्यते" इति, इतरव्यपदेशाधिकरणे — "तिरोधानस्य प्रकाशनिवृत्ति-करत्वेन प्रकाशस्यैव स्वरूपत्वात् स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषा भाष्ये प्रपञ्चिताः" इति च श्रीभाष्यमुल्लिख्यते ।

वेदान्तदीपः—श्रीभाष्यं अतिविपुलं मन्दमतीनां दुरवगाहं वादशास्त्रार्थबहुलं प्रतिवादिमत्तेभकूटयुक्तिकुम्भस्थलविपाटनक्षमं प्रौढगम्भीरम् अतिप्रशस्तं परमाद्भुतं प्रबन्ध-रत्नम् ।

"कः कृत्स्नं वेत्ति भाष्यार्थं श्रुतांशस्थितये कृतिः ।
आढ्यैः काकणिकेवैषा नोपेक्ष्या भाष्यवित्तमैः ॥

अविरलूनाः सुगम्भीरा रामानुजमुने गिरः ।
दर्शयन्तु प्रसादेन स्वंभावमखिलं हृदम् ॥

भाष्यं चेद्व्यवृणोदवयं यतिपतिर्व्याख्यानवाचां तथा
गाम्भीर्यात् अनवस्थितिः सितमतिर्दूरे जनस्तद्विगपि ।
अप्रत्ययः कथमीश्वरः स हि न नः प्रत्यक्षरूपो दृशां
तद्भाष्यं स च भाष्यकृत् स च हरिः सम्यक् प्रसीदन्तु नः ॥"

इति श्रुतप्रकाशिकाकारैः सर्वतन्त्रनिष्णातैः उल्लोकप्रतिभाप्रभावसम्पन्नैः श्रीमत्सु-दर्शनभट्टारकैरेव प्रतिपाद्यत इति वस्तुस्थितौ, का कथा इतरेषां विषये ? । अतः, "सर्वेषां सुलभबोधाय भाष्योदिताधिकरणार्थसंग्राहकः ससूत्रार्थविवरणः कश्चन ग्रन्थः अन्यूनानतिरिक्तः अनुग्राह्यः" इति श्रीमत्कूरनाथादिभिरभ्यर्थिताः भगवन्तः कृपामात्र-प्रसन्नाचार्याः शिष्यजनवात्सल्यवशंवदाः श्रीमन्तो भाष्यकारा अनुजगृहुः वेदान्तदीपममुं छात्रजनमनोऽभिरामम् । अत्र च अधिकरणार्थसूत्रार्थप्रतिपादनशैली अत्यद्भुतावहा विद्वज्जनराजहंसानां मानसं परमावर्जयति । ग्रन्थारम्भे च उपनिबद्धा भूमिका एकैव

अलम्भवति निखिलवेदान्तशास्त्रप्रक्रियां अवगमयितुम् । करबदरीकरोत्ययं च महान् ग्रन्थः, निखिलशारीरकशास्त्रार्थरहस्यानि सकलजनज्ञानगोचरतया — इत्यतिरोहितोऽयं विषयः सर्वेषां प्रामाणिकानाम् ।

गीताभाष्यम् — श्रियः पत्या निखिलजगदुदयविभवलयलीलेन पुरुषोत्तमेन जगद्गुरुणा आश्रितवात्सल्यैकजलधिना निखिलजगतां परमानन्दसम्पादनाय देवकीपूर्वसन्ध्यायामाविर्भूतेन अच्युतभानुना जगद्गुरुणा, अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलं पार्थं प्रपन्नमुद्दिश्य, तद्युद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितस्य स्वविषयस्य ज्ञानकर्मानुगृहीतस्य भक्तियोगस्य अवतरणाय प्रवर्तितायाः, श्रीगीतायाः सुगेयायाः, समुचितं सर्वाङ्गसुन्दरं अतिरमणीयं निस्तुलं अतिप्रशस्तं परमतत्त्वार्थबोधकं मृदुमधुरमञ्जुलमङ्गलं, श्रीमत्परमगुरुभिः भगवद्यामुनमुनिभिरनुगृहीतस्य श्रीमतो गीतार्थसंग्रहस्य विशदव्याख्यानभूतं अनतिसंक्षिप्तविस्तृतं भाष्यरत्नमिदम् ।

इदञ्च श्रीभाष्यात्परमेव आरचितमिति निर्णेतुं शक्यते । तद्यथा — अत्र प्रथमाध्याये "न त्वेवाहं जातु नासम्" इति श्लोकविवरणान्ते "कृतमसमीचीनैर्वादैर्निरस्तैः" इत्यमापि । अत्र, "असमीचीन – निरस्त" पदभ्यां, इतरमतानां असामीचीन्यं, निरासप्रकारं च आवेदयन्तः श्रीभाष्यादयो ग्रन्था उपक्षिप्यन्ते, येन तदुपष्टम्भेन, तत्सिद्धवत्कारेण च अत्रैवमनुगृह्यते — इति सूक्ष्मेक्षिकया परिशीलने सम्यगवगन्तुं शक्यते ।

"अत्र, 'असमीचीनवादै' रित्यनेन भास्करादिमतेऽप्येवंविधदूषणशतं शारीरकभाष्याद्युक्तं स्मारितम्" इति श्रीमन्निगमान्तमहादेशिकैः कविकथककण्ठीरवैः स्पष्टीकृतोऽयं विषयः तात्पर्यचन्द्रिकायाम् । अत्र 'स्मारित' पदं अनन्यथानेयं क्षोदक्षमं प्रमाणं भवितुमर्हति । अतः, श्रीभाष्यादनन्तरमेव गीताभाष्यमारचितं भगवद्भिर्भाष्यकारैरिति सिद्धं भवति ।

अपिच, "क्षेत्रज्ञं चापि मां विद्धि" इति श्लोकव्याख्याने — "पृथिव्यादिसङ्घातरूपस्य क्षेत्रस्य, क्षेत्रज्ञस्य च भगवच्छरीरैकस्वरूपतया भगवदात्मकत्वं श्रुतयो वदन्ति" इत्यारभ्य, मध्ये, "केचित्" इति मतान्तराणि निरूप्य, "एवमादिवादाः,

अनाकलितश्रुतिस्मृतीतिहासपुराणन्यायस्ववाग्विरोधैरज्ञानिभिः जगन्मोहनाय प्रवर्तिताः, इति अनादरणीयाः " इति निरस्य, "अत्रेदं तत्त्वम्" इति सर्वासां श्रुतीनां स्वरूप-स्वभावौ निरूप्य, "एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां, कार्य-कारणभावं कार्यकारणयोरनन्यत्वं वदन्तीनां च सार्वासां श्रुतीनामविरोधः, चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं, शरीरभूतयोः कारणदशायां नामरूपानर्हसूक्ष्मदशा-पत्तिं, कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति, ब्रह्माज्ञान वादस्य, औपाधिकब्रह्मभेदवादस्य अन्यस्यापि अन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यत इति अलमतिविस्तरेण" इति अभिवर्ण्यते। अयं प्रबन्धः— वेदार्थसंग्रह-श्रीभाष्य-वेदान्तदीपेषु सुनिपुणविशदं प्रतिपादितस्य प्रमेयस्य अतिपेशलेन सन्दर्भेण सङ्ग्रहरूप एवेति, तद्ग्रन्थसन्दर्भपरिशीलने सुस्फुटमवगम्यते।

अत्रापि — "स्वपक्षे सर्वप्रकाराविरोधं, परपक्षेषु च सर्वप्रकारविरोधं श्रुत-हानाश्रुतकल्पनादिरूपं संग्रहेण वदन्नुपसंहरति" इति, "अत्र 'अन्यस्यापि' इति यादवप्रकाशनैयायिकाद्यभिमतयोजनासंग्रहः" इति च तात्पर्यचन्द्रिका।

एवमाभ्यन्तरनिदानपरिशीलने, अयं क्रमः सूपपन्न एवेति ज्ञायते। निसर्ग-निर्मलनिरर्गलगम्भीरनिष्यन्दी हृद्यानवद्यमृदुमधुरमञ्जुलवचनरचनाप्रवाहोऽपि विषयममुं उत्तम्भयति।

**गद्यत्रयम्**—इदं शरणागतिस्वरूपानुष्ठान—तत्फलावाप्तिप्रबोधकं परमविलक्षण सुलोकरमणीयतानिकेतनं प्रसन्नगम्भीरं परमोदारप्रसन्नवियां श्रीमगवद्भाष्यकाराणां प्रबन्धेषु अन्तिममेव स्यादित्यत्र न कोऽपि सन्देहः। गुरुपरम्परादिभ्यः तथैवावगम्यते।

**नित्यग्रन्थः** — परमैकान्तिनां भगवदाराधनक्रमादिनिरूपणप्रवणः प्रबन्धो-ऽयम्, कदा वा आरचित इति वक्तुं सुदृढं प्रमाणं किञ्चिदपि नोपलभ्यते।

**वेदार्थसंग्रहः** — वेदार्थसंग्रहोऽयं प्रकृतस्तु निखिलवेदवेदान्त — पुराणेति हासागम — पूर्वाचार्यनिबन्धादिसकलशास्त्रसर्वस्वभूतः श्रीभगवद्रामानुजमुनिदिव्यप्रबन्धेषु द्वितीय इति निर्णेतुं शक्यते।

श्रीभाष्ये वेदार्थसंग्रहस्य समुल्लेखात्, अयं श्रीभाष्यात् पूर्वमेव आरचित इति, ततश्च तदनन्तरकालिकेभ्यो वेदान्तदीपादिभ्यश्च पूर्वतन इति च निश्चप्रचोऽयं विषयः । परं तु वेदान्तसारात्पर इत्यत्र किञ्चिदिव वक्तव्यमापतति ।

## वेदान्तसारः — वेदार्थसंग्रहश्च

वेदान्तसारे तु वाक्यकारद्रमिडाचार्यावेव निर्दिष्टौ, वेदार्थसंग्रहे तु भगवद्बोधायन — गुहदेव — भारुच्यादयः अनेके आचार्याः नामतो गृहीताः ।

अद्वैतमतत्रितयं वेदान्तसारापेक्षया अत्र सम्यङ् निरूप्यते, तस्य निराकरणमपि अतिविशिष्टविशदप्रक्रियया क्रियते । नारायणपरत्वं, भक्तिप्रपत्त्योः परमोपायत्वम्, प्रतितन्त्रसिद्धः जगद्ब्रह्मणोः शरीरशरीरिभावः, सर्वासां श्रुतीनां, सर्वेषामपि प्रमाणानां अतिविशिष्टः समन्वयः प्रकारः, सकलशास्त्रहृदयसर्वस्वम् — इत्यादयोऽनेके अंशाः चतुरश्रतया अत्र निरूपिताः । 'कप्यास' शब्दार्थः, वेदान्तसारे 'रविकरविकसित-पुण्डरीकनयनस्य' इत्येतावदेव प्रतिपाद्यते; अत्र तु "गम्भीराम्भःसमुद्भूत — सुमृष्टनाल — रविकरविकसित — पुण्डरीकदलामलायतेक्षणः" इति परिष्कृत्य समुपवर्ण्यते । सद्विद्यावाक्यादयोऽपि सर्वे वाक्यविशेषाः सप्रपञ्चं व्याख्यायन्ते । सप्तविधानुपपत्तयः, निर्विशेषवस्तुनो निष्प्रमाणकत्वम्, निर्विकल्पकप्रत्यक्षस्य सविशेषविषयत्वम् — इत्यादयोऽपि नैकविधा वादाः सरलगम्भीरमुपन्यस्यन्ते ।

स्वसिद्धान्तसिद्धाः नित्यविभूतिसद्भावादयोऽपि अन्येके विशेषाः सपरिकरबन्धं सप्रमाणोपपत्ति निरूप्यन्ते ।

आदित आरभ्य आपरिसमाप्ति, अतिविशिष्टा विलक्षणा रचनाधोरणी, निरर्गला निसर्गोदात्तनितान्तकान्तगम्भीरा अमृतरसनिष्यन्दपरीवाहायमाना सर्वानपि सहृदयान् अतिमात्रमावर्जयति, निमज्जयति आनन्दामृतदुग्धवारिधौ, उन्मज्जयति च अज्ञानान्धकार-बन्धुर — कुतर्ककुहनामोहजलधितः — इति नितरां अतिरोहितोऽयं विषयः समेषामपि निरूपकाणाम् ।

अतोऽयं ग्रन्थः सुश्लिष्टपदबन्धसन्दर्भहृद्यानवद्यगुम्भः वेदान्तसारात्परतरः—इति सुस्फुटं सिद्ध्यति ।

मङ्गलश्लोकनिबन्धक्रमपरिशीलनेऽपि अयं क्रमः समुपपन्न एव, इति विज्ञायते ।

एतदुक्तं भवति :—श्रीभगवद्यामुनमुनीनां निरवग्रहं नियोगमनुपालयितुं, सकलप्राणिप्रियङ्करं श्रीमद्विशिष्टाद्वैतसिद्धान्तममुं व्यवस्थापयितुं च श्रीमद्भिः परिगतपरिगन्तव्यैः परमकारुणिकैः भगवद्रामानुजमुनिपुङ्गवैः – (१) वेदान्तसार, (२) वेदार्थसंग्रह, (३) श्रीभाष्य, (४) वेदान्तदीप, (५) श्रीगीताभाष्य, (६) शरणागतिगद्य, (७) श्रीरङ्गगद्य, (८) श्रीवैकुण्ठगद्यानि, (९) नित्याराधनक्रमश्च – इत्येते नवग्रन्थाः क्रमेण अनुजगृहिरे — इति ।

## वेदार्थसंग्रहवैभवप्रकाशः

इतरमतनिराकरणेन सर्ववेदान्तप्रत्ययन्यायेन सर्वेषामपि वेदान्तवाक्यानां, तदुपबृंहणानां स्मृतिपुराणेतिहासपूर्वाचार्यग्रन्थानां च समन्वयसम्पादनेन तत्त्वार्थः, अस्मिन् ग्रन्थे सम्यक् सुसंगृह्यत इति, अस्य "वेदार्थसंग्रह" इति नाम सम्यगुपपद्यते ।

तथाह्यारम्भः—"अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः" इति । अन्यत्र च ।

वेदवित्प्रवरप्रोक्त वाक्यन्यायोपबृंहिताः ।
वेदास्साङ्गा हरिं प्राहुः जगज्जन्मादिकारणम् ॥

इति मुक्तकण्ठमभ्यवर्णि । "वेदविदग्रेसर – वाल्मीकि – पराशर – द्वैपायनवचोभिश्च परस्य ब्रह्मणः सर्वस्य आत्मत्वावगमात्" इति, "तदेतत् नानाविधानन्तश्रुतिनिकर – शिष्टपरिगृहीत—तद्व्याख्यानपरिश्रमादवधारितम्" इति, "सद्विद्यायामुपास्यं ब्रह्म सगुणम्, सगुणब्रह्मप्राप्तिश्च फलम् – इत्यभियुक्तैः पूर्वाचार्यैर्व्याख्यातम् — "यथोक्तं वाक्यकारेण" इति, "तदुक्तं परमगुरुभिर्भगवद्यामुनाचार्यपादैः" इति, "भगवद्बोधायन – टङ्क – द्रमिड – गुहदेव – कपर्दि—भारुचिप्रभृति—अविगीतशिष्टपरिगृहीत—पुरातनवेद-वेदान्तव्याख्यान – सुव्यक्तार्थ – श्रुतिनिकरदर्शितोऽयं पन्थाः" इति च, बहुषु स्थलेषु वेदवित्प्रवर – सदाचार्यप्रदर्शितपदव्यनुसारेण निखिलवेदवेदान्तानां परमं हृदयम्—अत्र सङ्गृहीतमिति श्रीमदाचार्यपादैरेव असकृदुपदिश्यते ।

अत्र सर्वासां श्रुतीनामैककण्ठ्यनिरूपणघट्टे, भक्तेरुपायत्वनिरूपणस्थले, नित्य-विभूतेः समर्थनादिप्रदेशेषु च प्रतिपादनशैली — परमरमणीया, निसर्गनिरर्गलनिरुपम-निकामसरलगम्भीरा मानसं परं द्रावयति प्रामाणिकानां सहृदयतल्लजानाम् ।

अत्र, "चार्वाक—शाक्य—औलूक्य—अक्षपाद—क्षपणक—कपिल—पतञ्जलि मतानुसारिणो वेदबाह्याः, वेदावलम्बिभिः कुदृष्टिभिस्सह निरस्ताः" इति इतरमतप्रति-क्षेपोऽपि स्पष्टमुपक्षिप्यते ।

ग्रन्थेऽस्मिन् प्राधान्येन श्रीमतामद्वैतमतप्रवर्तकाचार्याणां भगवतां शङ्कर — भास्कर — यादवाचार्यचरणानां मतानि त्रीणि संग्रहविस्ताररूपेण सम्यङ् निरूप्यन्ते ; निराक्रियन्ते च श्रुतिन्यायापेतत्वव्यवस्थापनपुरस्सरं सप्रमाणोपपत्ति सप्रपञ्चम् । अपिच, अनादिसिद्धो विशुद्धः स्वसिद्धान्त एव, सर्वश्रुति — स्मृति — पुराण — आगम — इति-हासादिप्रसिद्धः, भगवद्बादरायण — बोधायन — आचार्यटङ्क — द्रमिडाचार्य — गुहदेव— भारुच्यादि — सत्सम्प्रदायसिद्धः सर्वशास्त्रहृदयसर्वस्वभूत इति च सम्यक् विशदीक्रियते ।

## श्रीशाङ्करमतसंग्रहप्रकारः

द्वितीयमङ्गलश्लोके — "परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति" इति सङ्गृहीतः श्रीशङ्करभगवत्पादानां पक्षः, "निर्विशेषज्ञानमात्रमेव ब्रह्म ; तच्च नित्यमुक्तस्वप्रकाशमपि तत्त्वमस्यादि — सामानाधिकरण्यावगत — जीवैक्यम् ; ब्रह्मैव अज्ञम् , बध्यते, मुच्यते च ; निर्विशेषचिन्मात्रातिरिक्त ईश — ईशितव्यादि अनन्तविकल्पस्वरूपं कृत्स्नं जगत् — मिथ्या ; ........ आचार्यो ज्ञानस्य उपदेष्टा मिथ्या ; प्रमाता मिथ्या ; शास्त्रं च मिथ्या ; शास्त्रजन्यज्ञानं च मिथ्या ; एतत्सर्वं मिथ्याभूतेनैव शास्त्रेणावगतम्" इति विव्रियते । अत्र, तन्मतप्रतिपादनवेलायामेव तन्मतदौस्थ्यमपि पदे पदे समुपक्षिप्यते ।

"निर्विशेषचिन्मात्रं ब्रह्म मायाशबलं भ्रमति । स एव — संसारः । "तत्त्व-मसि" इत्यादिवाक्यजन्यज्ञानेन भ्रमनिवृत्तिः — मोक्षः" इति एतन्मतसारांशः ।

## श्रीभास्करमतसंग्रहप्रकारः

एवं "तत् परोपाध्यालीढम्" इति सङ्गृहीतः श्रीभास्कराचार्यचरणानां पक्षः, "अपहतपाप्मत्वादि — समस्तकल्याणगुणोपेतमपि ब्रह्म, तेनैव ऐक्यावबोधेन केनचित्

उपाधिविशेषेण सम्बद्धं बध्यते, मुच्यते च नानाविधमलरूपपरिणामास्पदं च " इति विशदीक्रियते । अत्रापि उपक्षेपः तत्प्रतिपादनवेलायामेव विज्ञायते ।

" सत्योपाधिसिद्धं सकलकल्याणगुणाकरं ब्रह्मैव, तेन ऐक्यावबोधेन बध्यते ; स एव संसारः । वर्णाश्रमधर्मानुष्ठानसहकृत — वाक्यजन्यज्ञानपूर्वक — उपासनात्मकज्ञानेन उपाधिः नश्यति, स एव च मोक्षः " इति एतन्मतसारांशः ।

## श्रीयादवमतसंग्रहप्रकारः

" अशुभस्यास्पद " मिति सङ्गृहीतो यादवपक्षः, " स्वाभाविकनिरतिशय-अपरिमितोदारगुणसागरं ब्रह्मैव, सुर—नर—तिर्यक् — स्थावर—नारकि—स्वर्गि—अपवर्गि—चेतनैकस्वभावम् , स्वभावतो विलक्षणं च अविलक्षणं च वियदादिनानाविधपरिणामास्पदं च " इति व्याख्यायते । अत्रापि पदे पदे उपक्षेपः स्फोर्यत एव ।

" सन्मात्रमेव ब्रह्म सत्यचिदचिदीश्वरात्मकतया परिणमति । तस्य तैस्सह भेदज्ञानं — संसारमूलभ्रमः । ज्ञानकर्मसमुच्चयात् भेदज्ञाननाशः — मोक्षः " इति एतन्मतसारांशः ।

## श्रीशङ्कराचार्याणां देशकालादिनिर्णयः

श्रीशङ्करभगवत्पादाचार्याणां तु कालविषये विविधा विप्रतिपत्तय उपलभ्यन्ते । प्राचीनास्तु " २३९३ तमे कलियुगे श्रीमति केरलदेशे आल्वे ( चूर्णी ) नद्यास्तीरे कालडिनामके ग्रामे प्रादुरभूवन्नेते आचार्या " इति अभिवर्णयन्ति । आधुनिकविमर्शकास्तु क्रीस्तुशके सप्तमे, अष्टमे वा एते आसन् , प्रायशः श्रीकुमारिलभट्टपादानां समानकालिका भवेयुरिति च अनेके निश्चिन्वन्ति ।

## श्रीभास्कराचार्याणां देशकालादिनिर्णयः

भेदाभेदवादिनः श्रीमन्तो भास्कराचार्याः — श्रीशङ्करभगवत्पादाचार्याणां परतः, श्रीमद्रामानुजाचार्याणां पूर्वतश्च आसन्निति सम्यज्ज्ञायते । यद्यपि लोकभास्कर-लौगाक्षि-भास्कर — श्रौतभास्करादयोऽनेके भास्करा उपलभ्यन्ते । तेष्वयं भास्कराचार्यः कः ? इति निर्णयः परिश्रमावहो भवति, तथापि " ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते "

इति श्रीमन्न्यायकुसुमाञ्जलौ श्रीमदुदयनाचार्यैरुक्तवान्, तेभ्यः पूर्वतना एते इति, "भास्करः - त्रिदण्डिमतभास्करः" इति श्रीवर्धमानोपाध्यायविवरणेन, एते त्रिदण्डि-सन्यासिनः, इति च निर्णेतुं भवयते ।

उदयनाचार्याणां कालस्तु, तैरेव लक्षणावल्यां —

"तर्काम्बराङ्क (९०६) प्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥"

इति निर्दिश्यते, स्पष्टं निर्णीयते । स च समयः क्रीस्तुशके ९८४ वर्षो भवति ।

अपिच नवमशताब्दीमध्यवर्तिभिरपि भामत्यां उदाह्रियन्ते भास्कराचार्याः । अतस्ततोऽपि पूर्वतना एवैते—इति अभ्युपगन्तव्यं भवति खलु । श्रीमतां वाचस्पति-मिश्राणां कालोऽपि तु तैरेव निरधारि न्यायसूचीनिबन्धे —

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वंकवसु (८९८) वत्सरे ।

इति । स च क्रीस्तुशके ९७६ वर्षो भवति ।

अतः, ततः पूर्वमेव एतेषां स्थितिरिति विज्ञायते ।

श्रीमद्भास्कराचार्यचरणानां भाष्यं तु ब्रह्मसूत्राणामुपलभ्यते । तत्र आदित आरभ्य अनेकेषु स्थलेषु शाङ्करमतं निराक्रियते ।

तद्यथा—

सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥

इति प्रतिज्ञाश्लोके शाङ्करभाष्यमेवाधिक्षिप्यते ; यत उत्तरत्र "तथा च वाक्यम् — "परिणामस्तु स्याद्दध्यादिवत्" इति विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति" इति, "ये तु बौद्धमतावलम्बिनो मायावादिनः, तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः" इति च मुक्तकण्ठं अभ्यधायि ।

"स्मृतौ च मननादौ त्रिदण्डयज्ञोपवीतादिनियमात्, उत्तमाश्रमः स्वरूपतो ध्वंसितश्च त्रिजति इति नातिप्रसङ्गः" इति ग्रन्थेन त्रिदण्डिसन्यासाश्रममेव श्लाघन्ते।

एवं पाञ्चरात्राधिकरणे पाञ्चरात्रागमस्य प्रामाण्यं सम्यग् व्यवस्थापयन्ति—

"इदानीं पाञ्चरात्रसिद्धान्तः परीक्ष्यते। न चेयमनुपपन्ना, चिरश्रुतेर्विरोधाभावात्। कथं वासुदेव एव उपादानकारणम् जगतो, निमित्तकारणं चेति मन्यन्ते? क्रियायोगश्च तत्प्राप्त्युपायस्तत्र उपदिश्यते। अभिगमन—उपादान—इज्या—स्वाध्याय—योगैः भगवन्तं वासुदेवमाराध्य तमेव प्रतिपद्यन्ते इति, तदेतत्सर्वं श्रुतिप्रसिद्धमेव। तस्मान्नात्र निराकरणीयं प्रत्यागः" इति।

## यादवप्रकाशानां देशकालादिनिर्णयः

श्रीमन्तो यादवप्रकाशाचार्यास्तु श्रीमद्रामानुजाचार्याणां प्रथमतो गुरवः, अन्ते शिष्याश्च समभूवन्निति गुरुपरम्परादिचारित्रकग्रन्थेभ्योऽवगम्यते।

श्रीमद्रामानुजाचार्यैः षोडशवर्षीयैः अधीतवेदवेदाङ्गयुगलैः कृतोद्वाहमङ्गलैः, स्वपितृचरणानां परमपदावाप्त्या, स्वमातृदेवताया नियमनेन शास्त्राण्यध्येतुं भूतपुरीतः प्रस्थाय, मात्रा श्रीकांतिमत्या, धर्मपत्न्या [1] रक्षमाम्बया सह सुप्रसिद्धविद्यास्थानभूता काञ्चीनगरी समासादिता, आश्रिताश्च सुप्रसिद्धपण्डितप्रकाण्डानि, चतुस्तन्त्रिणः, श्रोत्रियब्रह्मनिष्ठागरिष्ठाः, शिष्यवत्सलाः, तात्कालिकाद्वैतमतप्रवर्तकाः, श्रीमन्तो यादवप्रकाशाचार्याः। तदा श्रीमद्भिः यादवप्रकाशाचार्यैः चत्वारिंशदन्यूनहायनैर्भाव्यम्। अतो रामानुजाचार्येभ्यस्ते, चतुर्विंशतिवत्सरैः ज्येष्ठा भवेयुः। तथासति तैः क्रीस्तुशकदशमशताब्दान्तिमभागे (९९३ A. D?) समुद्भूतैर्भाव्यमिति निर्णेतुं शक्यते। क्रीस्तुशक १०३३ वर्षे रामानुजाचार्याः यादवप्रकाशाचार्यसमीपमाययुरिति सम्यङ् निर्धार्यते विमर्शकैः।

एभिरपि भास्कराचार्यैरिव, ब्रह्मसूत्राणां, तथा उपनिषदादीनामपि स्वाभिमतमतव्यवस्थापनाय भाष्यग्रन्था विरचिता इति विज्ञायते; यतः श्रीमद्भिः श्रुतप्रकाशिकाचार्यैः एकैकस्याप्यधिकरणस्य अन्तिमे भागे, श्रीशाङ्करभास्करयोरिव एतेषामपि ब्रह्मसूत्र-

1. "तञ्जम्माळ्" इति द्रविडभाषायां अस्या देव्या नामधेयमासीदिति विज्ञायते।

व्याख्यानशैली अनूद्य निराक्रियते । वेदावलम्बिभिः मतप्रवर्तकाचार्यैः सर्वैरपि प्रस्थानत्रयस्यापि भाष्याणि व्यरचितानीति सम्यक् ज्ञायते । तदानीमेव तेषां मतव्यवस्थापकत्वेन परिगणनाऽपि तदा आसीदिति च विज्ञायते ।

प्रथमतस्तु एते आचार्याः, श्रीमद्रामानुजार्यप्रतिपादितेषु तत्त्वार्थेषु विमनायमाना अपि, ब्रह्मरक्षो-मोक्षादिवृत्तान्तैः तेषामवतारविशेषतामाकलय्य, स्वमातृदेवताया उपदेशेन, श्रीदेवराजभगवन्नियमनेन च, भगवतः कृपामात्रप्रसन्नाचार्यान् श्रीमद्रामानुजमुनिपुङ्गवानाश्रित्य, समुत्सार्य एकदण्डिसन्यासं, स्वीकृत्य च त्रिदण्डिसन्यासं, तप्तचक्रांकनधारणम् , अष्टाक्षरादिमन्त्रमन्त्रार्थोपदेशं च स्वीचक्रुः ।

“ गोविन्दस्वामिनः ” इति परिगृहीतपवित्रनामधेयाः, आचार्याणां नियमनानुरोधेन “ यतिधर्मसमुच्चयः ” इति सुप्रसिद्धं विशिष्टं निबन्धवरं च प्राणैषुः । स च ग्रन्थवर इदानीमुपलभ्यते ; पूर्वाश्रमकृताः ग्रन्थाः परं नोपलभ्यन्ते । परमार्थपरिज्ञानानन्तरं परमतस्वीकारसमये कण्ठेगडूयमानां स्तान् सर्वानपि ग्रन्थान् , पूर्वतनवेषभाषादिसहोदरान् वितेनुरमी प्रामाणिकाः आचार्याः — इति अभ्यूह्यते ।

## प्राचीना विशिष्टाद्वैतिन आचार्याः

अत्र “ भगवद्बोधायन–टङ्क–गुहदेव–कपर्दि – भारुचिप्रभृत्यविगीतशिष्टपरिगृहीत – पुरातनवेदान्तव्याख्यान–सुव्यक्तश्रुतिनिकरनिदर्शितोऽयं पन्थाः ” इति अनेके प्राचीना विशिष्टाद्वैतमतावलम्बिन आचार्या नामतो गृहीताः ।

अत्र “ भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ” इति श्रीभाष्योपक्रमात् , एते बोधायनमहर्षयः ब्रह्मसूत्राणां ‘ वृत्ति ’नामकविपुलव्याख्यानकारा इति विज्ञायते, या च वृत्तिः श्रीमद्रामानुजमुनिचरणैः कार्श्मीरे सम्पादिता । “ अस्या एव ‘ कृतकोटि ’ रिति व्यवहारोऽपि दृश्यते, अयं च ‘ अवन्तिसुन्दर्यां ’ दण्डिना श्लिष्टतया चोल्लिख्यत इति ” केचित् आचार्या अभिवर्णयन्ति ।

अत्र श्रीभाष्योदाहृताः पूर्वाचार्याः के इत्याकांक्षायां “ द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपाद्यनादरेण अतिसंक्षिप्तान् ग्रन्थान् अरचयन् ” इति श्रीमत्सुदर्शन-

भट्टारकैर्विशदीकृतम् । तात्पर्यदीपिकायां च "टङ्कः — ब्रह्मनन्दी" इति श्रीमत्सुदर्शनभट्टारकैरेव व्यक्तीक्रियते । आत्मसिद्धौ भगवद्भिर्यामुनमुनिभिः "आचार्यटङ्क" इति समुदटङ्कि । श्रीमद्वेदान्ताचार्यैरपि – "निशाम्यन्तां यद्वा निजमतितिरस्कारविगमात् निरातङ्काः टङ्कद्रमिडगुहदेवप्रभृतयः" इति यतिराजसप्ततौ, "व्यासबोधायनादिगळाले यथाधिकारं प्रवृत्तमान वेदान्तसम्प्रदायत्तिरुक्कु इन्द युगारम्भत्तिले ब्रह्मनन्द्यादिगळुक्कुं पिन्बु नम्माळ्वार् प्रवर्तकरानार्" इति सम्प्रदायपरिशुद्धौ च समुदलेखि ।

एते च छान्दोग्यस्येव ब्रह्मसूत्राणामपि वाक्यनामकव्याख्यानप्रणेतारः स्युरिति केषांचित्सुधियां निर्णयः । "निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण" इति श्रीभाष्यपंक्तिविवरणतया "अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः" इति वेदान्ताचार्याः तत्त्वटीकायां विशदीचक्रुः । वाक्य — द्रमिडभाष्ययोः व्याख्येयव्याख्यानभावस्तु श्रीमद्भिर्यतिसार्वभौमैरेव सिद्धान्तितः । श्रीमद्भिः द्रमिडाचार्यैः ब्रह्मसूत्राणामपि भाष्यमभाष्यतेति श्रुतप्रकाशिकात इव सिद्धित्रयादपि ज्ञातुं शक्यते ; तद्यथा—

"भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि । विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता । विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्सांकमिश्रेणापि । तथाऽपि आचार्यटङ्क — भर्तृप्रपञ्च — भर्तृमित्र-भर्तृहरि — ब्रह्मदत्त — शङ्कर — भास्करादिविरचित — सितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धयः, न यथावत्, अन्यथा च प्रतिपद्यन्ते" इति ।

अत्र सूत्रसन्दर्भोपक्रमात्, शङ्करभास्करादिसाहचर्याच्च आचार्यटङ्कादयोऽपि ब्रह्मसूत्रव्याख्यातारः—इत्यवगम्यते । भर्तृप्रपञ्चो — बृहदारण्यकव्याख्यातेति तदीयशङ्करभाष्यतोऽवगम्यते ।

एते सर्वेऽपि उपनिषदामिव, तत्समन्वयसम्पादकशारीरकमीमांसासूत्राणामपि व्याख्यातारः— इत्यपि सिद्ध्यति । द्रमिडाचार्याणामपेक्षया पूर्वतना एव तदारचितव्याख्यानस्य व्याख्येयप्रणेतारः ब्रह्मनन्द्यपरपर्यायाः आचार्यटङ्का इति च सिद्धं भवति । "पूर्वाचार्यास्संचिक्षिपु" रिति भाष्यग्रन्थव्याख्यानसमये तत्त्वटीकायाम् — "अत्र

पूर्वाचार्याः ब्रह्मनन्दाचार्य " इति विशदीक्रियते । अत्र श्रुतप्रदीपिकायां तु "श्रीद्रमिडाचार्यग्रन्थव्याख्यातिसंक्षिप्तत्वात् " इति विवरणं दृश्यते ।

अतः, श्रीमन्तौ तत्रभवन्तौ टङ्क-द्रमिडावुभावपि, उपनिषदामिव ब्रह्मसूत्राणामपि व्याख्यानकारा विति सुदृढं सिद्ध्यति ।

एवमेभिः भगवद्बोधायनादिभिः परिपोषितः, अनादिनिधनोऽनवद्यो ह्ययमायं सिद्धान्तः - प्रपन्नजनकूटस्थैः श्रीमच्छठगोपसूरिभिः समभिवर्धितः । तथाचोक्तम् अभियुक्तैः —

'द्रिकाभ्यां श्रुत्यामिर्बुधगमनीनिस्थपुटिता
यदुन्त्या मीमांसा श्रुतिशिखरतत्त्वं व्यवृणुत ।
तदादौ गाथाभिर्मुनिरधिकविंशाभिरिह नः
कृती सारग्राहं व्यतरदिह सङ्गृह्य कृपया ॥ " इति ।

ततः परं च श्रीमन्नाथमुनिभिः न्यायतत्त्वाख्ये विशिष्टे प्रबन्धे विशदीकृतः, एतद्वेदान्तयुगलीरहस्यार्थः श्रीमद्विशिष्टाद्वैतसम्प्रदायः । ततश्च तत्पौत्रैः लोकोत्तरप्रतिभा-समुदञ्चितसकलतन्त्रस्वातन्त्र्यैः पाण्डित्य — वैदग्ध्य—कवित्वनैपुण्यनिधिभिः प्रतिवादि-वारणप्रकटाटोपविपाटनक्षमैः श्रीमद्यामुनमुनीन्द्रैः — सिद्धित्रय — आगमप्रामाण्य — पुरुषनिर्णयादि - - पटिष्ठ — गरिष्ठ — विशिष्ट — प्रबन्धरत्नैः अतिमात्रं प्रकाशं नीतः । भगवद्भिर्भाष्यकारैरस्माभिस्तु सकलकल्याणगुणगणपरिपूर्णैः, कुमतिमतविततितूलवातूलाय-मान -- युक्तिनिकरपरिकर्मितैः निरुपमैर्निबन्धवर्यैः, सचायं सम्प्रदायकल्पकमहीरुहः सम्यक् पर्यवस्थापितो विजयतेतमाम् । यथा चोक्तम् —

"नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः ।
त्रातं सम्यग्यतीन्द्रैरिदमखिलतमः कर्शनं दर्शनं नः ॥ " इति ।

एवं निरुपमनिस्सीमवैभवोपेतस्य सकलशास्त्रसर्वस्वभूतस्यास्य श्रीमतो वेदार्थ-संग्रहस्य गहनगभीरार्थत्वात् , मन्दमतीनां अस्मादृशां दुरवगाहतामाकलय्य, परम-कारुणिकाः महानुभावाः सर्वतन्त्रस्वतन्त्राः श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयाः श्रीसुदर्शनभट्टारकाः श्रीमद्वरदाचार्यपादसेवासमधिगतवेदार्थसंग्रहपरमतात्पर्याः, श्रीभाष्य-

स्यैव अतिगम्भीरभाष्यकारवचःसन्दर्भार्थावगमलम्पिद्धाङ्गनोपयिस्मृतां अन्वर्थां तात्पर्य-दीपिकां कलितललितमृदुलगुम्फसन्दर्भां व्याख्यामतटिकां अनुजगृहुः, परमया कृपया।

अस्या अपि 'श्रुतप्रकाशिका' इत्यपि व्यवहारः समस्ति। तदपि युक्ततम-मेवेत्युत्पश्यामः; यत एतेषां श्रीसुदर्शनभट्टारकमहाभागानां "श्रुतप्रकाशिकाचार्याः" इत्येव प्रसिद्धिः सर्वत्र समाविरस्ति।

"गुरुभ्योऽर्थः श्रुतः शब्दैः तत्प्रयुक्तैश्च योजितः।
सौकर्याय बुभुत्सूनां संकलय्य प्रकाश्यते॥"

इति श्रीभाष्यव्याख्यायां प्रतिपादितः परमार्थः, अत्रापि समुल्लसति किल।

एते च महाप्राज्ञाः सुनिशितधियः श्रीवत्साङ्कमिश्रा इव एकसन्धाग्राहिणः, अहङ्कारममकारदूरगा विनयविभूषिता इति, हेम्नः परं आमोदः। को वा तदितरः प्रेक्षावान् तादृशमहाप्रभावसंकलितमहाप्रबन्धनिबन्धा, तथा प्रतिपादयेत् "गुरुभ्योऽर्थः श्रुतः", "कः कृत्स्नं वेत्ति भाष्यार्थम्", "भाष्यं चेच्छृणोत् स्वयं यतिपतिः" इत्यादि।

एतेषां चरित्रसमयवैभवादिकं सर्वमपि श्रीभाष्यव्याख्यानस्य भूमिकायां प्रपञ्च-यिष्यते, श्रीमतां भगवद्भागवताचार्याणां परमेण अनुग्रहेण अचिरादेव प्रकाश्यमानस्य, इति शम्॥

## कृतज्ञतानिवेदनम्

अपदार्थमिमं दासजनं पदार्थीकृत्य, महाप्राज्ञैकनिर्वहणीये तद्वैभवप्रकाशक-श्रीवैष्णवसम्प्रदायग्रन्थसम्पादनकार्यभरेऽस्मिन् नियोजितवतः, पङ्गोरुपरि गङ्गाप्रवाह इव, सर्वदा सर्वथा चातिमात्रं कटाक्षामृतरसमभिवर्षयतः, श्रीशेषाद्रिशिखावलाहकस्य, दीन-जनमन्दारस्य, श्रीमन्मङ्गलदेवतालिङ्गितस्य, सर्वाङ्गीणरमणीयदिव्यमङ्गलगुणविग्रहविभूतिकस्य कलियुगप्रत्यक्षदैवतस्य, निखिलवेदवेदान्त-तदुपबृंहणादिनिखिलप्रमाणप्रतिपाद्यमानवैभवस्य, एतत्कृतिपतेः, श्रीमतः श्रीनिकेतनस्य, सर्वदेशसर्वकालसर्वावस्थास्वपि धन्यवादानति-मात्रमर्पयन्, "सदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितम्" इति सन्ततं साञ्जलिबन्धं निवेदयामि।

एतद्ग्रन्थमालाप्रकाशनोपयिकान् सर्वानपि संविधानविशेषान् सम्पाद्य, तथा, एतद्ग्रन्थप्रकाशनायापि महदुपकृतवद्भ्यः, श्रीतिरुमले—तिरुपतिदेवस्थानधर्मकर्तृसंघसभ्य-महोदयेभ्यः, तथा, तत्सकलकार्यनिर्वहणधुरंधराय महोदाराय श्री चे० अन्नारावुमहोदयाय च परश्शतं धन्यवादानर्पयामि ।

हितभाषिणः, मितभाषिणः, मृदुमधुरभाषिणः, शान्तशमदमाद्यनन्तकल्याणगुण-गणपरिपूर्णाः, सादराभिमानं ये वा सर्वदा सर्वथा एतद्ग्रन्थरत्नप्रकाशनाय, न केवलं समुचितं सौकर्यं, अमूल्यानभिप्रायान्, अपि तु, सहृदयतासम्पदा " मुखभाषण " मपि महार्घमन्वगृह्णन्, तेभ्यः सहृदयतल्लजेभ्यः महामहोदयेभ्यः अस्मदध्यक्षचरणेभ्यः श्री. प. वें. रामानुजस्वामिमहाभागेभ्यः, सदा अहमधमर्णः, साञ्जलिबन्धं कृतज्ञः, क्रियमाणज्ञः, करिष्यमाणज्ञश्च भवामि ।

एतद्ग्रन्थसम्पादनायापि सर्वेष्वप्यंशेषु अत्यन्तं साहाय्यकमाचरितवति मम प्रियसुहृदि चिरायुषि विदुषि श्री इयुण्णि — गोपालकृष्णमाचार्यशिरोमणौ मङ्गलाशासन-पुरस्सरी कृतज्ञता प्रकाशनीया भवति ।

अत्र च पाठभेदनिवेशनं, तथा आकरादिनिर्देशेषु च अनेकेषां अनेके श्रीकोशाः उपयुक्ताः, अनेकेषां साहाय्यकमपि विनियुक्तम्, तेभ्यः सर्वेभ्योऽपि महाशयेभ्यः कृतज्ञतां सबहुमानं बहुमुखं निवेदयामि ।

## विज्ञप्तिः

भ्रान्तिः पुरुषधर्मत्वात्, अत्र ज्ञाताज्ञाता अनेके दोषाः भ्रमप्रमादानवधानादिभिः निपतिताः भवेयुः, तान् सर्वान् सहृदयशिरोमणयः — " गुणदोषौ बुधो गृह्णन् " इति न्यायेन परिपाल्य, दयार्द्र ' हृदयाः वत्सलाः मर्षयेयुः, आवेदयेरंश्च परमया कृपया द्वितीयसंस्करणे समीकर्तुम् ' इति सविनयमभ्यर्थ्यते ।

प्रसीदतु भगवान् पद्मासहायः श्रीनिवासः ; प्रसीदन्तु च श्रीमन्तः भगवद्रामानुजाचार्याः सकलदिव्यसूर्याचार्यस्वरूपाः, श्रीमद्भिः सुदर्शनभट्टारकैस्सह ; प्रसीदन्तु च महानुभावाः श्रीमन्तो महान्तश्च सहृदयाः ।

सर्वदेशदशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्धताम् ॥

रामानुजार्यदिव्यज्ञा प्रतिवासरमुज्ज्वला ।
दिगन्तव्यापिनी भूयात् सा हि लोकहितैषिणी ॥

श्री. वे. प्रा. परिशोधनालयः
आपद्पुरी
१७–१०–१९५३.
श्रीविजयशरदाश्वयुजविजयदशमी

इति
निवेदयिता
ति. कु. वे. न. सुदर्शनदासः



श्रीः

श्रीमते रामानुजाय नमः

# प्रतिपाद्यविषयसंग्रहः

( विषयः ) ( पत्रसंख्या )

| ( विषयः ) | ( पत्रसंख्या ) |
|---|---|

| ( विषयः ) | ( पत्रसंख्या ) |
|---|---|

( विषयः ) ( पत्रसंख्या )

( विषयः ) ( पत्रसंख्या )

| ( विषयः ) | | ( पत्रसंख्या ) |
|---|---|---|

h

( विषयः ) ( पत्रसंख्या )

( विषयः ) ( पत्रसंख्या )

( विषयः ) ( पत्रसंख्या )

| ( विषयः ) | | ( पत्रसंख्या ) |
|---|---|---|

( विषयः ) ( पत्रसंख्या )

( विषयः ) ( पत्रसंख्या )

( विषयः ) ( पत्रसंख्या )

1

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

# विषयानुक्रमणिका

## प्रथमो मङ्गलश्लोकः



## द्वितीयो मङ्गलश्लोकः



## स्वपक्षसंक्षेपः



## द्वितीयश्लोकविवरणम्

### परपक्षप्रतिक्षेपः



### श्रुत्यर्थतत्त्वनिरूपणम्

न्यायापेतत्वनिरूपणम्



## प्रथमश्लोकविवरणम्

श्रीमद्रामानुजमुनिपुङ्गवदिव्यचरणावेव

शरणम्



॥ श्रीरस्तु ॥

## ॥ मङ्गलाशासनम् ॥

---

जयतु जगदशेषं रञ्जयन्नञ्जनाद्रौ
शुभगुणविभवेन श्रीमता विग्रहेण ।
अनुकलमनुकम्पोद्वेलया लीलया च
श्रुतिपरिषदि पुंसामुत्तमः श्रूयमाणः ॥

ऊर्ध्वौ हस्तौ यदीयौ प्रतिभटदलने बिभ्रतः शङ्खचक्रे
सव्यावङ्घ्री स्वकीयावभिदधदधरो दक्षिणो यस्य पाणिः ।
तावन्मात्रं भवाब्धिं गमयति भजतामूरुगो वामपाणिः
श्रीवत्साङ्कश्च लक्ष्मीर्यदुरसि लसतः तं भजे वेङ्कटेशम् ॥

चक्रं शास्ति सुकर्मयोगकलनं, ज्ञानं च शङ्खस्तथा
पाणिश्चारुकटिप्रसज्जिततलः श्रीभक्तियोगं तथा ।
श्रीमत्पादसरोजदर्शककरो योगं प्रपत्तिं परम्
यस्यान्वर्थचतुर्भुजस्स भगवान् जेजेतु लक्ष्मीसखः ॥

शेषाद्रिशिखररत्नं त्रिभुवनदुरितान्धकारमार्ताण्डम् ।
भक्तजनपारिजातं वन्दे श्रीवेङ्कटेशमखिलेशम् ॥

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ॥

ॐ

श्रियै नमः

श्री श्रीनिवासपरब्रह्मणे नमः



शुभ्रोर्ध्वपुण्ड्रविलसन्मकुटः सुनासः
श्रीशङ्खचक्रयुगलान्वितपाणिपद्मः ।
पद्मालयाञ्चितमनोहरदिव्यवक्षाः
देदीप्यते निगमशैलशिरःप्रदीपः ॥

श्री श्रीनिवासपरब्रह्मणे नमः
श्रीमते रामानुजाय नमः



( श्रीवेङ्कटाचले विराजमानः दिव्यमङ्गलविग्रहः )

* श्रीवेङ्कटेशकरधारितशङ्खचक्रः
वक्षःस्थलार्पितरमः कलितागमार्थः ।
संस्थापिताखिल-तदालयसंविधानः
रामानुजो विजयते यतिराजराजः ॥

* गुरुपरम्परासु, श्रीवेङ्कटाचल – इतिहासमालायां, "तिरुमलै ओलुगु" नामके अस्माभिरद्य प्रकाश्यमाने प्रबन्धे, श्रीरामानुज – अष्टोत्तरशत – शतान्तादि – दिव्यप्रबन्धादिषु च एते विशेषाः सर्वेऽपि समभिवर्ण्यन्ते ।

॥ श्रीरस्तु ॥

## ॥ मङ्गलाशासनम् ॥



जयतु जयतु धीरः सर्वविद्याविहारः
शमदमगुणपूरः श्रीशसेवाधिकारः ।
कुमतिवनकुठारः कुण्डलीशावतारः
कलिकलुषविदारः कान्तिमान् भाष्यकारः ॥

पाषण्डद्रुमषण्डदावदहनः चार्वाकशैलाशनिः
बौद्धध्वान्तनिरासवासरपतिः जैनेभकण्ठीरवः ।
मायावादिभुजङ्गभङ्गगरुडः त्रैविद्यचूडामणिः
श्रीशैलेशजयध्वजो विजयते रामानुजोऽयं मुनिः ॥

जयति सकलविद्यावाहिनीजन्मशैलः
जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ।
निखिलकुमतिमायाशर्वरीबालसूर्यः
निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥

नमः प्रणवशोभितं नवकषायखण्डाम्बरम्
त्रिदण्डपरिमण्डितं त्रिविधतत्त्वनिर्वाहकम् ।
दयाञ्चितदृगञ्चलं दलितवादिवाग्वैभवम्
शमादिगुणसागरं शरणमेमि रामानुजम् ॥

पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च ।
श्रीमानाविरभूत् भूमौ रामानुजदिवाकरः ॥

॥ श्रीरस्तु ॥

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते सुदर्शनभट्टाय नमः

## ॥ मङ्गलाशासनम् ॥



श्रीभाष्यकृदुपन्यस्तः यः श्रीशैलपतेः पुरः ।
वेदार्थसंग्रहो भायात् वेदशास्त्रप्रभाकरः ॥

श्रुतप्रकाशिकाचार्यैः श्रीसुदर्शनसूरिभिः ।
प्रणीता दीप्यतां नित्यं दिव्या तात्पर्यदीपिका ॥

भगवद्भाष्यकारेण कृतो वेदार्थसंग्रहः ।
तात्पर्यदीपिकायुक्तो जीयात् सुमनसां मुदे ॥



श्रीः

श्रियै नमः

श्रीश्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजमुनिविरचितः

# वेदार्थसंग्रहः

अशेषचिदचिद्वस्तुशेषिणे शेषशायिने ।
निर्मलानन्तकल्याणनिधये विष्णवे नमः ॥ १ ॥

श्रीमत्-सुदर्शनसूरि-प्रणीता

## तात्पर्यदीपिका

वरदं द्विरदाद्रिशेखरं कमलाया दयितं दयानिधिम् ।
सकलार्थिजनार्थितप्रदं प्रणमामि प्रणतार्तिहारिणम् ॥ १ ॥

कृत्वाऽनवद्यं निगमान्तभाष्यं निराकृतं येन भयं श्रुतीनाम् ।
प्रतारितानामबहुश्रुतैस्तं रामानुजं योगिनमाश्रयामः ॥ २ ॥

श्रीभाष्यकृदुपन्यस्तो यः श्रीशैलपतेः पुरः ।
वेदार्थसङ्ग्रहस्यास्य कुर्मः तात्पर्यदीपिकाम् ॥ ३ ॥

अशेषेत्यादिश्लोकद्वयेन [1]प्रारिप्सित [+]प्रकरणाऽविघ्नपरिसमाप्त्यर्थं, श्रोतॄणां तत्प्रसिध्यर्थं च स्मृत्याचारप्राप्तं श्रुत्या मङ्गलमाचरति । श्रोतृबुद्धिसमाधानार्थ-[2]मार्थः प्रतिपाद्यसंक्षेपश्च क्रियते । तत्रेष्टदेवतोपासनारूप[3] मङ्गलाचारः, स्वपक्षस्थापनरूपः

+ "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥" (पराशरोपपुराणम्)

१. आरिप्सित—पाठान्तरम्.

२. आदौ—पा०

३. उपासनरूप—पा०

प्रतिपाद्यसंक्षेपश्च क्रियते श्रीमन् आर्यैश्च प्रथमश्लोकेन । स्वपक्षे च प्रतिपाद्यमुपायोपेयात्मकम् । तत्र सिद्धवस्तुस्वरूपमुपेयम्, चतुर्थ्यन्तैः पदैस्सूच्यते । नमश्शब्देन उपायस्सूच्यते । तत्र उपेयस्य ब्रह्मण उभयविभूतिविशिष्टत्वं[1] पूर्वार्धेनोच्यते । निर्मलेत्यादिपदेन उभयलिङ्गत्वमुच्यते । तत्र विप्रतिपत्तिविषयस्य तत्त्वमस्यादि[2]-वाक्यस्यार्थनिष्कर्षमुखेन लीलाविभूतिविशिष्टत्वमुच्यते अशेषचिदचिद्वस्तुशेषिणि इति प्रथमपदेन । जगद्ब्रह्मणोस्सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनम् । शरीरत्वं च चेतनं प्रत्यनन्यार्थशेषत्वम् । एवं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वे सति हि भेदश्रुतिभिर्घटकश्रुतिभिश्चास्य वाक्यस्याविरोधः । अशेषपदं चेतनबहुत्वं दर्शयति । कतिपयचेतननियन्तृव्यावृत्तिश्चानेन सिध्यति । वस्तुशब्देन परमार्थत्वं विवक्षितम् । अशेषवस्तुशेषिणि इत्येनावताऽलम्, किमर्थं चिदचिच्छब्दप्रयोग इति चेत्, उच्यते :—

याद्वप्रकाशमते सर्वमपि चेतनमेव, तत्र घटादेश्चैतन्यानभिव्यक्तिमात्रमेवेति न चिदचिद्विभाग इति, तद्व्यावृत्तिश्चिदचिच्छब्दाभ्याम् । किञ्च शाङ्करमते जीवब्रह्मणोस्सामानाधिकरण्यं स्वरूपैक्यनिबन्धनम्, अचिद्ब्रह्मणोस्तु बाधार्थम्, इति सामानाधिकरण्यस्य नैकरूपोऽर्थ इति तद्व्यावृत्तिश्चाभिप्रेता । किञ्च भास्करमते जीवब्रह्मणोर्भेदश्रुतय औपाधिकभेदविषयाः, अचिद्ब्रह्मणोर्भेदश्रुतयः स्वाभाविकभेदविषया इति भेदश्रुत्यर्थो नैकरूपोऽभ्युपगत इति तद्व्यावृत्तिश्चाभिप्रेता । निश्शेषेत्यपि वक्तव्ये अकारस्य मङ्गलार्थत्वादशेषेत्युक्तम् । एवं लीलाविभूतिविशिष्टत्वमुक्तं भवति ।

नित्यविभूतियोगमाह शेषशायिन इति । शेषशब्दः पत्नीपरिजनादेः प्रदर्शनार्थः[3] । ताच्छील्यार्थप्रत्ययान्तत्वात्, भोगविभूतिसम्बन्धस्य स्वाभाविकतया नित्यत्वमभिप्रेतम् । एवमुभयविभूतिविशिष्टत्वमुक्तम् ।

1. वैशिष्ट्यम्—पा०
२. तत्त्वमसीति—पा०
३. अयं: केषुचित् कोशेषु नास्ति ।

अथोभयलिङ्गत्वमाह निर्मलानन्तकल्याणनिधय इति । निर्मलश्च अनन्तश्च कल्याणनिधिश्च निर्मलानन्तकल्याणनिधिः। [1]"निर्गुणम्" [2]"निरवद्यम्" [3]"निरञ्जनम्" [4]"अपहतपाप्मा" [5]"समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यादिषु ब्रह्मविशेषणत्वेन निर्दोषत्वादिवाचिपदानां प्रयोगात्। नैर्मल्यं हेयप्रत्यनीकत्वम्। निर्मलत्वमनुकूलत्वञ्च परिच्छिन्नेषु केषुचित्प्राकृतवस्तुष्वप्यस्तीति तद्व्यावृत्यर्थं, सकलचेतनाचेतन[1] परित्यागपूर्वकं प्राप्यत्वादिसिध्यर्थं च तदुपयोग्यानन्त्यमाह अनन्तशब्देन। अनेन वाङ्मनसनिवृत्तिरूपार्थगुणनिषेधपरिहारश्चाभिप्रेतः। कल्याणशब्दः अनुकूलवाचित्वादलाऽऽनन्दाभिधायी। न हि प्रतिकूलोपेक्ष्येषु कल्याणशब्दप्रयोगः। यद्वा अनुकूलवेदनीयत्वात्सर्वे गुणाः कल्याणशब्दवाच्याः। निर्मलकल्याणशब्दाभ्यां [2] सामान्यविशेषगोबलीवर्दनयावभिप्रेतौ। निधिशब्देन गुणगुणिभावो विवक्षितः। अनेन [6]"आनन्दो ब्रह्म" इत्यादिष्वानन्दशब्दस्यानन्दिवाचित्वं सिद्धमित्यभिप्रेतम्, [7]"आनन्दं ब्रह्मणो विद्वान्" इति व्यतिरेकनिर्देशात्। एवं हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिङ्गत्वं ब्रह्मण उक्तम्।

विष्णुशब्दः धर्मिनिर्देशकः। अनेन शेषित्वमन्तर्यामित्वपर्यन्तमिति स्फोरितम्। रूढ्या देवताविशेषनिर्णयश्च। एवं चतुर्थ्यन्तैः पदैः उपेयवस्तु निरूपितम्।

अथोपायं सूचयति नम इति। [8]"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इत्यत्र मद्भक्तशब्दस्य प्रतिपदमन्वयेन नमस्याया भक्त्यन्तर्गतत्वात्[3]। ध्यानार्चनप्रणामादिरिति हि वक्ष्यते। एवं देवतोपासनरूपमङ्गलाचारः श्रौतः कृतः। प्रतिपाद्ये [4] स्वपक्षस्थापनसंक्षेपश्चार्थतः कृतः॥ १॥

---

१. सकलेतर–पा०
२. सामान्यविशेषाभ्यां गोबलीवर्दन्यायोऽभिप्रेतः–पा०
३. भक्त्यन्तर्भावात्–पा०
४. प्रतिपाद्यस्वपक्ष–पा०

1,3. आत्मा. उ. २.
2,4. बृह. उ. ६-२-२१.
5. वि. पु. १-२२-५३.
6. तै. उ. भृ. ६-२.
7. तै. उ. आन. ४-१.
8. गीता. १८-६५.

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत्
परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।

अथ द्वितीयेन गुरूपासनरूपमङ्गलाचारः श्रौतः क्रियते । आर्थः प्रतिपाद्ये परपक्षनिरासस्संक्षेपश्च क्रियते । तत्र पूर्वार्धेन परपक्षोपन्याससंक्षेपः । उत्तरार्धेन तन्निरासस्संक्षेपः । परं ब्रह्मैवेत्यादि । परम् — हेयप्रत्यनीकत्वकल्याण-गुणाकरत्वाभ्यां सर्वविलक्षणम् । एवकारः विरोधं स्फोरयति । संश्रितदुरितापहरत्वेन तदिष्टफलप्रदत्वेन च यदाश्रयणीयम्, तदेवाज्ञानादिपरवशं चेत् कोऽन्यो रक्षक इति भावः । अज्ञम्—अविद्यातिरोहितस्वरूपम् । अत एव भ्रमपरिगतम्—विविधभेद-दर्शनशालि । संसरति — भेददर्शनकृतजन्मजरामरणादिसांसारिकदुःखभागित्यर्थः । एवं शाङ्करमतमुपन्यस्तम् ।

अथ भास्करमतमुपन्यस्यते तत् परोपाध्यालीढमिति । परशब्देन, उपाध्यन्तरनिरपेक्षं स्वत एव प्रस्तुतब्रह्मव्यतिरिक्तत्वमुच्यते । पराभ्युपगतमिथ्या-भूताविद्यान्यत्वं च विवक्षितम् । आलीढम्—सम्बद्धम् । विवशम्—कर्मपरवशम् ।

अथ यादवप्रकाशमतम् । अशुभस्यास्पदमिति । अचिद्गतपरिणामहेता-रूपाशुभस्य, चिद्गतापुरुषार्थयोग्यता[1]रूपाशुभस्य च आस्पदमित्यर्थः । जीवब्रह्मणो-र्भेदस्य स्वाभाविकत्वाभ्युपगमान्न ब्रह्मण्यपुरुषार्थान्वय इति वैषम्यं दुर्वचम्; अभेदस्यापि स्वाभाविकत्वोपगमेनापुरुषार्थान्वयादिति भावः ।

"अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ, चिद्ब्रह्मणोस्त्वभेद[2]स्स्वाभाविकः, भेदस्त्वौपाधिकः, मुक्तावभेदवचनात्" इति भास्करमतम्; "चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ, मुक्तौ भेदस्यापि निर्देशात्" इति यादवप्रकाशमतम् । तस्मात् उक्त एवार्थः ।

तत्र अशुभस्यास्पदमिति न यादवप्रकाशमतोपन्यासः । परं ब्रह्मेत्यादिपदेन शङ्करमतोपन्यासः, तत् परोपाध्यालीढमित्यादिपदेन भास्करमतोपन्यासः, इतरत्त्वर्थ-सिद्धमिति केचित् । तदानीम् अशुभस्यास्पदमिति अचिद्गताशुभास्पदत्वमुच्यते ।

१ अन्वयरूप—पा०
२. अभेद एव स्वाभा—पा०

श्रुतिन्यायापेतं जगति विततं मोहनमिदम्
तमो येनापास्तं स हि विजयते यामुनमुनिः ॥ २ ॥

स्वपक्षसंक्षेपः

अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः ॥

ततोपि पक्षत्रयोपन्यास इति निर्वाहो वरम् । कस्यचिन्मतस्यार्थसिद्धत्वादवान्तरविभागस्य कल्प्यत्वोपपत्तेः ।

"इति" शब्दः पक्षत्रयस्वरूपपरः ।

अथ तन्निरासंक्षेपः। **श्रुतिन्यायापेतमिति** । श्रुतिः--प्रमाणम् । तदनुग्राहकः तर्कः- न्यायः । तन्मतसाधकतर्कानुगृहीतं प्रमाणं नास्तीत्यर्थः । यद्वा श्रुतिन्यायापेतम्—तन्मतं प्रमाणतर्कविरुद्धम् । बाधकतर्कानुगृहीतप्रमाणमस्तीति भावः । तन्निरासे किं कारणमित्यत्राह **जगति विततमिति** । श्रुतिन्यायापेतमिति प्रसिद्धत्वान्न तन्निरासे यत्नः कार्य इति चेत्तत्राह **मोहनमिदं तम** इति । तमः--यथार्थज्ञानावरणम् । मोहनम्—अपरमार्थे[1] सम्यक्त्वधीहेतुः । अपास्तम्--दूरत उत्सारितम् । इत्यर्थः परमतनिरासः ।

स हीत्यादिना गुरूपासनमुक्तम् । [1] "जयत्यतिबलो राम" इतिवत् स हि विजयत इत्युक्तम् । अनेन प्राकरणिकार्थस्य सांप्रदायिकत्वमुक्तं भवति । एवमार्थं स्वपक्षस्थापनपरपक्षप्रतिक्षेपसंक्षेपं कुर्वता, देवतागुरूपासनरूपोभयविधं मङ्गलं श्रौतमाचरितं भवति । तथा पूर्वैरनुष्ठितम् [2] "नमस्कृत्य हृषीकेशम्" [3] "नमो भगवते तस्मै व्यासाय" इत्यादिषु । तथा च श्रुतिः [4] "अस्य देवं" इत्यादि ॥ २ ॥

अथ प्रथमश्लोकार्थमीषद्विस्तरेण वदन् प्राकरणिकमर्थं प्रतिजानीते सप्रमाणम् **अशेषजगदित्यादिना** । 'श्रूयते नित्य' मिति व्युत्पत्तिसिद्धेन श्रुतिशब्देन वेदस्यापौरुषेयत्वान्निर्दोषत्वमभिप्रेतम् । निकरशब्देन अधीयमानकृत्स्नशाखार्थपर्यालोचनं विवक्षितम् । तत्राप्यनन्यपरपरभागसिद्ध इति दर्शयितुं शिरश्शब्दः । वक्ष्यमाणाभिप्रायेण "अयमर्थ" इत्युक्तम् । समधिगतः — सम्यगधिगतः, अनधीत-

१. अपार्थे--पा०

1. रामा. यु. ४२ स. ३३ श्लो.
2. भार. १-१-२६.
3. भार. १-१-३.
4. श्वेता. उ. ५-३२-४.

जीवपरयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुष

शास्त्रान्तरार्थप्रतिपादकेतिहासपुराणादिभिस्सहाधिगत इत्यर्थः । जगतो मिथ्यात्वात् न सवर्ग्गमनोपायोपेयपराः श्रुतयः; अपि तु निर्विशेषवस्तुज्ञानस्यैव मोक्षोपायत्वप्रतिपादका इति शङ्कां व्युदस्यति अशेषजगद्धितानुशासनेति । जगद्धितानुशासनेति । जगद्धितज्ञापनप्रवृत्तस्य वेदस्य, पूर्वमेव भ्रान्ते जगति प्रत्यक्षाद्यनवगतभ्रमान्तरोत्पादकत्वमनुपपन्नमित्यभिप्रायः । हितम्—उपायोपेयात्मकम् । अनुशासनम्—विविच्य ज्ञापनम् । "अनुपूर्वश्शासिर्विविच्य ज्ञापनार्थो दृष्टः" इति हि शाब्दाः । अशेषजगच्छब्देन सर्वाधिकारिण उच्यन्ते । हितानुशासनपरो वेदः कथं [1]त्रिवर्गाद्यपुरुषार्थं पुरुषार्थं बोधयतीति चेत्—तत्त[2]दधिकारिविशेषापेक्षया पुरुषार्थत्वमस्तीति तद्बोधनम् । तर्हि [1]"श्येनेनाभिचरन् यजेत" इति कथं पापतममत्यन्ताहितं कर्म विदधातीति चेत्, उच्यते—तच्च भक्ष्यविशेषैर्बालानिव शठान् वशीकर्तुम् । यद्वा देवब्राह्मणहिंसकादिदुष्टनिग्रहार्थकत्वेन तस्य हितत्वमिति । यद्वा अभिचारादिकर्माराध्यत्वतत्तत्फलप्रदत्वरूपभगवदैश्वर्यविशेषज्ञापनेन तदभिधायिशास्त्रस्य हितपरत्वमिति ।

प्रथमश्लोके उपायस्यातिसंक्षेपेण सूचितत्वात् तं विस्तरेण वदन्, प्रतिज्ञातस्यार्थस्य शरीरमाह जीव इत्यादिना । यद्वा याथात्म्यशब्देन—[2]"तत्त्वमसि" इति वाक्ये त्वंपदस्य चेतनद्वयगर्भत्वं सूचितम् । [3]"ऐतदात्म्यमिदं सर्वं तत्सत्यम्" इति परमात्मात्मकत्वं हि सत्यमुक्तम् । तस्माद्याथात्म्यशब्दस्यायमेवाभिप्रायः । ज्ञानपूर्वकशब्देन वाक्यार्थज्ञानमात्रस्यानुपायत्वं सूचितम् । वर्णाश्रमधर्मेतिकर्तव्यताशब्देन कर्मणां विविदिषासाधनत्वं, समुच्चयवादश्च व्यावर्तितौ । परमपुरुषशब्देन ध्येयस्य हेयप्रत्यनीकत्वकल्याणगुणाकरत्वाभ्यां सर्वविलक्षणत्वं देवताविशेषत्वञ्चोक्तम् ।

* अत्र ग्रन्थो गलित इव भाति, जीवपरशब्दयोः अर्थस्य अनुक्तत्वात्, याथात्म्यशब्दस्य च प्रथमविकल्पगोचरस्य अर्थस्य अकथनाच्च ।

१. स्वर्गाद्यपुरुषधर्म्—पा०
२. अधिकारापेक्षया—पा०

1. पू. मी. १-४-५, साम. २६ ब्रा. ३-८.
2,3. छा. उ. ६. (९,१०,११,१२,१३-१४-१६) ३

**चरणयुगलध्यानार्चनप्रणामादिः अत्यर्थप्रियः, तत्प्राप्तिफलः ।**

[1]"तमेवं विद्वान्—नान्यः पन्था" इति श्रीपुरुषसूक्तानुरोधात् । चरणयुगलशब्देन स्वामिनि [1]दासस्यानुगुणा स्थितिर्दर्शिता, [2]"सर्वदा चरणद्वन्द्वं व्रजामि" इत्यादि-वचनानुगुण्यात् । ध्यानार्चनप्रणामादिरित्यत्र आदिशब्देन [3]"सततं कीर्तयन्तो माम्" इत्यादिकीर्तनस्मरणादयो विवक्षिताः । ध्यानार्चनप्रणामकीर्तनादयस्सर्वे उपासनशरीरान्तर्गताः । वर्णाश्रमधर्माः प्रयाजादिस्थानीयाः; आग्नेयादिषट्कस्थाने ध्यानार्चनप्रणामादिः । ध्यानम् — मानसम् । नामसंकीर्तनम् — वाचिकम् । अर्चनादि— कायिकं च कर्म । यद्यपि तत्र ध्यानस्य प्राधान्यमितरापेक्षया, तथाऽपि तद्विपाकरूपपरभक्त्यपेक्षया अर्चनादितुल्यव्यवहारः । एवं त्रिविधमुपासनम् । यथा [4]"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु", [5]"सततं कीर्तयन्तो माम् यतन्तश्च दृढव्रताः", [6]"स्मरणं कीर्तनं विष्णोः श्रवणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णोर्भक्तिश्च नवलक्षणा" इत्यादि । मद्याजी— मदर्चनपरः । वेदनध्यानादिशब्दैरन्यत्रमोक्तौ अर्चनप्रणामादिसहितध्यान-स्योपायत्वम् न्यायस्मृत्यनुगृहीतश्रुतिसिद्धम् । तत्र सामान्यविशेषन्यायात् वेदनादि-शब्दानां ध्यानादिपरत्वसिद्धिवत्, स्मृत्यनुगृहीतत्वादर्चनप्रणामादिसहितध्यानपरत्व-सिद्धिरित्यर्थः । तस्मात् ध्यानार्चनप्रणामादिस्सर्वोऽप्युपेयत्विरोधिनिरासकः । अत्यर्थप्रिय इति । ध्यानार्चनप्रणामादिस्सर्वोऽप्यत्यर्थप्रीतिपूर्वकः कार्यः । 'मन्मना भव' इत्यादि-वचने, 'मद्भक्तो मन्मना भव, मद्भक्तो मद्याजी भव' इति प्रतिपदं मद्भक्तपदान्वयादिति भावः । एवं प्रथमश्लोकसंक्षिप्तमुपायस्वरूपं विस्तृतम् । उपेयमाह तत्प्राप्तिफल इति । अयमर्थ इति अर्थशब्दस्य विशेषणत्वात्पुल्लिङ्गता । पूर्वमुपायस्यातिसंक्षिप्तत्वेन तद्वि-वरणपरत्वादस्मिन् ग्रन्थे उपायप्रधाननिर्देशः ।

---

1. दासानुगुणा—पा०

1. पुरुषसूक्तम् ।
2. जि. स्तो. २.
3. गीता. ९-१४.
4. गीता. १८-६५.
5. गीता. ९-१४.
6. श्रीभाग. ७-५-२३,२४.

अस्य जीवात्मनोऽनाद्यविद्यासंचितपुण्यपापरूपकर्मप्रवाहहेतुक-ब्रह्मादिसुर-नर-तिर्यक्-स्थावरात्मक-चतुर्विधदेहप्रवेशकृत-तत्तदात्माभिमानजनितावर्जनीयभवभयविध्वंसनाय, देहातिरिक्तात्मस्वरूप-तत्स्वभाव-

---

उपेयम्—निर्विशेषज्ञप्तिमात्रम्। निवर्त्यम्—मिथ्यारूपमविद्यादिकम्। उपायः—वाक्यार्थज्ञानमात्रम्। न हि मिथ्यासर्पः गरुडध्याननिवर्त्यः। अपि तु नायं सर्प इति ज्ञानमात्रनिवर्त्यः। तापत्रयभवदुःखस्योपायतेत्यत्राह अस्येति। परमात्मैक्यानुपपत्तये तद्भिन्नत्वभावना। प्रत्यक्षसिद्धत्वमुच्यते अस्येति पदेन। अनादिशब्देनान्योन्याश्रयः परिहृतः। अविद्या—[1]"श्रयतां चाप्यविद्यायास्स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः॥" इत्युक्तप्रकारा अविद्या अत्राऽभिप्रेता। तया संचितं अविद्यासंचितम्। [2]"अविद्यासंचितं कर्म" इति हि स्मृतिः। उत्क्षेपणादिव्यावृत्त्यर्थम् पुण्यपापशब्दः। कथं पुण्यस्याविद्यासंचितत्वम्? तद्धि देहातिरिक्तात्मज्ञानवताऽनुष्ठीयते? उच्यते; यथा आत्मनो देहादिविलक्षणत्वात् देहात्मज्ञानमविद्या। तया च पापं क्रियते। एवम् आत्मनो भगवच्छेषत्वात् स्वतन्त्रात्मज्ञानमप्यविद्या। तन्मूलं स्वर्गादिफलदकर्मानुष्ठानम्। इति पुण्यस्याविद्यासंचितत्वोपपत्तिरिति। देहात्माभिमानिभिरजडत्वादिधर्मके आत्मनि जडत्वाद्यारोपवत् भगवदात्मके आत्मनि स्वनिष्ठत्वारोपणं भ्रान्तिरेवेत्यविद्यैव हि सा। एवंविधकर्मप्रवाहहेतुकः चतुर्विधदेहप्रवेशः। तत्कृतः तत्तद्देहेष्वात्माभिमानः। अनात्मनि अस्वे च आत्मात्मीयधिया कर्म, कर्मणा शरीरप्रवेशः, तच्छरीरसंबन्धेन अविद्या इति प्रवाहोऽनादिना[1]। तेन अवर्जनीयं भवभयम्। जन्मजरामरणादिभयं मिथ्येति सहस्रकृत्व उद्घोषणेऽपि निवर्तयितुमशक्यमित्यभिप्रायेण अवर्जनीयमित्युक्तम्। तद्विध्वंसनायेति। एवं निवर्त्यमुक्तम्। अत्र जन्यजनकभावोपपादनेन, प्रतीतिमात्रसिद्धत्वाभावात् उपायद्वारा निवर्त्यमिति सिद्धम्। देहातिरिक्तात्मस्वरूप[2]-तत्स्वभावेति। स्वरूपम्—ज्ञानानन्दैकलक्षणम्। स्वभावः—भगवच्छेषत्वम्। उपासक-

१. प्रवाहः अनादिः—पा०
२. तत्स्वरूप—पा०

1. वि. पु. ६-७-१०.
2. वि. पु. २-१२ ६६.

तदन्तर्यामिपरमात्मस्वरूप—तत्स्वभाव—तदुपासन—तत्फलभूतात्मस्वरूपाविर्भावपूर्वकानवधिकातिशयानन्दब्रह्मानुभवज्ञापने प्रवृत्तं हि वेदान्तवाक्यजातम्—[1] "तत्त्वमसि", [2] "अयमात्मा ब्रह्म", [3] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः", [4] "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", [5] "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन", [6] "ब्रह्मविदाप्नोति परम्",

---

त्वानुगुणौ स्वरूपस्वभावौ जीवस्योक्तौ। तदन्तर्यामिपरमात्मस्वरूपतत्स्वभावेति। तदन्तर्यामिशब्देन जीवस्य परमात्मशरीरत्वे[1] तद्वाचिशब्दस्य परमात्मपर्यन्तत्वं [2]सिद्धम्। परमात्मस्वरूपम्—ईशितृत्वम्। स्वभावः—प्रणतसौलभ्यम्। उपास्यत्वानुगुणौ स्वरूपस्वभावौ ईश्वरस्योक्तौ। एवं सिद्धरूपमुपेयमुक्तम्। तदुपासनशब्देन उपाय उक्तः। स पूर्वं विस्तृत इति नात्र विस्तृतः। उपेयस्य प्राप्तिप्रकार उच्यते तत्फलभूतेत्यादिना। ज्ञापन इति। ज्ञापनशब्देन पूर्वोक्तानुशासन[3]शब्दस्य पदार्थः। वेदान्तवाक्यजातशब्देन एकवाक्यमात्रपर्यालोचनं व्यावृत्तम्। ब्रह्मानुभवज्ञापन इति निर्देशेन वेदान्तवाक्यानामुपासनरूपकार्यप्रधानत्वशङ्का व्यावृत्ता। उक्तार्थविषयाणि तानि वाक्यान्याह तत्त्वमसीति। षड्विधतात्पर्यलिङ्गोपेतत्वात् तत् प्रथममुक्तम्। तत्र जीवविशेषस्य ब्रह्मतादात्म्यं प्रतिपन्नमिति, जीवमात्रस्य ब्रह्मात्मकत्वपरं वाक्यमाह अयमात्मा ब्रह्मेति। अथ घटकश्रुतिमाह य आत्मनीति। देवताविशेषनिर्णयार्थमाह एष इति। उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वे प्रमाणमाह तमेतमिति। उपासनमेवोपाय इत्यत्र प्रमाणमाह ब्रह्मविदिति। ब्रह्मवित्—परमपुरुषोपासकः।

---

१. परमात्मपर्यन्तत्वेन—पा०
२. इति सिद्धम्—पा०
३. शब्दस्य—पा०

1. छा. उ. ६-९-४.
2. बृ. उ. ६-४-५.
3. श्री. भा. ३२६. माध्य. बृ. उ. ५-७.
4. सु. उ. ७.
5. बृ. उ. ६-४-२२.
6. तै. उ. आन. १.

स्वरूपभेदो वाचामगोचरः, स्वसंवेद्यः, [1] "ज्ञानस्वरूपम्" इत्येतावदेव निर्देश्यम्। तच्च सर्वेषामात्मनां समानम् ॥

[2] "एकस्वरूपभेदो हि [1]बाह्यकर्मावृतिप्रजः। देवादिभेदे[2]ऽपध्वस्ते नास्त्येवावरणो हि सः ॥" इत्यस्यार्थो विवृतो भवति। स्वरूपभेदो वाचामगोचरः स्वसंवेद्य इत्यनेन "* प्रत्यस्तमितभेदम्" इत्यादिवचनं व्याख्यातं भवति। एकस्वरूपेति ग्रन्थस्यायमर्थः — ज्ञानानन्दैकस्वरूपस्यात्मनो बुद्धिसुखाद्यन्तरभेदः संसारहेतुकर्मजन्यशरीराख्यावरणहेतुकः। देवादिशरीरभेदे [3]विनष्टे सति नात्मनो भेदः। आवरणो हि सः—स हि देवादिशरीरभेद आवरणः। तस्मात् तन्नाशे तत्कृतभेदो नात्मनि विद्यत इत्यर्थः। [4]नात्मनाऽऽवरण इति पाठान्तरे अर्थः स्पष्टः। प्रत्यस्तमितेत्यादिग्रन्थस्यायमेवार्थः—प्रत्यस्तमितदेवमनुष्यादिभेदम्, सत्तामात्रम्, न तु जन्मादिविकारास्पदम्; अत एवागोचरम् वचसाम्—देवादिभेदवचसाम्, जायत इत्यादिवचसां च अगोचरम्। तुच्छत्वव्यावृत्त्यर्थमाह "आत्मसंवेद्य"मिति। तच्च स्वरूपतो धर्मतश्च ज्ञानम्। तच्च प्रकाशशब्दाभिलप्यमित्यर्थः। संसारदशायां यो व्यवहारः तद्गोचरं चेत्, जानामीत्यपि तदानीं व्यवहारात् ज्ञानस्वरूपम् इत्यपि न वक्तुं शक्यम्; यदि शक्यं, तर्हि देवादिव्यवहारस्य शक्य इत्यत आह "ज्ञानस्वरूपम्" इत्येतावदेव निर्देश्यमिति। न हि औपाधिकाकाराभावे [5] तद्वाचिशब्दागोचरत्वमिव स्वाभाविकरूपवाचिशब्दागोचरत्वमित्यर्थः। सर्वशब्दागोचरं चेत् वचसामगोचरमित्यपि न शक्यते वक्तुमिति भावः। तच्च सर्वेषामात्मनां समानमित्यनेन "पुमानेको व्यवस्थितः" इत्यादिषु एकशब्दो व्याख्यातो भवति। "तज्ज्ञानस्समतालम्बि कार्यं साम्यं हि मुक्तये", [3] "निर्दोषं हि समं ब्रह्म" इत्यादिवचनात् ॥

* प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ (वि. पु. ६-७-५३.)

१. बाह्यकर्मप्रवृत्तिज.—पा०
२. विध्वस्ते—पा०
३. नष्टे—पा०
४. "नात्मनावरण इति"—क्वचिदेतत् न दृश्यते। अवरणः—पा०
५. आकारभेदे विध्वस्ते—पा०

1. वि. पु. १-४ ४०.
2. वि. पु. २-१४-३३.
3. गीता. ५-१९.

एवंविधचिदचिदात्मकप्रपञ्चस्य उद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूतः समस्तहेयप्रत्यनीकतया, अनन्तकल्याणैकतानतया च, स्वेतरसमस्तवस्तुविलक्षणस्वरूपः, अनवधिकातिशयासंख्येयकल्याणगुणगणः, [1]"सर्वात्म" [2]"परं ब्रह्म" [3]"परं ज्योतिः" [4]"परतत्त्व" "परमात्म" [5]सदादिशब्दभेदैर्निखिलवेदान्तवेद्यो भगवान्नारायणः पुरुषोत्तम इत्यन्तर्यामिस्वरूपम् । [1]तस्य च वैभवप्रतिपादनपराः श्रुतयः स्वेतरसमस्तचिदचिद्वस्तुजातान्तरात्म-

अथान्तर्यामिस्वरूपमाह एवंविधेति । जीवस्वरूपस्य देवादिशरीरस्य च प्रस्तुतत्वात् एवंविधेत्युक्तम् । यद्वा सत्त्वादिगुणगणपरिच्छिन्नयोक्तम् । उद्भवेत्यादिना जगत्कारणत्वमोक्षप्रदत्वे उक्ते । स्वेतरवैलक्षण्यं तृणादेरप्यस्ति, तद्व्यावृत्त्यर्थं शोधकवाक्यार्थोभयलिङ्गत्वेन वैलक्षण्यमुच्यते समस्तेत्यादिना । कल्याणशब्दः आनन्दवाची । समस्तवस्तुविलक्षणस्वरूप इत्यत्र स्वरूपशब्देन निरूपकांशोऽभिप्रेतः । उपास्यत्वप्राप्यत्वोपयोगिगुणजाताभिप्रायेणाह अनवधिकातिशयासंख्येयकल्याणगुणगण इति । सद्ब्रह्मात्मादिसाधारणशब्दैः, भगवन्नारायणपुरुषोत्तमाद्यसाधारणशब्दैश्च एक एवाभिधीयत इत्याह सर्वात्मेत्यादिना । भगवच्छब्देन—हेयप्रत्यनीकत्वं, कल्याणगुणास्पदत्वं च विवक्षितम् ; नारायणशब्देन—उभयविभूतिमत्त्वम् ; पुरुषोत्तमशब्देन—विभूतिभूतचिदचिद्विलक्षण्यम् । इत्यन्तर्यामिस्वरूपम् । इत्युक्तं भवतीत्यर्थः । एवं भेदश्रुत्यर्थः उक्तः । अयं चाभेदश्रुतिविरुद्ध इति शङ्कायाम् , तदैकार्थ्यमुच्यते [2]तस्य चेत्यादिना । [3]तस्य—भेदश्रुतिप्रतिपन्नस्य । वैभवप्रतिपादनपराःश्रुतय इति । भेदश्रुत्यानुगुण्यात् , घटकश्रुत्यैकार्थ्यात् , सामानाधिकरण्यस्वाभाव्याच्च अभेदश्रुतयोऽपि तद्वैभवप्रतिपादनपरा इत्यभिप्रायः । सामानाधिकरण्यवाक्यस्य तद्वैभवप्रतिपादकत्वं कथमित्यत्राह स्वेतरेत्यादिना । अन्तर्यामिणः परमात्मनः तदेकनियाम्यत्वेन कृत्स्नस्य शरीर-

१. अस्यैव च—पा०
२. अस्य चेत्यादिना—पा०
३. अस्य—पा०

1. आर. ३-२०.
2. तै. उ. २-१२.
3. छा. उ. ८-२.
4. छा. उ. ६-२-१.
5. छा. उ. ६-२-१.

तथा निखिलनियमनम्, तच्छक्ति–तदंश–तद्विभूति–तद्रूप–तच्छरीर–तत्तनुप्रभृतिभिश्शब्दैः, तत्सामानाधिकरण्येन च प्रतिपादयन्ति ॥

त्वात्, तद्वाचिनश्शब्दाः शरीरिपर्यन्तमभिदधतीति, समानाधिकरणवाक्यैर्भिन्नप्रवृत्तिनिमित्तपदैः, व्यधिकरणवाक्यैश्च तद्वैभवमेव[1] प्रतिपाद्यत इति सर्वश्रुतीनामैकार्थ्यमित्यर्थः। तन्नियमनं प्रतिपादयन्ति इत्यन्वयः। [1]"परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत्" [2]"विष्णोरंशाः द्विजोत्तम" [3]"विष्णोरेता विभूतयः" [4]"परस्य ब्रह्मणो रूपम्" [5]"शरीरं ते जगत्सर्वम्" [6]"तत्सर्वं वै हरेस्तनुः" [7]"तानि सर्वाणि तद्वपुः" इत्यादिषु शक्त्यंशादिशब्दानां प्रयोगो द्रष्टव्यः। तच्छक्तितदंशेत्यादिना प्रतिपदं तच्छब्दप्रयोगावृत्तिः, एकैकस्य निरपेक्षहेतुत्वाभिप्रायेण। यद्वा, यं परमात्मानं प्रति यदेतज्जगत् शरीरमुच्यते, तमेव प्रति तदेवेदं जगत्, शक्तिः अंश इति चोच्यते। अत एव पितृत्व–पुत्रत्ववत् प्रतिसम्बन्धिभेदात् अविरोधो दुर्वचः। [2]अत एव शरीरादिशब्दानाम् [3]एकार्थपरत्वेनाविरोधे वाच्ये, शरीरादिशब्दानुगुणं शक्त्यादिशब्दानाम् अविरोधेनार्थो वर्णनीयः। "अन्तरो यमयति" इति लक्षणपूर्वकं शरीरभावस्य मुख्यतयोक्तत्वात्, कार्योपयोगिविशेषणत्वात् शक्तिः; विशिष्टे ब्रह्मणि विशेषणतयैकदेशत्वात् अंशः; नियाम्यतया विभूतिः; व्याप्यत्वे सति नियाम्यत्वात् शरीरम्; अतः सर्वेषामैकार्थ्यमित्यभिप्रायः। शरीरतनुशब्दोपादानं दृष्टान्ताभिप्रायेण कृतम्। शरीरतनुशब्दयोरिव शक्त्यादिशब्दानामविरोधो वर्णनीय इति भावः। एवं प्रथमश्लोकार्थ इत्थं विवृतः ॥

१. वैभवं प्रतिपाद्यम्—पा०
२. अतः शरीरादि—पा०
३. ऐकार्थ्यतत्परत्वेन—पा०

1. वि. पु. १-२२-५६.
2. वि. पु. १-२२-१७.
3. वि. पु. १-२२-३२.
4. वि. पु. १-२-१७.
5. रा. यु. १२०-२६.
6. वि. पु. १-२२-३८.
7. वि. पु. १-२२-८७.

अथ शाङ्करमतसंक्षेपः

तस्य वैभवप्रतिपादनपराणामेषां सामानाधिकरण्यादीनां विवरणे प्रवृत्ताः केचन—“ निर्विशेषज्ञानमात्रमेव ब्रह्म ; तच्च नित्यमुक्तस्वप्रकाशमपि[1] तत्त्वमस्यादिसामानाधिकरण्यावगतजीवैक्यम् ; ब्रह्मैव अज्ञम्, बध्यते, मुच्यते च ; निर्विशेषचिन्मात्रातिरेकि ईश—ईशितव्याद्यनन्तविकल्पस्वरूपं कृत्स्नं

---

अथ द्वितीयश्लोकस्य पूर्वार्धस्य परपक्षत्रयोपन्यासपरस्य अर्थं क्रमाद्विवरिष्यन्, प्रथमं [2]शाङ्करमतसंग्रहं विवृणोति तस्य वैभवेत्यादिना । “ तस्य, एषाम् ” इति पदद्वयस्यायमभिप्रायः—तस्य—भेदश्रुतिभिः समस्तचिदचिद्वस्तुविलक्षणतया प्रतिपन्नस्य ब्रह्मणः ; एषाम्—भेदश्रुत्यानुगुण्यात् सामानाधिकरण्यस्वाभाव्यात् , घटकश्रुत्यैकार्थ्याच्च तद्वैभवप्रतिपादनपराणामिति भावः । आदिशब्देन घटकश्रुतयो विवक्षिताः, भेदनिषेधश्रुतयो वा । “ एषां विवरणे प्रवृत्ताः केचन ” इत्यनेन विरोधस्स्फोरितः । केचन वर्णयन्ति इत्यन्वयः । निर्विशेषज्ञानमात्रमेव ब्रह्म इति । मात्रशब्देन क्वचिदंशे जडत्वव्यावृत्तिः[3] । कार्त्स्न्येन ज्ञानमात्रमित्यर्थः । [1]“ स यथा सैन्धवघनः ” इति श्रुतिवाक्यार्थोऽत्राभिप्रेतः । यद्वा निर्विशेषशब्देन श्रौतनिषेधोऽभिप्रेतः । तेन ज्ञातृज्ञेयस्वरूपविशेषाः, गुणरूपविशेषाश्च निषिद्धा भवन्ति । ज्ञानशब्देन ज्ञानस्वरूपतोक्तिरूपार्थगुणनिषेधोऽभिप्रेतः । ज्ञानस्वरूपस्यैव ज्ञातृत्वं, ज्ञेयत्वं च सिद्धान्तिनोऽभिमतम् । अतस्तद्व्यावृत्त्यर्थं [2]“ न दृष्टेर्द्रष्टारम् ” [3]“ यस्यामतम् ” इत्याद्युक्तज्ञातृत्वज्ञेयत्वनिषेधाभिप्रायो मात्रशब्दः । एवकारेण सविशेषत्वपरवाक्यानाम् अतत्त्वावेदकत्वमभिप्रेतम् । स्वयाथात्म्याऽज्ञानपूर्वको बन्धः स्वप्रकाशे वस्तुनि न सम्भवतीति ब्रह्म नित्यमुक्तमेवेत्यत्राह नित्येति । वस्तुतो नित्यमुक्तस्वप्रकाशमपि, जीवैक्यस्य समानाधिकरणवाक्यावगतत्वात् , ब्रह्मैव अविद्यातिरोहितम्, भेदभ्रममनुभवतीति कल्प्यम् । अत एव बन्धश्च मोक्षश्चोपपन्न इत्यर्थः । जीवैक्यं श्रुतिसिद्धमभ्युपगतं चेत्, श्रुतिसिद्ध—ईश्वरेशितव्यादिभेदोऽप्यभ्युपगन्तव्य इत्यत्राह निर्विशेषेति । अद्वैतवाक्यबलेन तेषां वाक्यानाम् मिथ्याविषयत्वमाश्रयणीयमित्यर्थः ।

---

१. स्वप्रकाशस्वभावमपि — पा०
२. मायिमत—पा०
३. व्यावृत्तिर्वा—पा०

1. बृ. उ. ६-६-१२.
2. बृ. उ. ५-४-२.
3. केन. उ. २-३.

जगत् मिथ्या; कश्चिद्बद्धः, कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते; इतःपूर्वं केचन मुक्ता इत्ययमर्थो मिथ्या; एकमेव शरीरं जीववत्, निर्जीवानीतराणि शरीराणि; तच्च शरीरं किमिति न व्यवस्थितम्; आचार्यो ज्ञानस्योपदेष्टा मिथ्या; [1]प्रमाता मिथ्या; शास्त्रं च मिथ्या; शास्त्रजन्यज्ञानं च मिथ्या; एतत्सर्वं मिथ्याभूतेनैव शास्त्रेणावगतम्" —इति वर्णयन्ति ॥

अथ भास्करपक्षसंक्षेपः

अपरे तु— "अपहतपाप्मत्वादिसमस्त[2]कल्याणगुणोपेतमपि ब्रह्म,

बद्धमुक्तव्यवस्थासिद्ध्यर्थमात्मभेदोऽभ्युपगन्तव्य इत्यत्राह कश्चिदिति। बद्धमुक्तव्यवस्था श्रुतिसिद्धत्वादङ्गीकार्या। शुकादयो हि मुक्ताः इत्यत्राह इतः पूर्वमिति। चेष्टादिभिः सर्वशरीराणामात्मवत्त्वं सिद्धम्। तथा सति सुखदुःखव्यवस्थायां चात्मनि भेदेन बन्धमोक्षव्यवस्था स्यादित्यत्राह एकमेव शरीरमिति। जीवैक्ये सर्वशरीराणां सजीवत्वाभावात् सुखादिप्रतिसन्धानाभाव इत्यर्थः। एकस्य सजीवत्वं च ऐक्योपदेशबलात् स्वीकृतम्। एकमेव शरीरं सजीवं चेत् तच्छरीरको जीवः श्रवणमननादिभिः [3]लब्धाद्वैतज्ञानस्स्यादिति, बन्धो न स्यादित्यत्राह तच्च शरीरं किमिति न व्यवस्थितमिति। "इदं शरीरं सजीवम्; एतच्छरीरको जीवः ज्ञानवान्" इति निश्चेतुमशक्यमित्यर्थः। शिष्याचार्यव्यवस्थायाम् आत्मबहुत्वं स्यात्। शास्त्रस्य च प्रामाण्यात् ब्रह्मव्यतिरिक्तं सत्यं स्यात् इत्यत्राह आचार्य इति। प्रमाता। श्रोता विवक्षितः। एकैकमेव निरपेक्षं दूषणमिति ज्ञापनाय मिथ्याशब्दाऽऽवृत्तिः। इति वर्णयन्ति इति। वर्णनशब्देन ग्रन्थप्रपञ्चः अर्थदौस्स्थ्यं च विवक्षितम् ॥

अथ द्वितीयश्लोकपूर्वार्धस्थं भास्करमतोपन्याससंग्रहं विवृणोति अपरे इत्यादिना। विवरणे प्रवृत्ताः इत्यनुवर्तते। अपरे .... व्यवस्थिताः इत्यन्वयः। प्रमाणसिद्धस्य बाधायोगात् सगुणत्वं तैरभ्युपगतमित्याह अपहतपाप्मत्वादि इति। स्वतोऽपहतपाप्मत्वादियुक्तमपि ऐक्योपदेशाऽन्यथानुपपत्त्या उपाधिसंबन्धो[4]ऽप्यभ्युप-

१. चाचप्रमाता—पा०.
२. कल्याणोपेतम्—पा०
३. बुद्धाद्वैत—पा०
४. अपिः कुत्रचिन्नास्ति।

[1]तेनैव ऐक्यावबोधेन, केनचिदुपाधिविशेषेण संबद्धम्, बध्यते, मुच्यते च, नानाविधमलरूपपरिणामास्पदं च" इति व्यवस्थिताः ॥

अथ यादवपक्षसंक्षेपः

अन्ये पुनः, ऐक्यावबोधयाथात्म्यं वर्णयन्तः—"स्वाभाविकनिरतिशयापरिमितोदारगुणसागरं ब्रह्मैव सुर – नर – तिर्यक् – स्थावर – नारकि—स्वर्ग्यपवर्गि—चेतनैकस्वभावम्, स्वभावतो विलक्षणं चाविलक्षणं च वियदादिनानाविध[2]परिणामास्पदं च" इति प्रत्यवतिष्ठन्ते ॥

अथ भास्करपक्षप्रतिक्षेपः

तत्र प्रथमपक्षे[3] श्रुत्यर्थपर्यालोचनपराः दुष्परिहरान् दोषान्

---

गम्यत इत्याह तेनैवेति। ऐक्यावबोधेन .... व्यवस्थिताः इत्यन्वयः। केनचित्—देवमनुष्याद्युपाधिषु अन्यतमेन। तथा सति बन्धमोक्षव्यवस्थाप्युपपद्यत इत्याह बध्यते मुच्यते चेति। बध्यते-संसरति। एवं जीवत्वं ब्रह्मण उक्तम्। अथाचिद्रूपपरिणाममाह नानाविधेति। मलरूपशब्दो दोषरूपपरः ॥

अथ यादवप्रकाशमतसंग्रहं विवृणोति अन्ये पुनः इत्यादिना। "ऐक्यावबोधयाथात्म्यं वर्णयन्तः" इत्युपालम्भः। यथा अचिद्ब्रह्मणोः जीवब्रह्मणोश्च ऐक्यम् एकरूपं प्रतिपन्नम्, तथा भेदोऽप्येकरूपः प्रतिपन्न इति अचिद्ब्रह्मणोर्भेदस्य स्वाभाविकत्वम्, जीवब्रह्मणोर्भेदस्य औपाधिकत्वं च न वाच्यम्। उभयत्र भेदः स्वाभाविकः इति "वर्णयन्तः" इत्यभिप्रायः। तत्रापि सगुणत्वाङ्गीकारमाह स्वाभाविकेति। अपरिमितत्वम्—असङ्ख्येयत्वम्। उदारः—उत्कृष्टः, प्रशस्तः। तादृशः गुणसागरः—गुणगणः यस्येति बहुव्रीहिः। जीवगताचिद्गताशुभास्पदत्वमाह सुरनरेति। स्पष्टम् ॥

तत्रेत्यादिना द्वितीयश्लोकोत्तरार्धोक्तपरपक्षप्रतिक्षेपसंक्षेपं[4] विवृणोति श्रुत्यर्थपर्यालोचनपराः इति। पर्यालोचनम्—परितः आलोचनम्। अभेद—भेद—घटक—

---

१. एतेनैव—पा०
२. नानाविधमलरूपपरिणामास्पदम्—पा०
३. प्रथमे पक्षे, प्रथमपक्षस्य—पा०
४. संक्षेपपदं क्वचिन्न दृश्यते।

उदाहरन्ति । तथा हि--प्रकृतपरामर्शितच्छब्दावगतस्य ब्रह्मणः स्वसङ्कल्पकृतजगदुदयविभव[1]विलयादयः [1]"तदैक्षत बहु स्यां प्रजायेय" इत्यारभ्य [2]"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" इत्यादिभिः पदैः प्रतिपादिताः; तत्संबन्धितया प्रकरणान्तरनिर्दिष्टाः सर्वज्ञता-सर्वशक्तित्व-सर्वेश्वरत्व-सर्वप्रकारत्व-समाभ्यधिकनिवृत्ति-सत्यकामत्व-

---

समानाधिकरण--श्रुति-तत्पौर्वापर्यालोचनपरा; न त्वेकवाक्यमात्रतृप्ता इत्यर्थः । उदाहरन्ति । * भगवद्यामुनाचार्या इति शेषः । तत्र प्रथमं [3]"तत् त्वमसि" इति वाक्यस्य निर्विशेषपरत्वे अनेकदूषणानि [2]वक्ष्यन्, पूर्वं तच्छब्दावगतगुणव्रात[3]माह प्रकृतेत्यादिना । प्रकृतपरामर्शि इतिपदं हेतुगर्भम् । तच्छब्दः गुणविशिष्टवाची प्रकृतपरामर्शित्वादित्यर्थः । कथं गुणानां प्रकृतत्वमित्यत्राह स्वसङ्कल्पेति । आदिशब्देन अनुप्रवेशनामरूपव्याकरणादयो गृह्यन्ते । जगदुदयविभवविलयादय एव तत्तद्वाक्यप्रतिपन्नतया विशेष्यन्ते । तदैक्षतेत्यादिना[4] पदैः प्रतिपादिताः इत्यन्तेन तत्प्रकरणाधीतगुणाः उक्ताः । सर्वशाखाप्रत्ययन्यायेन प्रकरणान्तराकृष्टान् गुणानाह तत्संबन्धितयेति । कारणवस्तुसंबन्धितया प्रकरणान्तरोक्ता गुणा गण्यन्ते सर्वज्ञतेत्यादिना । [4]"यस्सर्वज्ञस्सर्ववित्" [5]"पराऽस्य शक्तिर्विविधैव श्रूयते" [6]"स ईशोऽस्य जगतो नित्यमेव, नान्यो हेतुर्विद्यते ईशनाय" [7]"न तत्समश्चाभ्यधिकश्च दृश्यते" [8]"सत्यकामस्सत्यसङ्कल्पः", [9]"तस्य भासा सर्वमिदं

---

* सिद्धित्रये ।

---

१. लयादयः--पा०
२. विवक्षन्--पा०
३. गुणजातम्--पा०
४. इत्यादिभिः--पा०

1. छा. उ. ६-२-३.
2. छा. उ. ६-८-६.
3. छा. उ. ६-१-४.
4. मु. उ. १ १-१०.
5. श्वे. उ. ६.
6. श्वे. उ. ६.
7. श्वे. उ. ६.
8. छा. उ. ८-७-१.
9. कठ. उ. २-५-१५.

सत्यसङ्कल्पत्व-सर्वावभासकत्वाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणाः, [1]"अपहतपाप्मा" इत्याद्यनेकवाक्यावगतनिरस्तनिखिलदोषता च सर्वे तस्मिन् पक्षे विहन्यन्ते ॥

अथ स्यात्—उपक्रमेऽपि एकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय, तस्य कारणभूतस्यैव सत्यताम्, विकारभूतस्य[1] च असत्यताम् मृद्दृष्टान्तेन दर्शयित्वा, सत्यभूतस्यैव ब्रह्मणः [2]"सदेव

---

विभाति" इत्यादिवाक्येषु अमी सर्वज्ञत्वादिगुणा द्रष्टव्याः । एकैकम्—अनवधिकातिशयाः, कल्याणगुणगणाः, असङ्ख्येया इत्याह अनवधिकेति । हेयप्रत्यनीकत्वमाह अपहतपाप्मेति । अमी गुणास्सर्वे मुमुक्षूपयोगित्वेन प्रकरणान्तरोक्ताः आकृष्टा भवन्ति । सर्वाकाङ्क्षानिवृत्तौ सत्यां तदेककारणत्वसिद्धिः । सर्वावभासकत्वं च सृष्टजगत्-स्थित्युपयोगित्वेन कारणत्वापेक्षितम् । हेयप्रत्यनीकत्वं च सर्गाद्युपयोगि । हेयास्पदत्वे कर्मवश्यत्वेन स्वातन्त्र्यादिभङ्गप्रसङ्गात् । ते सर्वे [2]तच्छब्दावगता विहन्यन्ते इत्यर्थः ॥

अथ स्यादित्यादि । उपक्रमशब्देन उपक्रमोपक्रमो विवक्षितः । [3]"तत् त्वमसि" इति वाक्यापेक्षया [4]"तदैक्षत" इत्यादिवाक्यस्य उपक्रमत्वेऽपि [5]"एकविज्ञानेन सर्वविज्ञान"प्रतिज्ञावाक्यं तस्याप्युपक्रमभूतमित्यभिप्रायः । एकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय इति । एकविज्ञानेन सर्वविज्ञानद्वारा, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया, कारणस्यैव सत्यत्वं फलितमित्यर्थः । कारणस्यैव सत्यत्वं दृष्टान्तवाक्ये कण्ठोक्तमित्याह तस्येति । दार्ष्टान्तिकवाक्येऽपि निर्विशेषपरत्वमुक्तमित्याह सत्यभूतस्येति । निखिलभेदशब्देन स्वगतभेदो विवक्षितः, विजातीयभेदान्तर्गतत्वात् स्वगतभेदस्य । शोधकवाक्यानामपि निर्विशेष-

---

1. विकारजातस्य—पा०
2. सच्छब्दावगताः—पा०

1. छा. उ. ८-७-१.
2. छा. उ. ६-२-१.
3. छा. उ. ६-१३-२.
4. छा. उ. ६-२-३.
5. छा. उ. ६-१-८.

सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इति सजातीय–विजातीय–निखिलभेदनिरसनेन निर्विशेषतैव प्रतिपादिता। एतच्छोधकानि प्रकरणान्तरवाक्यान्यपि — [1]"सत्यं ज्ञानमनन्तं ब्रह्म" [2]"निष्कलम्" [3]"निष्क्रियम्"; [4]"निर्गुणम्" [5]"निरञ्जनम्"[2] [6]"विज्ञानम्" [7]"आनन्दम्" इत्यादीनि सर्वविशेषप्रत्यनीकैकाकारतां[3] बोधयन्ति। न च [4]एकाकारबोधनेऽपि पदानां पर्यायता, एकत्वेऽपि वस्तुनः सर्वप्रत्यनीकाकारत्वोपस्थापनेन सर्वपदानामर्थवत्त्वात् इति ॥

---

परत्वमाह एतदिति। एतच्छोधकानि कारणवाक्यावगतस्य शोधकत्वात्तदैकार्थ्येन निर्विशेषपराणीत्यर्थः। सामानाधिकरण्यस्वाभाव्यात् "निर्गुणम्" इत्यादिशोधकवाक्यान्तरैकार्थ्याच्च, "सत्यं ज्ञानम्" "विज्ञानम्" "आनन्दमयम्" इत्यादीनि शोधकवाक्यानि निर्विशेषपराणीत्यभिप्रायेणाह—सत्यं ज्ञानमिति। सत्यादिपदानां निर्विशेष[6]परत्वे प्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यलक्षणहानिरित्यत्राह सर्वविशेषप्रत्यनीकेति। प्रतियोगिभेदाः[7] प्रवृत्तिनिमित्तानीत्यर्थः। तर्हि तद्व्यावृत्तिरूपधर्मस्स्यादित्यत्राह एकाकारतामिति। आकारशब्दः स्वरूपवाची स्वरूपमेव व्यावृत्तिरिति भावः। निर्विशेषवस्तुपरत्वे पदानां पर्यायत्वं * स्यादिति पर्यायत्वशङ्कां परिहरति —नचेति। कुत इत्यत्राह—एकत्वेपीति। अर्थवत्त्वात्—प्रयोजनवत्त्वात् ॥

---

* समानशक्यतावच्छेदकत्वे सति विभिन्नशक्यतावच्छेदकत्वं पर्यायत्वम्।

---

१. एतत् केषुचिन्न दृश्यते।
२. एतत् केषुचिन्नोध्दृतम्।
३. प्रत्यनीकाकारताम्—पा०
४. एकाकारतावबोधने—पा०
५. सर्वविशेषप्रत्यनीक—पा०
६. निर्विशेषवस्तुपरत्वे—पा०
७. प्रतियोगिविशेषाः—पा०

1. तै. उ. आन. १.
2. ..
3. आत्मा. उ.
4. आत्मा. उ.
5.
6. ते. उ. भृ. १०-४.
7. तै. उ. आन. १.

नैतदेवम्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानम्[1], सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावात् न सेत्स्यति; सत्यमिथ्यात्वयोः एकताप्रसक्तिर्वा; अपि तु, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा[2] सर्वस्य तदात्मकत्वेनैव[3] सत्यत्वे सिध्यति ।

---

अथ[4] सिद्धान्तमाह नैतदेवमिति । एकविज्ञानं, सर्वविज्ञानं च किमेकं ज्ञानम्? उत ज्ञानद्वयम्? एकत्वपक्षे किमेकविज्ञानेन सर्वविज्ञानं सर्वस्याभावादुच्यते? उत एकस्य सर्वस्य च तादात्म्यात्? इति विकल्पमभिप्रेत्य प्रथमं दूषयति एक इति । एक इत्यादि स्पष्टम् । न सेत्स्यति इति । सर्वशब्दस्य सर्वाभाववाचित्वाभावादिति भावः । द्वितीयं दूषयति सत्यमिथ्यात्वयोः एकताप्रसक्तिर्वा इति । जगतस्सत्यत्वं ब्रह्मणो मिथ्यात्वं वेत्यर्थः । [5]द्वित्वपक्षे च एकविज्ञानेन सर्वविज्ञानम्; स्थालीपुलाकन्यायेन सर्वस्यैकसाधर्म्यात् यत्[6] स्यात् तत् त्वन्मते न युक्तम्, कार्यस्य असत्यत्वात्[7]; एकवैधर्म्याद्वा स्यात्, देवदत्तप्राधान्यज्ञानेन इतरेषामप्रधानतया ज्ञातत्ववत् । तदानीं त्वन्मते "मिथ्यात्वेन" इत्यध्याहारस्स्यात् । [8]ज्ञातव्याभावेन निवृत्तिलक्षणा वा स्यात् । ज्ञानद्वयवैरूप्यात् अस्वारस्यं च इत्यभिप्रायः[*] । अपि त्विति । न हि घटपटयोस्सत्यत्वेऽपि घटज्ञानेन पटो ज्ञातो भवति इति तद्व्यावृत्त्यर्थमाह सर्वस्य तदात्मकत्वेनैव[9] सत्यत्व इति । ब्रह्मात्मकत्वेनैव[10] सत्यत्व इत्यर्थः । न हि कारणावस्थे ब्रह्मणि ज्ञाते कार्यावस्था ज्ञाता

* श्रुतप्र. आनन्दमयाधि. पुटम् २५७, पङ्क्तिः २६-२७.

---

१. प्रतिज्ञानमिति क्वचिन्नास्ति ।
२. सर्वविज्ञानम्—पा०
३. तदात्मनैव—पा०
४. सिद्धान्त्याह—पा०
५. द्वितीयपक्षे—पा०
६. यदि—पा०
७. असाम्यात्—पा०
८. ज्ञातृज्ञेयाभावेन—पा०
९. तदात्मनैव—पा०
१०. ब्रह्मात्मनैव—पा०

अयमर्थः—श्वेतकेतुं प्रत्याह—"स्तब्धोऽसि ; उत तमादेशमप्राक्ष्यः? ...." [1] इति ;—परिपूर्ण इव लक्ष्यसे । तानाचार्यान्प्रति तमप्यादेशं

---

भवति ? इति चेत् उच्यते । न हि विशेषणान्तरविशिष्टाकारे [1] विशेषणान्तरान्वयः। अपि तु एकस्मिन् धर्मिणि विशेषणद्वयान्वयो विवक्षितः । तस्मात् न ज्ञातत्व-विशिष्टाकारेण सर्वत्वम् ; सर्वत्वविशिष्टाकारेण ज्ञातता वा ; किं तु सर्वत्वं, ज्ञातत्वं च एकाश्रयवर्तिनी इति, अवस्थानवगमेऽपि [2] धर्मिणः ऐक्येन ज्ञाततया प्रयोगो मुख्य एव दृष्टः, "सोऽयं देवदत्तः, पूर्वमेव मया अयं ज्ञातश्च" इत्यादिषु । न हि तत्र वर्तमानकालविशिष्टत्वेन पूर्वं ज्ञातः । तस्मात् परिषद्दर्शनेन "अमी पुरुषा दृष्टाः" इतिवत् इदमुपपन्नम् । एकस्य सत्यत्वज्ञानेन [3] तद्व्यतिरिक्तम् मिथ्यात्वेन ज्ञातं भवतीति चेत् , न; [3] "येनाश्रुतं श्रुतं भवति" इत्यादिषु वाक्येषु "मिथ्यात्वेन इत्यध्याहारः। एकविज्ञानस्य सर्वविज्ञानस्य च वैरूप्यम्, अमुख्यत्वं च ज्ञातभावात । न हि सर्वं मिथ्यात्वेन जानन् कश्चित् कश्चित् ज्ञातोऽस्ति । तस्मात् सर्वविज्ञानशब्देन [4] सर्वज्ञाननिवृत्तिलक्षणा स्यादिति ।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम् ? तदात्मनैव सत्यत्वं कथम् ? तथा सति कथं प्रतिज्ञोपपत्तिः ? उपक्रमवाक्यं, सत्यत्वपक्षानुगुणमपि तदुपसंहारा-पेक्षया प्रबलम् ; न तु महावाक्यस्वारस्यापेक्षया ; महावाक्यं च मिथ्यात्वपक्षानु-गुणम् ; [3] "तत्त्वमसि", [4] "मृत्तिकेत्येव सत्यम्", [5] "सदेव....एकमेव" इत्यादिषु तथा प्रतीतेः—इति शङ्कायामाह **अयमर्थ** इति । प्रतिज्ञावाक्योप-क्रमभूतं "स्तब्धोऽसि" इति वाक्यमारभ्य व्याख्यातुम्, "स्तब्धोऽसि" इति श्रूयमाणमध्यमपुरुषार्थस्पाष्ट्यार्थं [5] माह **श्वेतकेतुं प्रत्याह** इति । "स्तब्धोऽसि" इत्यादिश्रुतिवाक्योपादानम् । तत्र वाक्ये "स्तब्धोऽसि" इत्य-स्यार्थमाह **परिपूर्ण इव लक्ष्यसे** इति । पृच्छतिधातुः [6] द्विकर्मकः—वक्तृकर्मकः,

---

१. आकारेण—पा०
२. धर्म्यैक्येन ज्ञातताप्रयोगः—पा०
३. व्यतिरिक्तम्—पा०
४. सर्वनिवृत्तिलक्षणा—पा०
५. दार्ढ्यार्थम्—पा०

1,2. छा. उ. ६-१-२.
3. छा. उ. ६-९-४.
4. छा. उ. ६-१-४.
5. छा. उ. ६-२-१.
6. अष्टाध्यायी १-४-५१.

पृष्टवानसि ? इति । [1]आदिश्यते अनेनेत्यादेशः । आदेशः—प्रशासनम्;

वाच्यकर्मकश्चाति । तत्र "आदेश" शब्दाभिहितं वाच्यकर्मेति दर्शयितुम् 'तानाचार्यान्प्रति' इति वक्तृकर्म व्याहृतम्[2] । [1]"न वै नूनं भगवन्तस्त एतदवेदिषुः यद्येतदवेदिष्यन् कथं मे नावक्ष्यन्?" इति 'तच्छब्द' निर्दिष्टा आचार्याः अत्र स्मारिताः । तान् इति बहुवचनेन "तमादेशम्" इति तच्छब्दस्य आचार्यविषयत्व-शङ्काव्युदासः । तमपि इति । "श्रोतु[3]र्दुर्लभम्" इत्यपिशब्दाभिप्रायः । कर्मान्त-श्रोतव्यान्तरसमुच्चयो वाऽभिप्रेतः । इति श्वेतकेतुं प्रत्याह इत्यन्वयः । "आदेश"-शब्दं व्याचष्टे आदिश्यत इत्यादिना । आदिश्यतेऽनेनेत्यादेशः इति प्रत्ययार्थ-व्याख्यानम् । आदेशः प्रशासनम् इति प्रकृत्यर्थव्याख्यानम् । अत्र [2]"अकर्तरि च कारके संज्ञायाम्" इति घञः कर्तृव्यतिरिक्तकारके विहितत्वात् ब्रह्मणः[4] प्रशासने कर्तृत्वात्, उपदेशकर्मत्वोपपत्तेश्च, प्रकृत्यर्थः उपदेशः, प्रत्ययार्थः कर्म च इति परैर्व्याख्यातम् । तत्र प्रकृत्यर्थास्वारस्यम्, प्रत्ययार्थस्वारस्यम्; अस्मत्पक्षे प्रकृत्यर्थस्वारस्यम्, प्रत्ययार्थास्वारस्यम् । कर्तृव्यतिरिक्तकारकविषयस्य घञः कथं कर्त्रर्थत्वम्? [3]"विवक्षातः कारकाणि भवन्ति" इति न्यायेन कर्तुरेव करणान्तरनिरपेक्षत्वलक्षणेन करणसाधर्म्यरूपेण साधकतमत्वेन करणत्वविवक्षया घञ्प्रत्यय उपपद्यते । एतदभिप्रायेण हि आदिश्यतेऽनेन इत्युक्तम्; न तु आदिशति इति । विवक्षया कारकप्रवृत्तिश्चेत् [4]"अकर्तरि" इति विधानस्य किं प्रयोजनम्? "स्वतः प्राप्तत्वम्[5] कर्तृव्यतिरिक्तकारकस्य; कर्तरि करणत्वादि-विवक्षया कर्त्रर्थत्वमस्वरसम्" इति विभागः प्रयोजनम् । सूत्रस्य प्रयोजनवत्त्वेऽपि स्वारस्यम्, अस्वारस्यं च तुल्यं चेत् किमनेन योजनान्तरेण? इति चेत् — उच्यते । परपक्षे प्रत्ययार्थस्यैव स्वारस्यम्; अस्मत्पक्षे [6]तु स्वारस्यद्वयमस्ति—

१. आदिश्यते अनेनेत्यादेशः-प्रशासनम्-पा०,
२. अभ्याहृतम्—पा०
३. दुर्लभत्वम्—पा०
४. ब्राह्मणश्च—पा०
५. प्राप्तस्य—पा०
६. 'तु' शब्दः कुत्रचिन्नास्ति ।

1. छा. उ. ६-१-७.
2. अष्टाध्यायी ३-३-१९.
3.
4. अष्टाध्यायी ३-३-१९.

[1] "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभिरैकार्थ्यात् । तथा च मानवं वचः—[2] "प्रशासितारं सर्वेषाम्"[1] इत्यादि । अत्रापि 'एकमेव' इति जगदुपादानतां प्रतिपाद्य, 'अद्वितीय'-पदेन अधिष्ठात्रन्तरनिवारणात्[2] अस्यैव अधिष्ठातृत्वमपि प्रतिपाद्यते । अतः "तं प्रशासितारं जगदुपादानभूतमपि पृष्टवानसि ? येन श्रुतेन मतेन

---

अर्थस्वारस्यं, शब्दस्वारस्यं चेति । प्रकृत्यर्थस्वारस्यं तावत् सिद्धम् । विवक्षित-विशेषणस्य[3] असाधारणाकाराभिधानं स्वतःप्राप्तम् । सर्वप्रशासितृत्वं ब्रह्मासाधारणो धर्मः । उपदेश्यत्वं तु कर्मस्वरूपादेः साधारणम् । किञ्च "अपेक्षितविधेरनपेक्षित-विधानं दुर्बलम्" इति [4]न्यायात्, अत्रावश्यापेक्षितप्रशासितृत्वज्ञापनमेव युक्तम्; नाऽनपेक्षितोपदेश्यत्वज्ञापनम् । तस्मात् शब्दस्वारस्यमर्थस्वारस्यं चेति स्वारस्यद्वय-विसवात्[5] अयमेवार्थः । ब्रह्मणः कृत्स्नप्रशासितृत्वे सिद्धे हि तदसाधारणाकार-तया वक्तव्यम् ? तत्र किं प्रमाणम् ? इत्यत्राह "एतस्य वा" इति । स्मृतिमाह **प्रशासितारम्** इति । न केवलं श्रुत्यन्तरेष्वेव प्रशासितृत्वप्रसिद्धिः । अस्मिन् प्रकरणेऽपि सिद्धमित्याह **अत्रापीति** । अधिष्ठातृत्वं हि प्रेरकत्वम् ; तच्च प्रशासि-तृत्वमिति फलितम्[6] । एवम् "आदेश" शब्दार्थ उक्तः । अथ तच्छब्दं च विवृण्वन् वाक्यार्थं च योजयति अत इति । येन....विज्ञातं भवति, तं .... पृष्टवा-नसि ? इत्यन्वयः । येन श्रुतेन मतेन विज्ञातेन इत्यध्याहारेण योजनायां को हेतुः ? उच्यते । न हि ब्रह्मणस्सत्तया कृत्स्नं ज्ञातं भवति ? अपि तु तद्ज्ञानेनैव ज्ञातं भवतीति वस्तुसामर्थ्यात् । किं च दृष्टान्तोऽपि न हि मृत्पिण्डसत्तया [7] घटादि

---

१. अत्र एतदुपरि "अणीयांसमणीयसाम्" इत्यपि उपात्तं दृश्यते केषुचित् कोशेषु ।
२. निराकरणात्—पा०
३. विशेषस्य—पा०
४. न्यायेन—पा०
५. संभवात्—पा०
६. तद् फलितम्—पा०
७. घटादिर्विज्ञातः—पा०

1. बृ. उ. ५-८-९.
2. मनुस्मृ. १२-१२२.

विज्ञातेन, अश्रुतममतमविज्ञातम्, श्रुतं मतं विज्ञातं भवति"[1] इत्युक्तं स्यात्। "निखिलजगदुदयविभवविलयादिकारणभूतं[1] सर्वज्ञत्व–सत्यकामत्व — सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरं किं[2] ब्रह्म त्वया श्रुतम्?" इति हार्दो भावः।

ज्ञातं भवति? अपि तु [3]तद्ज्ञानेन इति दृष्टान्तसामर्थ्यात्। किञ्च [2]"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्[4]?" [3]"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्यादिश्रुत्या च। एवम्, दृष्टान्तसामर्थ्यात् दार्ष्टान्तिकसामर्थ्याच्च[5] श्रुत्यन्तरकण्ठोक्त्या च एवं[6] व्याख्यातम्। इत्युक्तं स्यादिति। कण्ठोक्त्या, अभिप्रेततया च, अयमेवास्याश्श्रुतेरर्थ इत्यभिप्रायः। ननु अस्मिन्वाक्ये उपादानत्वं हि न कण्ठोक्तम्, किन्तु फलितम्। [7]कारणत्वं ज्ञातत्वं च न कण्ठोक्तम्। अत्र जगत्कारणत्वाभिप्रायस्य किं प्रयोजनमित्यपेक्षाया[8]माह **निखिलजगदिति**। श्रुत्यन्तरेषु [4]"यतो वा इमानि" इत्यादिवाक्येषु जगत्कारणत्वलक्षणकं ब्रह्मावगतम्। तस्मात् अत्र जगत्कारणत्वगर्भं[9] वदतः पितुः "त्वया किं ब्रह्म श्रुतम्?" इत्यभिप्राय इत्यर्थः। [5]"अप्राक्ष्यः इति प्रश्नोक्तिः तत्पूर्वकश्रवणाभिप्रायेण" इत्याशयवानाह "....त्वया श्रुतम्" इति। मात्र "ब्रह्म" इति कण्ठोक्तम्। तस्मात् जगत्कारणत्वान्तर्भावप्रयोजनब्रह्मश्रवणप्रश्नः कुतो भवति[10]। सर्वज्ञत्वादिगुणाः कारणत्वोपयोगितया उक्ताः। सृष्ट्यादयः परिपूर्णस्य लीला[11]। अतः सत्यकामत्वस्य कारणत्वोपयोगः। **हार्दो भावः**। हृदि निहितं तात्पर्यमित्यर्थः।

१. सार्वज्ञ्य—पा०
२. ब्रह्माऽपि—पा०
३. तद्विज्ञानेन—पा०
४. विज्ञातं स्यात्—पा०
५. श्रुत्यन्तरे—पा०
६. नैव—पा०
७. कारणज्ञातत्वं च—पा०
८. आकाङ्क्षायाम्—पा०
९. गर्भत्वम्—पा०
१०. भवतीति—पा०
११. परिपूर्णस्यैव लीलाः—पा०

1. बृ. उ. ६-५-६.
2. बृ. उ. ६ ५ ६.
3. मु. उ. १-१-३.
4. तै. उ. भृ. १.
5. छा. उ. ६-१-३.

तस्य निखिलकारणतया, कारणमेव नानासंस्थानविशेषसंस्थितं कार्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगत् विज्ञातं भवतीति हृदि निधाय [1] "येन अश्रुतं श्रुतं भवति, अमतम् मतम्, अविज्ञातं विज्ञातम्"* स्यात् इति पुत्रं प्रति पृष्टवान् पिता। तदेतत् सकलस्य वस्तुजातस्य एककारणत्वं पितृहृदि निहितमजानन् पुनः परस्परविलक्षणेषु वस्तुषु अन्यस्य [1] ज्ञानेन तदन्य [2] ज्ञानस्या-

---

कारणत्वे सत्यपि, एकविज्ञानेन सर्वविज्ञानं नोपपद्यते, कारणात्कार्यस्य द्रव्यान्तरत्वात्। कारणत्वं च नोपपद्यते, तथा सति ब्रह्मणो हेयास्पदत्वप्रसङ्गात्। कारणत्वोपपत्तावपि एकविज्ञानेन सर्वविज्ञानं नोपपद्यते, नानाजातीयकार्याणां नानाजातीयकारणकत्वदर्शनात् इत्यत्राह **तस्येति**। तस्य निखिलकारणतया....कार्यभूतमखिलं जगत् विज्ञातं भवति इत्यन्वयः। कारणात्कार्यस्यानन्यत्वमाह—**कारणमेव** इति। **नानासंस्थानविशेषसंस्थितम्**। संस्थानविशेषविशिष्टमित्यर्थः। सूक्ष्मचिदचिद्वस्तुशरीरशब्देन ब्रह्मणो हेयास्पदत्वप्रसङ्गः परिहृतः। [2] निर्वेदादुपसन्नाय वक्तव्यमर्थं स्वयमेव कथं वदति? इत्यत्राह **पुत्रं प्रति पृष्टवान् पिता** इति। पुत्रव्यतिरिक्तानां शुश्रूषाद्यपेक्षा, पुत्रस्य तु पुत्रत्वमेव ब्रह्मोपदेशहेतुः इति शास्त्रार्थः सूचितः। पुत्रपितृ [3] शब्दाभ्याम् [3] "उद्दालको हारुणिश्श्वेतकेतुं पुत्रमुवाच" [4] "तं ह पितोवाच" इति श्रुतिवाक्यं स्मारितम्। [4] अनन्तरवाक्यं [5] "कथन्नु भगवस्स आदेशः" इति। इदम् किम् प्रश्नरूपम्, उत चोद्यरूपम्? इति संशये, [5] चोद्यरूपमिति व्याचष्टे **तदेतदित्यादिना**। प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायते। प्रतिवचने

---

* "उत तमादेशमप्राक्ष्यो, येनाऽश्रुतं श्रुतं भवति अमतम् मतम् अविज्ञातं विज्ञातम्?" इति पितृकृतप्रश्नवाक्यम्।

---

१. विज्ञानेन—पा०
२. विज्ञानस्य—पा०
३. शब्देन—पा०
४. अनन्तरमिदं वाक्यम्—पा०
५. चोद्यरूपम्—पा०

1. छा. उ. ६ १-३.
2. मु. उ. १-१२.
3. छा. उ. ६-१ १.
4. छा. उ. ६-१-२.

घटमानतां बुध्वा परिचोदयति — [1] "कथन्नु भगवस्स आदेश" इति। परिचोदितः पुनः तदेव हृदि निहितं ज्ञानानन्दामलत्वैकस्वरूपम्, अपरिच्छेद्यमाहात्म्यम्, सत्यसंकल्पत्वमिश्रैरनवधिकातिशयासंख्येयकल्याणगुणगणैर्जुष्टम्, अविकारस्वरूपं परं ब्रह्मैव, नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरम् [1] स्वलीलार्थं स्वसंकल्पेन, अनन्तविचित्रस्थिरत्रसरूपजग-

---

[2] "यथा सोम्यैकेन" इत्यादिना दृष्टान्तैरुपपादनात् इदं चोद्यरूपम् इत्यभिप्रायः। परिचोदयति इति। विवक्षितविशेषकण्ठोक्तिमकुर्वन्, सामान्येन चोदयति इत्यर्थः। वाक्यमुपादत्ते "कथन्नु" इति। अथ पिता, ब्रह्मणो जगत्कारणत्वम्, तदुपयोगिगुणजातम्, उपादानत्वनिमित्तत्वप्रयुक्तदोषशङ्कापरिहारं च विवक्षन् कारणज्ञानेन कार्यज्ञानं [2] लोकसिद्धं दर्शयतीत्याह परिचोदितः पुनः इत्यादिना। ज्ञानानन्दामलत्वैकस्वरूपमिति। ० "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यार्थो विवक्षितः। स्वरूपशब्दः धर्मिस्वरूपनिरूपकधर्मवाची। अपरिच्छेद्यमाहात्म्यमित्यनेन [3] "अनन्त" शब्दार्थो विवक्षितः। स्वरूपम्—अपरिच्छिन्नमित्यर्थः। गुणतोऽप्यानन्त्यमाह सत्यसङ्कल्पत्वमिश्रैः [3] इति। [4] "सत्य" शब्दार्थमाह अविकारस्वरूपमिति। अत्र स्वरूपशब्दः विशेष्यांशपरः। अविकारत्वादिश्रुतेर्विषयो दर्शितः। उपादानत्वप्रयुक्तविकारादिविषयं दर्शयति नामरूप इति। पूर्वम् — सूक्ष्मचिदचिद्वस्तुशरीरकम् इत्येतावदुक्तम्। अत्र नामरूपविभागानर्हशब्देन सूक्ष्मशब्दो व्याख्यातः। अनेन उपादानत्वप्रयुक्तं चोद्यं परिहृतम्। अथ निमित्तत्वप्रयुक्तं चोद्यं परिहरति स्वलीलार्थं इति। अवाप्तसमस्तकामस्यापि लीलार्थं जगद्व्यापार उपपद्यत इत्यर्थः। महायासरूपजगद्व्यापारस्य न लीलात्वमिति चेत् तत्राह स्वसंकल्पेन इति। संकल्पमात्रसाध्यत्वात् नायमायास[4]

---

* स्थिरत्रस = चराचर। ० गीता श्रुतप्रका. जि. अ. पुटम् ४४.

---

१. स्वलीलार्थं—पा०
२. कार्यविज्ञानम्—पा०
३. संकल्पमिश्रैः—पा०

1. छा. उ. ६-१-३.
2. छा. उ. ६-१-४.
3. तै. उ. आन. १-१.

तत्संस्थानम् स्वांशेनावस्थितमिति, तद्ज्ञानेन अन्यस्य[1] निखिलस्य ज्ञाततां ब्रुवन्, लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह—[1] "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति। एकमेव मृद्द्रव्यम्, स्वैकदेशेन, नानाव्यवहारास्पदत्वाय[2], घटशरावादिनानासंस्थानाऽवस्थारूपविकारापन्नं नानानामधेयमापि, मृत्तिकासंस्थानविशेषत्वात्[3] मृद्द्रव्यमेवेत्थमवस्थितम्, न वस्त्वन्तरम् इति; यथा मृत्पिण्डविज्ञानेन तत्संस्थाविशेषघटशरावादिरूपं सर्वं विज्ञातमेव भवतीत्यर्थः।

---

इत्यर्थः। स्वांशेन — विशिष्टस्य स्वस्य अंशेन। ब्रुवन् — वक्तुम्। लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह इति। कार्यकारणयोरनन्यत्वे दृष्टान्तमाहेत्यर्थः। अन्यज्ञानेनान्यज्ञानचोद्यस्य अनन्यत्वज्ञापनेन हि परिहार इति भावः। दृष्टान्तवाक्यमुपादत्ते यथा सोम्यैकेन मृत्पिण्डेन इति। तत्र कारणज्ञाने कार्यविज्ञानस्य सिद्धये तयोरैक्यापादकमुत्तरखण्डं* प्रथमं व्याचष्टे एकमेव इति। तत्र [2]"वाचा" इति पदं व्याचष्टे नानाव्यवहारास्पदत्वाय इति। वाक्-शब्दः अजहल्लक्षणया† वाक्पूर्वकव्यवहारे वर्तते। वाक्पूर्वकव्यवहारस्य प्रयोजनतया हेतुः इत्यर्थः। विकारशब्दार्थमाह घटशराव इत्यादिना। संस्थानमेव अवस्था, सैव विकारः। [3]"षोडशकस्तु विकारः" इत्यादिषु विकारशब्दस्य अवस्थावद्द्रव्यपरत्वेन प्रयोगदर्शनात्। तद्व्यावृत्त्यर्थं अवस्थारूपविकार इत्युक्तम्। नामधेयपदं व्याचष्टे नानानामधेयमिति। मृत्तिकेति पदं व्याचष्टे मृत्तिकासंस्थानविशेषत्वात्[4] इत्यादिना। एवकारव्यावर्त्य[5]माह न वस्त्वन्तरमिति इति। एवं कारणज्ञानेन कार्यज्ञानस्योपपादकमुत्तरखण्डं व्याख्याय तदुपपाद्यं पूर्वखण्डं° व्याचष्टे यथा इति।

---

* "वाचारम्भणम्" इत्यादि॥ † आरम्भणाधिकरण. श्रुतप्रका. पुटम्. ५०२.

° "यथा सोम्य" इत्यादि॥

---

१. अस्य—पा०
२. आस्पदत्वाद्यथा—पा०
३. विशेषवत्त्वात्—पा०
४. विशेषवत्वात्—पा०
५. व्यावृत्त्यर्थम्—पा०

1. छा. उ. ६-१-४.
2. छा. उ. ६-१-४.
3. सांख्यकारिका ३.

ततः कृत्स्नस्य जगतो ब्रह्मैककारणतामजानन् पुनः पृच्छति [1]"भगवांस्त्वेव मे तद्ब्रवीतु[1]" इति। ततः सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वकारणम्, इत्युपदिशन् स होवाच [2]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति। अत्र इदम्—इति जगन्निर्दिष्टम्; अग्र—इति च सृष्टेः पूर्वकालः। तस्मिन् काले जगतः सदात्मकतां "सदेव" इति प्रतिपाद्य, तत्, सृष्टिकालेऽप्यविशिष्टम् इति कृत्वा, "एकमेव"

"लोके कारणज्ञानात्कार्यज्ञानं सम्भवतु, तथाप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, विजातीयकार्याणामेककारणत्वायोगात्" इति बुद्ध्या ब्रह्मैककारणत्वाज्ञानेन पुनः पृच्छति इत्याह तत इत्यादिना। विजातीयानामपि सर्वकार्याणां ब्रह्मैवोपादानम्, तदेव च निमित्तम्, इत्युपदिशेत्याह ततः सर्वज्ञम् इति। उपदिशन्—उपदेष्टुम्। "सदेव" इति वाक्योपादानम्। इदम् इति जगन्निर्दिष्टम् इति। प्रकृतमस्ति चेत् तत्परत्वम्, अन्यथा प्रत्यक्षादिप्रसिद्धजगत्परत्वमेव इदं शब्दस्योचितमिति भावः। अग्र इत्यादि। अनन्तरं सृष्टेर्वक्ष्यमाणत्वात्, अग्रशब्दस्य प्रलयकालपरत्वमवगम्यत इति भावः। तस्मिन्काले जगतस्सदात्मकतां सदेवेति प्रतिपाद्य इति। सदात्मकताम्—कारणात्मकताम्। सदेव इत्यनेन वैशेषिकोक्तं कदाचित्सत्वम्, कदाचिदसत्वं च व्यावृत्तम्। तेन प्रलयकालेऽपि सत्वं फलितमिति एवमुक्तम्। न तु वाचनिकोऽयमर्थः। सदेव "इदम्" अग्रे एकमेव आसीत्, इति ह्यन्वयः। सच्छब्दः प्रमाणसंबन्धार्हतोपाधिना[2] प्रकृतिपुरुषकालविशिष्टं ब्रह्माह। कारणात्कार्यस्यानन्यत्वेन, जगतः कदाचित्सत्वं परिहृतम्। कारणभूतब्रह्मानन्यत्वेन, जगतः नित्यसत्वमित्यर्थः। तत् सृष्टिकालेऽपि इति। जगत् सदेव चेत् प्रलये[3] को विशेष इत्यपेक्षायाम्, द्रव्यं नित्यमेव; तस्य अविभक्तनामरूपावस्था प्रलयः; विभक्तनामरूपावस्था कार्यता इति वैषम्यम् "एकमेव"

१. "भगवन् त्वमेव एतद्ब्रवीतु" पा०
२. संबन्धाहितोपाधिना—पा०
३. प्रलयकाले—पा०

1. छा. उ. ६-१-७.
2. छा. उ. ६-२-१.

इति, सदापन्नस्य जगतः तदानीमविभक्तनामरूपतां प्रतिपाद्य, तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितमिति स्वव्यतिरिक्तनिमित्तकारणम् "अद्वितीय"पदेन प्रतिषिद्धम् इति [1] "तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवति" इति आदावेव प्रधानतयैव जगदुपादानमिति हृदि निहितम् इदानीमभिव्यक्तम्[1]। [2](एतदेवोपपादयति)— स्वयमेव जगदुपादानं जगन्निमित्तं च सत् [2] "तदैक्षत बहु स्यां प्रजायेय" इति। तदेतत्सच्छब्दवाच्यं[3] परं ब्रह्म, सर्वज्ञम्, सर्वशक्ति, सत्यसङ्कल्पम्, अवाप्तसमस्तकाममपि

---

इति पदेनोक्तं भवतीत्यर्थः। अनेन ब्रह्मण उपादानत्वं फलितमित्याह तत्प्रतिपादनेनैव इति। भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम्; तस्मात् वक्ष्यमाणबहुत्वावस्थायाः पूर्वावस्थाकथनेन उपादानत्वम् उक्तं भवतीत्यर्थः। कृत्स्नस्य कार्यस्य ब्रह्मैवोपादानमस्तु, तथाप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, निमित्तान्तरसंभवात्[4] इति शङ्कायाम्— तस्यैव निमित्तत्वेन, निमित्तान्तरशङ्काम् "अद्वितीय" पदं व्यावर्तयतीत्याह— स्वव्यतिरिक्त इति। कुलालस्य विविधपरिणामशक्तिवैधुर्येण, अनुपादानत्वम्; मृत्पिण्डस्य ज्ञातृत्वविरहान्निमित्तत्वम्; अत्र तूभयसद्भावाद्ब्रह्मैवोभयकारणमित्यर्थः। उक्तार्थस्योपक्रमसंगतत्वमाह तमादेशमिति। आदेशशब्देन प्रेरयितृत्वं कण्ठोक्तम्। [3] "येनाश्रुतं श्रुतम्" इत्यादिप्रतिज्ञानेन उपादानत्वमभिप्रेतम्। तदुभयमत्र स्फुटमित्यर्थः। अत्रासत्कार्यवादोपन्यासनिरासवाक्यं द्वितीययोजनायां व्याख्यास्यत इति नात्रोदाहृतम्। अथ तदनन्तरवाक्यं पूरकपदान्तरसहम् उपादत्ते स्वयमेव इति। [4] "सदेव" इत्यादिवाक्यं सजातीयविजातीयादिभेदनिषेधपरत्वेन परैर्व्याख्यातम्। तत्तु उत्तरवाक्याननुगुणम्। अस्मदुक्तार्थस्यैवोपपादकान्युत्तरवाक्यानि इत्यभिप्रायेण जगदुपादानम्, जगन्निमित्तं च सत् इति विशेषणद्वयोपादानम्। एतद्व्याचष्टे तदेतदित्यादिना। वक्ष्यमाणसृष्ट्युपपादकविशेषणान्याह सर्वज्ञमित्यादिना। अवाप्तसमस्तकामस्य प्रवृत्त्यनुपपत्तिं परिहरति

---

१. सुव्यक्तम्—पा०
२. कुण्डलितो भागः अधिकपाठः।
३. तच्छब्दवाच्यम्—पा०
४. सद्भावात्—पा०

1. छा. उ. ६-१-३.
2. छा. उ. ६-२-३.
3. छा. उ. ६-१-३.
4. छा. उ. ६-२-१.

लीलार्थम् विचित्रानन्तचिदचिन्मिश्रजगद्रूपेण अहमेव "बहु स्याम्" तदर्थं "प्रजायेय" इति स्वयमेव सङ्कल्प्य, स्वांशैकदेशादेव वियदादिभूतानि सृष्ट्वा, पुनरपि, सैव सच्छब्दाभिहिता परा "देवता", एवम् "ऐक्षत,

अवाप्तसमस्तकाममपि लीलार्थमिति। संकल्पमात्रसाध्यत्वात् न जगद्व्यापार आयासरूप इत्यभिप्रायेण "सत्यसङ्कल्प" मित्युक्तम्। [1] "अजायमानो बहुधा विजायते" इत्युक्तावतारूपबहुत्वव्यावृत्त्यर्थं जगद्रूपेण इत्युक्तम्। तत्र बहुशब्दार्थोऽस्तीति दर्शयितुं विचित्रानन्त इत्याद्युक्तम् [1]। [2] "बहु स्याम्" तदर्थं [3] "प्रजायेय" इति। जायते, अस्ति इत्याद्यवस्थासु जायमानावस्था, जातावस्था चेत्युत्पत्तावेव अवस्थाद्वयमस्ति। तत्र "अस्ति" शब्दवाच्या उत्पन्नावस्था; उत्पाद्यमानावस्था "जायते" इति शब्दवाच्या। तत्र "बहु स्याम्" इति वाक्ये "स्याम्" इति पदेन उत्पन्नावस्था विवक्षिता। तत्पूर्वभाविन्युत्पाद्यमानावस्था। तदर्थं "प्रजायेय" इत्युक्तमिति विभागः। उत्पत्तौ साधनस्य पूर्वभावित्वम्, साध्यस्य पश्चाद्भावित्वम्। संकल्पे तु साध्यं पूर्वभावि, साधनं पश्चाद्भावि। तस्मात् "स्याम्" इति पूर्वमुक्तम्। स्वयमेव। उपादानभूतं तदेव संकल्प्य इत्यर्थः। स्वांशः—प्रकृतिः। [4] तेजोऽबन्नसृष्टिवचनं वियदादेरपि प्रदर्शनार्थमिति वियदधिकरणसिद्धार्थाभिप्रायेणाह वियदादि इति। श्रीभाष्ये* महदादेरपि प्रदर्शनार्थमित्युक्तम्। पुनरपि इति। व्यष्टिसृष्ट्यर्थमित्यर्थः। सैव इति। "सदेव" इत्यादौ निर्विशेषं वस्तूक्तम्। [5] "सेयं देवता" इति सगुणमुच्यत इति भ्रमापनयनार्थमेवमुक्तम्। उत्तरत्र [6] "तेजः परस्यां देवतायाम्" इति हि वक्ष्यते। तत्प्रत्यभिज्ञानाय "परा देवता" इत्युक्तम्। अत्र पूर्वापरेषु च सगुणं ब्रह्मैवोच्यत इत्यर्थः। व्यष्टिसृष्टिसंकल्पवाक्य [2]-

* श्रीभा. २ अ. ३ पा. ९ सू. भा.

१. इत्युक्तम्—पा.

२. व्यष्टिसृष्टिवाक्यम्—पा.

1. पुरु. सू.

2, 3, 4. छा. उ. ६-२-३.

5. छा. उ. ६-३-२.

6. छा. उ. ६-८-६.

हन्ताहमिमा स्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे

मुपादत्ते "हन्ताहम्" इति। "अनुप्रविश्य नामरूपे व्याकरवाणि" इत्यत्र अनुप्रवेशः न केवलं तत्तत्पदार्थमात्रपर्यन्तनामरूपव्याकरणार्थः; अपि तु स्वपर्यन्तनामरूपव्याकरणार्थः। अनुप्रवेशश्रवणेन मातापितृकुलालादिनिर्वर्त्यदेवदत्तघटादिनामरूपव्याकरणतो व्यावृत्तत्वावगमात्, "बहुस्याम्" इत्युपक्रम एव स्वपर्यन्तनामरूपभाक्त्वसंकल्पात् [1] "[1] तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियते" इति नामरूपयोः ब्रह्मपर्यन्तत्वश्रवणात्। [2] "तदनुप्रविश्य, सच्च त्यच्चाभवत्" इति च श्रवणात्। व्यष्टिसृष्टिसंकल्पवाक्ये अनुप्रवेशपूर्वकनामरूपव्याकरणोक्तिः आद्यसृष्टेरपि प्रदर्शनार्था [2], महदहङ्कारादिनामरूपयोर्ब्रह्मपर्यन्तत्वात्। [3] "यस्य बुद्धिश्शरीरम्....यस्याहङ्कारश्शरीरम्" इति हि श्रूयते। अत एव हि [4] "[3] प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ॥" इति स्मृतम् [4]। एवं व्यष्टिसृष्टिसंकल्पवाक्येऽपि नामरूपव्याकरणयोर्ब्रह्मपर्यन्तत्वस्य विवक्षितत्वम्, आद्यसृष्टिसंकल्पवाक्यानुरोधात्, "तद्धेदम्" इत्यादि श्रुत्यन्तरानुगुण्यात्, [5] "तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यनुप्रवेशपूर्वकब्रह्मपर्यन्तनामरूपव्याकरणोक्तेश्च अवगम्यते। "बहुस्याम्" इत्युक्तं नानानामरूपभाक्त्वम्, मृत्पिण्डस्य घटादिनामरूपभाक्त्ववत् किमद्वारकम्? जीवस्य देवादिनामरूपभाक्त्ववत् किं सद्वारकम्? इति संशये "अनेन जीवेन" इत्यादिश्रुतिस्सद्वारकमाह। ब्रह्मणः समष्टिनामरूपभाक्त्वमद्वारकम्, महदादेः जीवं प्रति शरीरत्वाभावात्। व्यष्टिनामरूपभाक्त्वमद्वारकम्, सद्वारकं च। तथा सति न द्विपर्यवसानहेतुता, गोशब्दादिवत्। "जीवेनात्मना। जीवशरीरकेण मया। "सिंहेन भूत्वा बहवो मयात्ताः" इतिवत्। "तदनुप्रविश्य, सच्च त्यच्चाभवत" इति, जीवेऽप्यनुप्रवेशेन तन्नामभाक्त्वश्रवणात्।

१. तर्हीदम्—मा०

२. उपलक्षणार्था—मा०

३. प्रमाणानुगुण्यं—मुद्रित वि. पु.

४. स्मृतिः—मा०

1. बृ. उ. ३-४-७.

2. तै. उ. आन. ६.

3. सु. उ. ६ खं.

4. वि. पु. १ २-२९.

व्याकरवाणि"[1] इति ।

"जीवेनात्मना" इति तृतीयायाः कोर्थः? न तावत् [2]"सहयोगलक्षणेयं तृतीया । [3]"कारकविभक्तौ सम्भवन्त्यामुपपदविभक्तेरन्याय्यत्वात्" इति न्यायेन उपपदविभक्तेरनुपपत्तेः । न च [4]करणे तृतीया । [1]अनुप्रवेशं प्रति जीवस्य करणत्वाभावात् । अनुप्रवेशस्य द्वारकर्ता हि सः । जीवशब्दस्य परमात्मपर्यन्तत्वाच्च नेयं [5]करणे तृतीया । तस्मात् [6]कर्तरि तृतीया । [2]ननु तिङ्कृत्तद्धितसमासैरनभिहिते कारके हि [3]विभक्त्यभिधेयम्? अत्र तु "व्याकरवाणि" इति तिङभिहितत्वात् न तृतीभिधेयः कर्ता । तत्र प्रथमैव युक्ता इति चेत्—न । व्याकरणकर्ता हि तिङभिहितः । अनुप्रवेशकर्ता तु नाभिहितः इति स तृतीयाभिधेयः । ननु व्याकरणानुप्रवेशक्रिययोः समानकर्तृकत्वम्, [7]"अनुप्रविश्य" इति क्त्वाप्रत्ययेनाभिहितमिति न [8]तृतीयाभिधेयः कर्तेति चेन्न । कर्ता हि न क्त्वाभिधेयः? अपि तु प्रत्ययान्तराभिधेयः । प्रत्ययान्तरप्रतिपन्नयोः कर्त्रोः ऐक्यमेव क्त्वाप्रत्ययाभिधेयम् । यथा [9]समानाधिकरणवाक्येषु *श्वानिलादिकावगते [4]विशिष्टेऽर्थे विशेष्यांशैक्यमात्रं समानविभक्त्यभिधेयम्; न तु विशेषणान्वयो विशेष्यं वा । एवमत्रापि क्त्वाप्रत्ययो न कर्त्रभिधायी । अपि तु शब्दान्तरप्रतिपन्नक्रियाद्वयकर्त्रैक्यमात्राभिधायी । क्त्वाप्रत्यय एव कर्त्रभिधायीति चेत्, [10]"व्याकरवाणि" इत्यत्र तिङ्प्रत्ययो[5] निरर्थकस्स्यात् । तस्मात् शब्दान्तरप्रतिपन्न-

* श्रुतप्रका. पु. २६०.

१. अनुप्रवेश—ना॰
२. नन्विति पदं कतिपयकोशेषु नास्ति ।
३. तृतीयाविभक्त्या अभिधेयम्—ना॰
४. विशिष्टार्थे—ना॰
५. तिङ्प्रत्ययोऽपि—ना॰

1. छा. उ. ६-३-२.
2. अष्टाध्यायी २-३-१९.
3. "अन्तरान्तरेण युक्ते" इति सूत्रभाष्ये पठितमिदम् । न्यायसङ्ग्रहेऽन्त्र ॥
4, 5, 6. अष्टाध्यायी. २-३-१८.
7. "...क्त्वो ल्यप्" अष्टाध्यायी ७-१-३७. छा. उ. ६-३-२.
8. अष्टाध्यायी २-३-१८.
9. छा. उ. ६-८-७; ६-९-४; ६-१०, ११, १२, १३, १४, १५-३.

[1] "अनेन जीवेनात्मना" इति जीवस्य ब्रह्मात्मकत्वं प्रतिपाद्य, ब्रह्मात्मकजीवानुप्रवेशादेव कृत्स्नस्याचिद्वस्तुनः पदार्थत्वम्, [1]एवंभूतस्यैव

क्रियाद्वयकर्त्रैक्यमात्राभिधायी क्त्वाप्रत्यय इति, [2] अनुप्रवेशक्रियाकर्ता [3] तृतीयाभिधेय एव[2] । [4] "कर्तरि कृत्" इति कृत्प्रत्ययानां कर्तरि विहितत्वात्[3], [5] कृत्संज्ञक क्त्वाप्रत्ययः कर्त्रभिधायीति चेन्न । अर्थान्तरेष्वविहितानामेव कृत्प्रत्ययानां कर्त्रर्थत्वम् ; न त्वर्थान्तरे विहितानाम्[6] ; [7] तव्यदादीनां हि कर्माद्यर्थे विहितत्वात् । अयं तु क्त्वाप्रत्ययो भावे विहितः[8], तथा [9] अधिकारात् । [10] प्रातिपदिकार्थमात्रे यथा [11] प्रथमा-विभक्तिः, तथा धात्वर्थमात्रे विहितो यः प्रत्ययः स भावार्थः । अयं तु क्त्वाप्रत्ययो भावे विहित इति न कर्त्रभिधायी । तस्मात् [12] तृतीयया कर्ता अभिधीयत इति निरवद्यम् ॥

अनेन इत्यादिवाक्यं संक्षेपेण योजयति "अनेन ...." इत्यादिना । पदार्थत्वम्—तत्तदवस्थाविशिष्टत्वम्[4], देवमनुष्याद्याकारविशिष्टत्वम् । "न हि निराकारः पदार्थः ? पृथिवीत्वाकारविशिष्टो हि पृथिवीपदार्थः ? परमात्मपर्यन्तस्यैव वस्तुनः तत्तदवस्थाविशिष्टत्वम्, न स्वतन्त्रस्य" इत्यर्थः । तत्पर्यन्तस्यैव देवादि-नामभाक्त्वं चेत्याह एवंभूतस्यैव इति ।

१. एवंभूतस्यैव सर्वस्य वस्तुन.—पा०
२. "एव" कुत्रचिन्नास्ति.
३. अभिहितत्वात्—पा०
४. अवस्थितत्वम्—पा०

1. छा. उ. ६-३-२, श्री. भा. संज्ञामूर्ति-क्लृप्त्यधिकरणे पु. ६०९.
2. छा. उ. ६-३-२.
3. अष्टाध्यायी २-३-१८.
4. अष्टाध्यायी ३-४-६७.
5. अष्टाध्यायी ३-१-९३.
6. सि. कौ. पूर्वकृदारम्भः ।
7. अष्टाध्यायी ३-१-९६.
8. सि. कौ. अष्टाध्यायी ३-४-२१.
9. अत्र सि. कौ. पु. ३५२ — "अव्यय कृतोभावे" इति ।
10. अष्टाध्यायी १-२-४५.
11. अष्टाध्यायी २-४-४६.
12. अष्टाध्यायी २-३-१८.

अचिद्वस्तुनो नामरूपभाक्त्वम् इति च दर्शयति ॥

एतदुक्तं भवति—जीवात्मा तु ब्रह्मणः शरीरतया प्रकारत्वात्, ब्रह्मात्मकः; [1]"यस्यात्मा शरीरम्" इति श्रुत्यन्तरात्। एवंभूतस्य जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादिसंस्थानानि वस्तूनि इति ब्रह्मात्मकानि तानि सर्वाणि; अतः देवो मनुष्यः यक्षो राक्षसः पशुः मृगः पक्षी वृक्षो लता काष्ठं शिला *तृणं घटः पटः- इत्यादयस्सर्वे प्रकृति

---

मृदात्मको घट इतिवत्[1] ब्रह्मात्मकत्वं स्वरूपैक्येऽप्युपपद्यते। शरीरशरीरिभावेन तादात्म्यमस्तु। तथा सति किं प्रयोजनम्? सर्वशब्दानां परमात्मपर्यन्तत्वं चेत्, परमात्मनि[2] देवत्वमनुष्यत्वादेः प्रकृत्यर्थस्य, द्वित्वादेः विभक्त्यर्थस्य च अयोगात् न तत्पर्यन्तत्वमुपपद्यते इति शङ्कायाम्—विस्तरेण वाक्यार्थमाह एतदुक्तं भवति इत्यादिना। शरीरत्वमस्तु तत किं ब्रह्मपर्यन्ताभिधानस्येत्यत्राह प्रकारत्वात् इति। प्रकारत्वं दण्डकुण्डलादेरप्यस्तीति तद्व्यावृत्त्यर्थं शरीरतया प्रकारत्वात् इत्युक्तम्। एवं ब्रह्मात्मकत्वं शरीरशरीरिभावादित्युक्तम्। "आत्मशब्दः स्वरूपैक्ये, शरीरशरीरिभावे च साधारणः। अत्र शरीरशरीरिभाव एवेति किं नियामकम्? इति चेत्; तत्राह "यस्यात्मा" इति। जीवात्मा ब्रह्मणश्शरीरमस्तु, ततः किम्? इत्यत्राह एवंभूतस्य इति। देवत्वादिविशिष्टशरीराणि जीवद्वारा ब्रह्मात्मकानि—इत्यर्थः। ततः किमित्यत्राह अत इति। देवाद्यवान्तरजातीयाना[3]मपि ब्रह्मपर्यन्तत्वं दर्शयितुं यक्षराक्षसादय उपात्ताः। [4]"अप्राणिमत्सु† स्वल्पा सा",[2] [3]"ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि", [4]"भूतानां प्राणिनः श्रेष्ठाः" इत्यादिभिः लोष्टकाष्ठादेर्जीवाधिष्ठितत्वश्रवणात् काष्ठं शिला इत्याद्युक्तम्। छिन्नद्रुमो

---

* तृणम्—शुष्कतृणम्, छिन्नतृणं वा, अप्राणिवस्तूनां मध्ये उपात्तत्वात्।

† अप्राणिमत्सु—अनभिव्यक्तप्राणयुक्तशरीरवत्सु।

---

1. इति चेत्—पा०
2. देवत्वमनुष्यत्वादिप्रकृत्यर्थस्य च द्वित्वादिविभक्त्यर्थस्य च—पा०
3. जातीनाम्—पा०
4. "अप्राणवत्सु"—मुद्रित वि. पु.

1. सु. उ. ६.
2. वि पु. ६-७ ६४.
3. वि. पु. २-१२ ३९.
4. मनु. स्मृ. १-९६.

प्रत्यययोगेन अभिधायकतया प्रसिद्धाः शब्दाः लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवस्तुमुखेन तदभिमानजीव—तदन्तर्यामिपरमात्म-पर्यन्तसंघातस्यैव वाचकाः—इति ॥

एवं समस्तस्य चिदचिदात्मकप्रपञ्चस्य सदुपादानता—सन्निमित्तता-

---

हि काष्ठम्? तत्र द्रुमावस्थाधिष्ठातृजीवापगमेऽपि काष्ठावस्थाभिमानी जीवो विद्यत एव नामरूपभाक्त्वात्, इति भावः। तत्तत्संस्थानवस्तुमुखेन इत्यनेन परमात्मनि देवत्वमनुष्यत्व[1]द्वित्वाद्यनुपपत्तिः परिहृता भवति। देवत्वद्वित्वादीनां परमात्मस्वरूपे अव्यवधानेन अन्वयाभावेपि देवत्वादीनां प्रकृत्यभिधेयानां, प्रत्ययाभिधेयानां द्वित्वादीनां च परमात्मनि सद्वारकान्वयः संभवतीत्यर्थः। अत एव [1]"काठिन्यवान् यो बिभर्ति" इत्यादिरुपपद्यते। इति। एतदुक्तं भवति इत्यन्वयः॥

अथ त्रिवृत्करणादिवाक्यानां प्रस्तुतार्थानपेक्षितत्वेन तानि[2] विहाय अपेक्षित-वाक्यानामर्थं संग्रहेणाह एवमित्यादिना। नामरूपव्याकरणार्थं हि त्रिवृत्करणम्? तस्मात् त्रिवृत्करणसाध्यं नामरूपव्याकरणं [3]संकल्पवाक्ये पूर्वभावि अभूत्; [4]उत्पत्ति-वाक्ये तु त्रिवृत्करणस्य पूर्वभावित्वं युक्तम्; पाठक्रमेण 'त्रिवृत्करणस्य पश्चाद्भावित्वेपि, अर्थक्रमेण पाठक्रमस्य बाधितत्वात्[2] त्रिवृत्करणं पूर्वभावि। यथा [5]"अग्निहोत्रं जुहोति, यवागूं पचति" इत्यत्र हि यवाग्वाः पूर्वभावित्वं पाठक्रमबाधेन अङ्गीक्रियते। [6]"यवाग्वा जुहोति" इति यवाग्वाः होमसाधनतया विहितत्वात्। तद्वदत्रापि क्रमोऽनुसन्धेयः। [7]"सन्मूलास्सोम्येमाः" इत्यादिवाक्यस्यार्थमाह एवमिति। 'सदुपदानता—सन्निमित्तता' शब्देन "सन्मूलाः" इत्यत्र "मूल"

---

१. "द्वित्व" शब्दः केषुचित्कोशेषु नास्ति।
२. बाध्यत्वात्—पा०

1. वि. पु. १-१४-२८.
2. छा. उ. ६-२-३; ६-८-३; ६-८-५
3. छा. उ. ६-३-२.
4. छा. उ. ६-३-३.
5, 6. पू. मी. ५-१-२.
7. छा. उ. ६-८-४.

सदाधारता—सन्नियाम्यता—सच्छेषतादि सर्वं च [1] "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यादिना विस्तरेण प्रतिपाद्य, कार्यकारणभावादिमुखेन [2] "ऐतदात्म्यमिदं सर्वं, तत्सत्यम्" इति कृत्स्नस्य जगतः ब्रह्मात्मकत्वमेव "सत्यम्" इति प्रतिपाद्य, कृत्स्नस्य जगतः स एवात्मा, कृत्स्नं च जगत् तस्य शरीरम्। तस्मात् "त्वंशब्द-

शब्दार्थ उक्तः। "सदायतन" शब्दार्थमाह सदाधारता इति। नियन्तृतया धारकत्वात्, धारकत्वाकृष्टमर्थमाह सन्नियाम्यता इति। अनेन शेषत्वमप्यर्थसिद्धम्। शरीरतया हि, [1] शेषत्वं, धार्यत्वं नियाम्यत्वं च। तदप्याह सच्छेषतादि इति। आदिशब्देन, "अनुक्त[2]मन्यतो ग्राह्यम्" इति न्यायात्, अन्यत् अपेक्षितं गृह्यते। कार्यकारणभावादिमुखेन इति। आदिशब्देन सदाधारत्वादिकं विवक्षितम्। * तेन ब्रह्मात्मकत्वमेव सत्यमिति [3] प्रतिपाद्यते। धारकत्वादिभिस्तावत् शरीरात्मभावस्सिद्धः; कार्यकारणभावाच्च [4] सिध्यति, स्वरूपमात्रस्य कारणत्वायोगेन विशिष्टस्यैव कारणत्वात्। ब्रह्मात्मकत्वमेव इति एवकारेण स्वपर्यन्तत्वं प्रामाणिकमित्युक्तं भवति। "ऐतदात्म्यम्" [5]। एतदात्मकम्। [3] "स्वार्थे ष्यञ्", संबन्धार्थे वा। एतदात्मसंबन्धीत्यर्थः। [6] अस्यात्मनः शरीरतया संबन्धीत्युक्तं भवति। [4] "ऐतदात्म्यमिदं सर्वम्... ....स आत्मा" इति निर्देशः [5] "रामानुजं लक्ष्मणपूर्वजं च" इतिवदन्वयः। आत्मशब्देन फलितमर्थमाह कृत्स्नं जगत् तस्य शरीरं इति। "अस्यायं पिता" इत्युक्ते पितृप्रतियोगिनः पुत्रत्वं ह्यर्थसिद्धं भवति? तस्मात् इत्यादि। "ऐतदात्म्यम्" इति सामान्येन वैयधिकरण्येन प्रतिज्ञातं

* तेन = उक्तकार्यकारणभावादिमुखेन।

१. अत्र "शरीरत्वम्" इत्यप्यस्ति केषुचिद् ग्रन्थेषु। तच्च अनन्वितमिव भाति।
२. अविरुद्धम्, अनुक्तमविरुद्धम् — इति च—पा०
३. प्रतिपाद्य इति—पा०
४. भावश्च—पा०
५. ऐतदात्म्यमेव—पा०
६. एतदात्मनः पा०

1. छा. उ. ६-८-४.
2. छा. उ. ६-८-६
3. अष्टाध्यायी. ५-१-१२४.
4. छा. उ. ६-८-६.
5. रा. सु. २८-१०.

वाच्यमपि जीवप्रकारं ब्रह्मैव" इति सर्वस्य ब्रह्मात्मकत्वं प्रतिज्ञातम्, "तत्त्वमसि" इति जीवविशेषे उपसंहृतम् ।

एतदुक्तं भवति—[1] "ऐतदात्म्यमिदं सर्वम्" इति, चेतनाचेतनप्रपञ्चम् "इदं सर्वम्" इति निर्दिश्य, तस्य प्रपञ्चस्य एषः "आत्मा"[2]

---

ब्रह्मात्मकत्वम्, "तत्त्वमसि" इति सामानाधिकरण्येन जीवविशेषे उपसंहृतमित्यर्थः । अनेन उद्देश्योपादेयविभागनिमित्तं चोद्यं परिहृतं भवति । उद्देश्योपादेयविभागे सति 'त्वं' शब्दः उद्देश्यसमर्पको भवति । 'त'च्छब्दावगतकारणत्वस्य प्रमाणान्तरासिद्धत्वात् । त्वंशब्दस्तु लोकसिद्धप्रकारेण उद्देश्यसमर्पकः । जीवस्य ब्रह्मात्मकत्वं च न प्रत्यक्षादिसिद्धम्[1] । तस्मात् जीवमात्रपरः "त्वं" शब्दः । 'त्वं' शब्दावगतस्य जीवस्य 'त'च्छब्दावगतस्य ब्रह्मणश्च सामानाधिकरण्येन प्रतिपाद्यमानमैक्यम् स्वरूपैक्यमेव भवति इति [2] चोद्यम्। परिहारस्तु—"ऐतदात्म्यम्[3] इति सर्वस्य ब्रह्मात्मकत्वस्य प्राप्तत्वात्[4], यथाप्राप्तमुपसंहार्यत्वात्, सामान्येनोक्तस्य विशेषे उपसंहारस्यापेक्षितत्वाच्च जीवविशेषे पूर्वोक्तब्रह्मात्मकत्वं सामानाधिकरण्येन उपसंहृतम्[5] इति ।

ऐतदात्म्यमित्यत्राप्यात्मशब्दः मृदात्मको घट इतिवत् स्वरूपैक्यपरस्स्यात्; तेन [3] "तत्त्वमसि" इत्युपसंहारेऽपि स्वरूपैक्यमेवोक्तं भवति । ऐतादात्म्यमिदं सर्वमित्यत्र अचिद्ब्रह्मणोरैक्यम्, 'तत्त्वमसि" इति जीवब्रह्मणोरैक्यं च उक्तं इति नात्रानुवादः—इति शङ्काद्वयमभिप्रेत्याह एतदुक्तं भवति इति। चेतनाचेतनप्रपञ्चमित्यनेन "अचिद्ब्रह्मणोरैक्यं प्रतिपादितम्" इत्येतत् प्रत्युक्तम्; "सर्व" शब्दो हि असङ्कोचेन प्रमाणान्तरगम्यं सर्वंचेतनाचेतनात्मकं जगत् वदतीति; अचिन्मात्रपरत्वे [6] सर्वशब्दस्वारस्यभङ्गात्; श्रुत्यन्तरे च "इदं सर्वमसृजत" इत्यारभ्य "सच्च त्यच्चाभवत्, ....विज्ञानं चाविज्ञानं च"[4] इति, इदं सर्वं इति निर्दिष्टस्य जगतः चेतनाचेतना-

---

1. प्रत्यक्षादिप्रमाणप्रसिद्धम्—पा०
2. 'चोद्यम्' मिति कुत्रचिन्न दृश्यते ।
3. ऐतदात्म्यमिदं सर्वमिति—पा०
4. एतत् कुत्रचिन्न दृश्यते ।
5. उपसंहृति—पा०
6. सर्वशब्देति क्वचिन्न दृश्यते ।

1,2. छा. उ. ६-८-६.
3. छा. उ. ६-१६-३.
4. तै. उ. आ. २-६

इति प्रतिपादितः। प्रपञ्चोद्देशेन ब्रह्मात्मकत्वं प्रतिपादितमित्यर्थः।

तदिदं ब्रह्मात्मकत्वं, किम् [1] आत्मशरीरभावेन? उत स्वरूपेण? इति विवेचनीयम्। स्वरूपेणेति चेत्, ब्रह्मणः सत्यसङ्कल्पत्वादयः [1] "तदैक्षत बहु स्यां प्रजायेय [2]" इत्युपक्रमावगताः बाधिता भवन्ति।

शरीरात्मभावेन च [3] तदात्मकत्वं श्रुत्यन्तराद्विशेषतोऽवगतम्, [2] "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" इति। प्रशासितृत्वरूपात्मत्वेन सर्वेषां जनानाम् "अन्तः प्रविष्टः", अतः "सर्वात्मा", सर्वेषां जनानां

---

त्मकत्वेन विवृतत्वाच्च [4]। "ऐतदात्म्य" मित्यत्र किमुद्देश्यम्? किमुपादेयम्? इत्यत्राह प्रपञ्चोद्देशेन इति। एवम् एका शङ्का परिहृता।

अथ आत्मशब्दस्य स्वरूपैक्यपरत्वं व्युदस्यति तदिदं इत्यादिना। स्वरूपेणेति चेत् इति। अचिद्ब्रह्मणोस्स्वरूपैक्ये, अचेतनत्वादेव सत्यसङ्कल्पत्वादि-विरोधः। जीवब्रह्मणोरैक्ये, तस्य कर्मवश्यत्वादेव सत्यसङ्कल्पत्वादि [5] विरोधः—इत्यर्थः। एतद्विरोधपरिहाराय शरीरात्मभावः कल्प्यत इत्यभिप्रायः।

न केवलमनया [6] श्रुत्यर्थापत्त्या कल्प्यः; अपि तु ब्रह्मण आत्मत्वम्, जगतः तच्छरीरत्वं च कण्ठोक्तमित्याह शरीरात्मभावेन च इति। का पुनः श्रुतिः? तत्र विशेषतोऽवगतिः कथम्?—इति शङ्कायाम् श्रुतिवाक्यमाह "अन्तः" इति। तत्र वाक्ये विशेषतोऽवगतिं दर्शयति प्रशासितृत्व इति। "सर्वात्मा" इत्युक्त-मात्मत्वं प्रशासितृत्वलक्षणम् इति दर्शयितुं प्रशासितृत्वरूपात्मत्वेन इत्युक्तम्। "अन्तःप्रविष्ट" शब्देन राजादिव्यावृत्तिः, "शास्ता" इति पदेन गगनादिव्यावृत्तिः।

---

१. शरीरात्मभावेन—पा०
२. 'प्रजायेय' इत्येतत्क्वचिन्न दृश्यते।
३. शरीरात्मभावेन चेत्, शरीरात्मभावेन तु—पा०
४. विवृतत्वात्—पा०
५. संकल्पतादि—पा०
६. श्रुत्यर्थानुपपत्त्या—पा०

1. छा. उ. ६-२-३.
2. म. वे. आर. ३ २४.

आत्मा, सर्वं चास्य शरीरम् इति विशेषतो ज्ञायते ब्रह्मात्मकत्वम्; [1] "य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति, स ते आत्माऽन्तर्याम्यमृतः" इति च ।

अत्रापि [2] "अनेन जीवेनात्मना" इति [1] इदमेव ज्ञायत इति पूर्वमेवोक्तम् । अतः सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वात् सर्वशरीरं सर्वप्रकारं सर्वैश्शब्दैः ब्रह्मैवाभिधीयत इति, "तत् त्वम्" इति सामानाधिकरण्येन जीवशरीरतया जीवप्रकारं ब्रह्मैवाभिहितम् ।

एवमभिहिते सति अयमर्थो ज्ञायते—"त्वम्" इति यः पूर्वं देहस्याधिष्ठातृतया प्रतीतः, सः परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः; अतः [2] "त्वम्" इति शब्दः तत्प्रकारविशिष्टं तदन्तर्यामिणमेवाचष्टे

---

अतः—अन्तः प्रविश्य प्रशासितृत्वादित्यर्थः । कथं विशेषतोऽवगतम्? इत्यपेक्षायाम्, "एवं विशेषतो ज्ञायते" इत्युक्तमिति न पुनरुक्तिः । अस्मिन् वाक्ये प्रशासितृत्वविशेषितात्मत्वस्य [3] कण्ठोक्तिः; शरीरत्वं गम्यम् । अथ आत्मत्व, शरीरत्वकण्ठोक्त्यन्वितं वाक्यमाह "य आत्मनि" इति ।

[4] यद्यपि [5] शरीरशरीरिभावः श्रुत्यन्तरसिद्धस्स्यात्, तथाप्येतत्प्रकरणे स्वरूपेवयं गम्यत इत्यत्राह अत्रापि इति । ततः किं सामानाधिकरण्यसिद्धिरित्यत्राह अत इति ।

सामानाधिकरण्येन उपसंहारे किं प्रयोजनमित्यत्राह एवमभिहिते सति इति । बुद्धिशब्दयोस्तत्पर्यन्तताज्ञापनं प्रयोजनमित्यर्थः । परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः इति । शरीरतया प्रकारत्वेन पृथक्-सिद्धि-

---

१. जीवेन इति—पा०

२. अत्र "पृथक्...स्थिति प्रवृत्यनर्हः" इत्येतत् क्वचित् मूले एव वर्तते ।

३. आत्मस्वरूपत्वस्य—पा०

४. "यद्यपि" इति केषुचिन्नास्ति ।

५. शरीरिशरीरभावः—पा०

1. अयम् बृ. उ. माध्यंदिनपाठः बृ. उ. ५-७-२२; काण्व पाठस्तु "यो विज्ञाने तिष्ठन्" इति च श्रीभा. प्र. अ. द्वि. पा. ४. अन्तर्याम्यधि. पुटम् २२९.

2. छा. उ. ६-३-२.

—इति; [1]"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकत्वेनैव जीवस्य शरीरिणः[१] स्वनामभाक्त्वात् ।

"तत् त्वम्" इति समानाधिकरणप्रवृत्तयो[२]र्द्वयोरपि पदयोः ब्रह्मैव वाच्यम् । तत्र "तत्" पदं—जगत्कारणभूतं[३] सर्वकल्याण[४] गुणाकरं निरवद्यं निर्विकारमाचष्टे । "त्वम्" इति च—तदेव[५] ब्रह्म जीवान्तर्यामि रूपं[६] [७]सशरीरजीवप्रकारविशिष्ट[८]माचष्टे । तदेवं प्रवृत्तिनिमित्तभेदेन

---

स्थिति-प्रवृत्त्यनर्ह इत्यर्थः । बुद्धिशब्दयोस्तत्पर्यन्तत्वे[९] हेतुमाह "अनेन" इति । स्वनामभाक्त्वात् अन्तर्यामिणमेवाचष्ट इति, अयमर्थः[१०] इत्यन्वयः ।

परं प्रति वक्ष्यमाणदूषणानां स्वपक्षास्पर्शित्वं दर्शयितुं स्वपक्षे सामानाधिकरण्यसाद्गुण्यं[११] विवक्षुः तत्रैकार्थवृत्तित्व[१२]सिद्धिमाह "तत् त्वम्" इति समानाधिकरणप्रवृत्तयोः इति । तत्र इत्यादिना वाक्यद्वयेन "तत् त्वम्" इति पदद्वयस्य प्रवृत्तिनिमित्तभेदसिद्धिमाह । "तत् त्वम्" शब्दौ त्वदुक्तार्थपरौ स्याताम्, ततः किम्? इत्यत्राह तदेवम् इति । "प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तिस्वरूपं[१३] सामानाधिकरण्यं सिद्धम्" इत्यर्थः । त्वन्मते सामानाधिकरण्यलक्षणा-

---

१. ब्रह्मशरीरिणः—पा०
२. द्वयोः पदयोरपि—पा०
३. सकलकल्याण—पा०
. गुणात्मकम्, गुणगणाकरम्—पा.
५. "ब्रह्म" केषुचित्कोशेषु नोपलभ्यते ।
६. रूपेण, रूपि—पा०
७. स्वशरीर—पा०
८. "विशिष्ट" एतन्नास्ति क्वचित् ।
९. पर्यन्तत्वहेतुम्—पा०
१०. आचष्ट इत्यन्वयः, आचष्ट इत्यर्थ —पा०
११. सामानाधिकरण्यस्यानुगुण्यम्, सामानाधिकरण्यं विवक्षुः—पा०
१२. वृत्तित्वेति क्वचिन्न दृश्यते ।
१३. स्वरूप—पा०

1. छा. उ. ६-३-२.

एकस्मिन् ब्रह्मण्येव "तत् त्वम्" इति [1] द्वयोः पदयोः [2] वृत्तिरुक्ता । ब्रह्मणो निरवद्यत्वं निर्विकारत्वं सर्वकल्याणगुणाकरत्वं जगत्कारणत्वं च अबाधितम् ॥

अश्रुतवेदान्ताः [3] पुरुषाः "सर्वे पदार्थाः, सर्वे जीवात्मानश्च ब्रह्मात्मकाः" इति न पश्यन्ति । सर्वशब्दानां च केवलेषु तत्तत्पदार्थेषु

---

सिद्धिः [4]; वाक्यान्तरावगतसर्वज्ञत्वादि [5] गुणविरुद्धमविद्याश्रयत्वादिकल्पनीयं च [6] इत्यभिप्रायेणाह ब्रह्मण इति ॥

सर्वे पदार्थाश्शब्दाश्च [7] ब्रह्मपर्यन्ताश्चेत्, ब्रह्मपर्यन्ततया पदार्थाः प्रतीयेरन्, शब्दाश्च तत्पर्यन्तत्वेन व्युत्पद्येरन् [8]; न च तथा क्रियते; तस्मात् नामरूपयो [9] स्तत्पर्यन्तत्वमयुक्तम् इत्यत्राह अश्रुत इति । पदार्थानां ब्रह्मपर्यन्ततया ग्रहणाभावः [10] वेदान्तश्रवणरूपसामग्रीवैकल्यात्, न तदर्थाभावात् इत्यर्थः । सर्वशब्दानां च इति । तस्मादेव सामग्रीवैकल्यात् [11] शब्दानां [12] तत्पर्यन्तव्युत्पत्त्यभावः इत्यर्थः । न हि चक्षुषा [13] गन्धग्रहणाभावे सति गन्धाभावः इत्यर्थः । सामग्र्यां सत्यां तत्पर्यन्तग्रहणात् पूर्वं तत्तत्पदार्थमात्रपर्यन्तत्वग्रहणम्, सामग्रीवैकल्यात् । घ्राणेन गन्धग्रहणे सति

---

१. द्वयोरपि पदयोः—पा०
२. प्रवृत्ति—पा०
३. सर्वे पुरुषाः—पा०
४. सामानाधिकरण्यासिद्धिः—पा०
५. सर्वज्ञतादि—पा०
६ कल्पनीयत्वं च—पा०
७. "शब्दाश्च" एतत् क्वचिन्न दृश्यते ।
८. व्युत्पाद्येरन्—पा०
९. ब्रह्मपर्यन्तत्वम्—पा०
१०. वेदान्तश्रवण—पा०
११. वैकल्याच्च तत्तच्छब्दानाम्—पा०
१२. तत्पर्यन्तत्व—पा०
१३. "गन्ध"—एतत् नास्ति क्वचित् ।

वाच्यैकदेशेषु[1] [2] वाच्यपर्यवसानं मन्यन्ते। इदानीम् वेदान्तवाक्यश्रवणेन ब्रह्मकार्यतया तदन्तर्यामिकतया[3] च सर्वस्य ब्रह्मात्मकत्वम्[4] सर्वशब्दानां[5] तत्तत्प्रकारसंस्थितब्रह्मवाचित्वं च जानन्ति।

नन्वेवं गवादिशब्दानां तत्तत्पदार्थवाचितया[6] व्युत्पत्तिर्बाधिता

चक्षुषा गन्धग्रहणाभावः, सामग्र्यभावात्;[7] न तु गन्धाभावात्[8] इत्यवगम्यते हीत्याह इदानीमिति। इदानीम्—वेदान्तश्रवणरूपसामग्रीसंभवे सति[9]।

वेदान्तवाक्यानि तत्तत्पदार्थतत्तच्छब्दानां ब्रह्मपर्यन्तत्वं बोधयितुं न शक्नुवन्तीति चोदयति ननु इति। वेदान्तवाक्यानि किं व्युत्पत्तिनिरपेक्षाणि? उत[10] तत्सापेक्षाणि? [11] व्युत्पत्तिनिरपेक्षाणि चेत् अव्युत्पन्नस्यापि[12] बोधजनकानि स्युः। सापेक्षाणि चेत् अन्यपर्यन्ततया व्युत्पन्नस्य शब्दस्य अन्यपर्यन्तत्वं व्युत्पत्तिविरुद्धं न बोधयन्ति। व्युत्पत्तेश्च प्रत्यक्षसापेक्षत्वात् तद्विरुद्धं सकलपदार्थानां अन्यपर्यन्तत्वं च[13] न बोधयन्ति। यथा [1] "आदित्यो यूपः" इत्यादिवाक्यम्। तत्र व्युत्पत्त्यर्थं शब्दस्य[14] प्रत्यक्षसापेक्षत्वात् प्रत्यक्षविरुद्धं यूपादित्यतादात्म्यं हि न बोधयितुमलं तद्वाक्यम्;

१. वाच्यैकदेशेषु – इत्येतत् क्वचिन्नास्ति ॥ वाच्यैकदेशे—पा०
२. वाच्यकपर्यवसानम्—पा०
३. अन्तर्यामितयाः—पा०
४. ब्रह्मकार्यत्वम्—पा०
५. तत्प्रकार—पा०
६. वाचकतया—पा०
७. सामग्रीवैकल्यात्—पा०
८ इति च गम्यते—पा०
९. "सति"—एतन्नास्ति क्वचित्।
१०. सापेक्षाणि—पा०
११. "व्युत्पत्ति"—एतन्नास्ति क्वचित्।
१२. बोधकानि स्युः—पा०
१३. "च"—नास्ति क्वचित्।
१४. अप्रत्यक्षत्वात्—पा०

1. पूर्वमी. १-४-१५.

स्यात् । नैवम् । सर्वे शब्दाः [1] अचिज्जीवविशिष्ट [2] परमात्मनो वाचकाः

अत्रापि तद्वत् इत्यर्थः । परिहरति—नैवमित्यादिना । यूपादित्यभेदविषयस्य [3] प्रत्यक्षस्य अनन्यथासिद्धत्वात्, तत् यूपादित्यतादात्म्यवादिवाक्यस्वारस्यभञ्जकम्; न तु प्रत्यक्षत्वात् । अत एव हि प्रत्यक्षावगतज्वालैक्यस्य अनन्यथासिद्धमनुमानं भञ्जकम्; देहातिरिक्तात्मवादि [4] वाक्यं प्रत्यक्षसिद्धदेहात्माभिमानस्य भञ्जकम् । तत्र हि ज्वालैक्यप्रत्यक्षम् [5] एकवर्तिकावर्तित्वसादृश्यात् अन्यथासिद्धम् । देहात्माभिमान विषय [6] प्रत्यक्षं च 'उष्णं जलम्' इतिवत् संसर्गात् अन्यथासिद्धम् । तस्मात् ज्वालैक्यविषयस्य, देहात्माभिमानविषयस्य च अन्यथासिद्धस्य प्रत्यक्षस्य अनुमानागमौ भञ्जकौ भवतः । तत्रापि व्याप्ति लिङ्ग-धर्मिग्राहि प्रत्यक्षस्य अनन्यथासिद्धत्वात् तत् अबाधितम् । एवमत्रापि तत्तत्पदार्थपर्यन्तत्वग्रहणमन्यथासिद्धम् । [7] तत्तत्पर्यन्तत्व [8] व्युत्पत्तिश्च अन्यथासिद्धा इति । अनन्यथासिद्धागमेन [9] अन्यथासिद्धांशबाधो युक्त एव । अत्रापि अनन्यथासिद्धं तत्तत्पदार्थस्वरूपविषयम्, शब्दस्वरूपविषयम्, तत्संबन्धविषयं [10] च प्रत्यक्षं न बाध्यते । अन्यथासिद्धः, तत्तन्मात्रपर्यन्तत्वांश एव [11] बाध्यते इति परिहारमभिप्रेत्याह सर्वे इत्यादिना । शब्दानां परमात्मपर्यन्तत्वं युक्तम् । * बाधकस्य अन्यथासिद्धत्वात् इत्यभिप्रायः । तत्र कथं अन्यथासिद्धिः-

* बाधकस्य—परमात्मपर्यन्तत्वबाधकप्रत्यक्षादेः ।

१. शब्दा अपि—पा०
२. विशिष्टस्य—पा०
३. विषयप्रत्यक्षस्य—पा०
४. वादि च वाक्यम्—पा०
५. प्रत्यक्षम् इति केषुचित्कोशेषु न ।
६. विषयं प्रत्यक्षम्—पा०
७. तत्पर्यन्त—पा०
८. पर्यन्तव्यु—पा०
९. अनन्यथासिद्धागमेन—एतत् केषुचित् कोशेषु न दृश्यते ।
१०. संबन्धिविषयम्—पा०
११. एव हि—पा०

इत्युक्तम् [1]"नामरूपे व्याकरवाणि" इत्यत्र। [2]तत्र लौकिकास्तु पुरुषाः शब्दं [3]व्यवहरन्तः, शब्दवाच्ये प्रधानांशस्य[4] [5]परमात्मनः प्रत्यक्षाद्यपरिच्छेद्यत्वात् वाच्यैकदेशभूते वाच्यसमाप्तिं मन्यन्ते। वेदान्तश्रवणेन हि [6]व्युत्पत्तिः पूर्यते।

---

इत्यत्राह [7]तत्र लौकिका इति। तत्तत्पदार्थानां [8]ब्रह्मपर्यन्तत्वग्रहणे [9]तत्तत्पर्यन्तशब्दव्युत्पत्तौ च ब्रह्मस्वरूपग्रहणं [10]अवश्यापेक्षितम्। यथा नैल्यपीतिमादीनां द्रव्यपर्यन्तत्वग्रहणे नीलपीतादि[11]शब्दव्युत्पत्तौ च तत्तद्वस्तुग्रहणमपेक्षितम्। [+]तस्य च प्रत्यक्षागोचरत्वात् तत्तद्वस्तुमात्रपर्यन्तग्रहणम्, तत्तत्पदव्युत्पत्तिश्च उभयं[12] [illegible] अन्यथासिद्धमित्यर्थः। तर्हि व्युत्पत्त्या वेदान्तश्रवणम्, वेदान्तश्रवणाच्च[13] व्युत्पत्तिः इत्यत्राह वेदान्त इति। एकदेशव्युत्पत्त्या वेदान्तश्रवणमुपपद्यते; वेदान्तश्रवणेन व्युत्पत्तिपूर्तिः; न तु कार्त्स्न्येन आदितः प्रभृति व्युत्पत्ति—इति नान्योन्याश्रयः इत्यर्थः।

---

+ तस्य च—तस्य च ब्रह्मस्वरूपस्य।

१. अत्र—पा०
२. 'तु' नास्ति क्वचित्।
३. व्याहरन्तः—पा०
४. प्रधानांशस्यैव—पा०
५. "परमात्मनः"—अयं क्वचिन्नोपलभ्यते।
६. च—पा०
७. अत्र—पा०
८. पर्यन्तग्रहणे—पा०
९. तत्पर्यन्त—पा०
१०. अवश्येति क्वचिन्नास्ति।
११. शब्द—एतन्नास्ति क्वचित्।
१२. उभयमन्यथा—पा०
१३. श्रवणेन च—पा०

1. आ, च, [illegible]

एवमेव वैदिकाश्शब्दास्सर्वे परमात्मपर्यन्तान् स्वार्थान् बोधयन्ति। वैदिका एव सर्वे शब्दाः, [1]आदौ वेदादेवोद्धृत्योद्धृत्य, परेणैव[2] ब्रह्मणा सर्वपदार्थान् पूर्ववत् सृष्ट्वा, तेषु परमात्मपर्यन्तेषु पूर्ववत् नामतया प्रयुक्ताः। तदाह मनुः—

[1]"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्[3],
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे" इति।

"संस्थाः"–संस्थानानि, रूपाणीति यावत्। आह च भगवान् पराशरः-

[2]"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्[4]।
वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति।

---

एवं [5]लौकिकशब्दानां तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नानामपि परमात्मपर्यन्तत्व मुक्तम्। वैदिकशब्दानां परमात्मपर्यन्तत्वमाह **एवमेव** इति। वैदिका एव शब्दाः परमात्मपर्यन्तास्स्युः, लौकिकाः स्तत्तद्वस्तुमात्रपर्यन्तास्स्युः, व्युत्पत्तिस्वारस्य-सिद्धयर्थम् इत्यत्राह **वैदिका एव** इति। लौकिकशब्दानामपि [6]वेदशब्देभ्यः उद्धृत्य तत्तद्वस्तुषु प्रयुक्तत्वात् सर्वे शब्दाः वैदिका एव इति, सर्वे परमात्मपर्यन्ता एव इत्यर्थः।

तत्र प्रमाणमाह **तदाह** इति। "संस्था" शब्दस्य स्थित्यर्थताव्यावृत्त्यर्थमाह "**संस्थाः**" **संस्थानानि** इति। **आह च** इति। अत्र मनु–पराशरयोरैककण्ठ्यं

---

१. आदौ उद्धृत्योद्धृत्य, वेदादेवोद्धृत्यो-द्धृत्य–पा०
२. परेण ब्रह्मणा–पा०
३. विविधानि च–पा०
४. प्रपञ्चितम्–पा०
५. लौकिकानां तत्तद्वस्तु–पा०
६. वेदशब्देन उद्धृत्य–पा०

1. मनुस्मृ. १-२१.
2. वि. पु. १-५-६३

श्रुतिश्च [1] "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति। सूर्यादीन् पूर्ववत् परिकल्प्य, नामानि च पूर्ववच्चकारेत्यर्थः ॥

एवं जगद्ब्रह्मणोरनन्यत्वं प्रपञ्चितम्। तेन एकेन [1] ज्ञानेन सर्वस्य ज्ञातता उपपादिता भवति। सर्वस्य ब्रह्मकार्यताप्रतिपादनेन तदात्मकतयैव सत्यत्वं नान्यथेति [2] [2] "तत्सत्यम्" इत्युक्तम्। यथा दृष्टान्ते सर्वस्य [3] मृद्विकारस्य मृदात्मनैव [4] सत्यत्वम् ॥

---

दर्शितम् [5]। श्रुतिश्च इति। "सूर्याचन्द्रमसौ" इति निर्देशेन नामकल्पनं चार्थसिद्धम् इत्यभिप्रायात्, पूर्वोक्तोपबृंहणवचनानुगुण्याच्च, नामानि च पूर्ववच्चकार इति व्याख्यातम्। शब्दास्सर्वे वैदिका एव, आनुपूर्वीभेदमात्राल्लौकिकत्वम्; तत एव लक्षणभेदश्च। तस्मात् सर्वे शब्दाः ब्रह्मपर्यन्ताः —इति।

ततः किम् "अयमर्थः" इत्यारभ्य प्रतिपिपादयिषितस्यार्थस्य [6]—इत्यत्राह एवमिति। ब्रह्मण एवोपादानत्वनिमित्तत्वोपपादनेन, जगद्ब्रह्मणोरनन्यत्वं उक्तमित्यर्थः। तेन इति जगतस्सत्यत्वेन सत्यमिथ्यार्थयो [7]रेकताप्रसङ्गाद्यभावात् एकविज्ञानेन [8] सर्वविज्ञानमुपपादितं भवति इत्यर्थः। सर्वस्य इत्यादि। "तत्सत्यम्" इति वाक्ये ब्रह्मात्मकतयैव जगत् सत्यम्, [9] स्वनिष्ठत्वमेवासत्यम्, इति जगतो ब्रह्मात्मकत्वेन [10] सत्यत्वोपपादनात् महावाक्यस्वारस्यमपि जगत्सत्यत्वानुगुणमित्यर्थः। यथा इति। "लोकदृष्टप्रकारेण दृष्टान्तस्य कथनीयत्वात्, दृष्टान्तस्य च लोके सत्यत्वेन संप्रतिपन्नत्वात्, दार्ष्टान्तिकस्य च दृष्टान्तानुगुणत्वात् "तत्सत्यम्"

---

१. ज्ञातेन—पा०
२. तदेव सत्यम्—पा०
३. सर्वमृद्विकार—पा०
४. मृदात्मकतयैव—पा०
५. दर्शितं स्पष्टम्—पा०
६. अर्थस्येति क्वचिन्नास्ति।
७. मिथ्यात्वयोः—पा०
८. एकज्ञानेन—पा०
९. स्वनिष्ठमेव—पा०
१०. ब्रह्मात्मकत्वेन—पा०

1. तै. उ. १ अनु. ३८ वा.
2. छा. उ. ६ ८-६-१६.

इत्यादिवाक्यान्यपि जगतस्सत्यत्वपराणीति, महावाक्यस्वारस्यं जगतस्सत्यत्वानुगुणमित्याशयः ॥

किञ्च मृत्पिण्डादिदृष्टान्तत्रयमपि परिणामपक्षानुगुणमेव। दार्ष्टान्तिकब्रह्मकारणत्वपराणि [1] "तत्तेजोऽसृजत" [2] "तदात्मानं स्वयमकुरुत" इत्यादिवाक्यान्यपि परिणामानुगुणान्येव; न हि रज्जुसर्पादिदृष्टान्तश्श्रूयते?[3] । [4] "व्यवर्तत" [5] "अभ्रमत्" इत्यादिकमपि पदं न श्रूयते। सूत्रं च [6] "परिणामात्" [7] "अत्मकृतेः" [8] "पटवच्च" इत्यादि; न तु "विवर्तात्" इति, "रज्जुसर्पवत्[1]" इति च । उपबृंहणवचनान्यपि परिणामानुगुणान्येव; [9] "निस्सरन्ति यथा लोहपिण्डात्" [10] "कटकमुकुट" इत्यादीनि; एवं सकलश्रुति स्मृति सूत्रानुगुणत्वात्[2] परिणामपक्षे सुस्थे सति, स च [3]सद्वारकोऽद्वारको वा परिणाम इति विवेके, ब्रह्मणो [4] निर्दोषत्वाविकारत्वादिश्रुतिबाधप्रसङ्गात् सद्वारकत्वमेव युक्तम्। [11] "यस्यात्मा शरीरम्" इत्यादिश्रुतयश्च शरीरशरीरिभावं वदन्त्यः परिणामादिकं सद्वारकं ज्ञापयन्ति। उपबृंहणेष्वपि [12] "काठिन्यवान् यो बिभर्ति .... तस्मै भूम्यात्मने नमः" इति [5] ब्रह्मणो निर्देशात्[6] सद्वारकत्वमेव स्पष्टम्। सद्वारकमुपादानत्वं ब्रह्मणि [7] मुख्यमेव। शरीरवाचिपदानां शरीरिपर्यन्तत्वात् ॥

---

१. सर्पादिति च—पा०
२. आनुगुण्यात्—पा०
३. सद्वारको वा—पा०
४. निर्दोषत्वनिर्विकारत्वादि श्रुत्यतिबाधप्रसङ्गात्—पा०
५. 'ब्रह्मणो निर्देशात्'—अयं क्वचिन्न दृश्यते।
६ निर्देश्यत्वात्—पा०
७, ब्रह्मणो—पा०

1. छा. उ. ६-२-३.
2. तै. उ. आ. ७.
3, 4, 5. भा. १०७.
6. ब्र. सू. १-४-७-५.
7. ब्र. सू. १-४-७-४.
8. ब्र. सू. २-१-६-५.
9. याज्ञ. स्मृ. प्रा. का. ६७.
10. वि. पु. ३-७-१६
11. सु. उ.
12. वि. पु. १-१४-२७.

मीमांसकैरपि गद्वारकस्यापि[1] मुख्यत्वमभ्युपगम्यते । यथा परमापूर्वं प्रति प्रोक्षणादेः शेषत्वम् । तत्र हि यज्ञशेषत्वं व्रीह्यादिद्वारकम । अपूर्वशेषत्वं[2] व्रीहियागद्वारकम् । [1]"अरुणया क्रीणाति" [2]"गवा यजते[3]" इत्यादिषु गुणस्य जातेश्च क्रयचजनसाधनत्वं सद्वारकमपि मुख्यमेवाभ्युपगतम् ॥

एवं विशिष्टस्य ब्रह्मणः शरीरद्वारकमुपादानत्वं मुख्यमेव । [4]एवं विशिष्टस्यैवो-उपादानत्वं सर्ववेदान्तिभिरभ्युपगतम्[5]; आविद्योपाधिशक्ति[6] विशिष्टस्यैव उपादनत्वो-ऽपपादनात् । तस्मात्——चिदचिद्विशिष्टमेव ब्रह्म कारणम् परीणामित्वेन, न तु विवर्ताधिष्ठातृत्वेन[7] ।

षड्विधतात्पर्यलिङ्गं च अस्मत्पक्ष[8] एवास्ति; षड्विधतात्पर्यलिङ्गं[9] अद्वैतविषयम्, इत्येतदभ्युपगतम्;[10] तत्तु न निर्विशेषाद्वैतविषयम्, अपि तु विशिष्टाद्वैतविषयम् ।

*[11] उपक्रमे [3]"सदेव" इति वाक्यं च, निमित्तत्वोपादनत्वतदुपयोगि-सार्वज्ञ्यसर्वशक्तित्वादिपरत्वात् सविशेषविषयम् । उपसंहारगतं [4]"तत्त्वमसि" इति सामानाधिकरण्यं प्रवृत्तिनिमित्तभेदेन एकार्थविषयत्वात् विशिष्टाद्वैतविषयम् । [12]विशिष्टे-

* "उपक्रमोपसंहारौ, अभ्यासोऽपूर्वता फलम्, अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" (श्रु. प्र. पु. १०६—१०७.)

१. अपिर्नास्ति कुत्रचित् ।
२. व्रीहि—एतन्न दृश्यते क्वचित ।
३. यजेत—पा०
४. एवम्—क्वचिदेतन्न दृश्यते ।
५. अभ्युपेतम्—पा०
६. शक्तिरिति नास्ति क्वचित ।
७. अधिष्ठानत्वेन—पा०
८. असीति—पा०
९. अभ्यासोऽस्ति—पा०
१०. विशेषत्वम्—पा०
११. अस्मिन्पक्षे—पा०
१२. लिङ्गम्—क्वचिदेतन्नास्ति ।

1. पू. मी. ३-१-९.
2. पू. मी.
3. छा. उ. ६ २-१.
4. छा. उ. ६ १६-३.

**शोधकवाक्यान्यपि निरवद्यं सर्वकल्याणगुणाकरं [1] परं [2] ब्रह्म [3] शोधयन्ति ।**

कार्थपरस्य [1] "तत्त्वमसि" वाक्यस्य आवृत्तत्वात् अभ्यासोऽप्यस्ति । चिदचिदात्मकप्रपञ्चस्य ब्रह्मविशेषणत्वं प्रमाणान्तरागोचरम् * इति अपूर्वता चास्ति । [4] एतदर्थज्ञानवतः [2] "तस्य तावदेव चिरम्" इति मोक्षोपदेशात् फलं चास्ति । [5] एतद्विषयस्य पितापुत्रसंवादरूपत्वात् अर्थवादश्चास्ति । [6] तस्मिन्नेवार्थे [7] मृत्कार्यदृष्टान्तोपन्यासेन उपपत्तिश्चास्ति । इति षड्विधतात्पर्यलिङ्गं विशिष्टाद्वैतविषयम् इति आशयः, इत्यन्वयः ।

एवं सद्विद्यायास्सविशेषपरत्वमुक्तम् ॥ अथ शोधकवाक्यानां सविशेषपरत्वमुच्यते **शोधक** इत्यादिना । तत्र श्रौतगुणनिषेधं द्विधा परिहरति **निरवद्यं सर्वकल्याणगुणाकर**मिति पदद्वयेन । "सामान्यनिषेधः विशेषोपस्थापके सति तत्र पर्यवस्यति 'छागो वा मन्त्रवर्णात्' [3] इति न्यायात् । तस्मात् [4] 'अपहतपाप्मा' इत्यादिभिः हेयगुणानां [8] निषिध्यमानत्वात् गुणसामान्य [9] निषेधः तत्पर्यवसायी" इति "निरवद्यम्" इति पदस्याभिप्रायः । "विशेषविधाने सति सामान्यनिषेधस्तद्व्यतिरिक्तविषय एव; यथा अग्नीषोमीयहिंसाव्यतिरिक्तविषयः '[5] न हिंस्यात्सर्वा भूतानि' इति सामान्यनिषेधः । तस्मात् '[6] सत्यकामस्सत्यसंकल्प' [10] इत्यादिभिर्मङ्गलगुणविधाने सति गुणनिषेधः तद्व्यतिरिक्तविषयः" इति "सर्वकल्याणगुणाकर"मिति पदस्याभिप्रायः । [11] आर्थभेदनिषेधः परिहरिष्यते ।

---

* गोचरशब्दस्य अबहुव्रीहौ नित्यपुंलिङ्गत्वात्, अत्र 'प्रमाणान्तरागोचर' इति पाठेन भाव्यमिति भाति ।

1. "परम्"—एतत् बहुषु कोशेषु न दृश्यते ।
2. ब्रह्मैव—पा०
3. बोधयन्ति—पा०
4. विषयपिता—पा०
5. अस्मिन्नेव—पा०
6. तत्कार्य—पा०
7. निषेध्य—पा०
8. निषेधशब्दस्तत्पर्यवसायी—पा०
9. इति मङ्गलगुण—पा०
10. आर्थगुण—पा०

1. छा. उ. ६-७-१५.
2. छा. उ. ६-१४-२.
3. पू. मी ६-७-२९.
4. छा. उ. ८-७-१.
5. छा. उ. ८-१५-२. वाक्यानुवादः
6. छा. उ. ८-७-१.

सामानाधिकरण्यान्यथानुपपत्त्या[1] निर्विशेषवस्तुसिद्धिं दूषयति सर्वे इत्यादिना। विशेषणविवक्षायां विशेषणभेदेन विशेष्यभेदात्, युगपदभिधाने विशेषणानामप्यैक्यप्रसङ्गात्, क्रमेणाभिधाने, विशेषणानामन्योन्यविशेषणविशेष्यभावप्रसङ्गाच्च, वस्तुमात्रैक्यपरमेव सामानाधिकरण्यम्; तत्र प्रतियोगिरूपप्रवृत्तिनिमित्तभेदात् न सामानाधिकरण्यलक्षणहानिः। वाक्यतात्पर्यानुगुणा लक्षणा[2] तद्विरुद्धमुख्यवृत्तेर्गरीयसी। सर्वपदलक्षणा च न दोषः। [1]'विषं भुङ्क्ष्व' इत्यादिषु दर्शनात्। सर्वपदलक्षणायामपि समानविभक्त्या तात्पर्यनिर्णयः[3]। शौक्ल्यादेः काष्ण्यादिव्यावृत्तिवच्च, न व्यावृत्तिः धर्मः[4]; स्वरूपमेव व्यावृत्तिः। न च पर्यायता। [5]काष्र्ण्यव्यावृत्तपीतिमव्यावृत्तादिशब्दवत्, इति हि पूर्वपक्षशरीरम्? विरुद्धविशेषणानामेव विशेष्यभेदापादकत्वात्, न विशेषणभेदे विशेष्यभेदः; युगपदभिधानेऽपि समानविभक्त्या [6]विशेष्यमात्रैक्यप्रतिपादनात्[7] न विशेषणैक्यप्रसङ्गः; [2]"पदजातं श्रुतं सर्वम्" इत्यादिन्यायेन सर्वैः पदैर्युगपदेव अनेकविशेषणविशिष्टैकार्थाभिधानात् न विशेषणानां अन्योन्यविशेषणविशेष्यभावप्रसङ्गः। [8]उद्देश्योपादेयविभागस्तु परामर्शदशायामेवावगत[9] इति न विशेषणविवक्षायाः काचिदनुपपत्तिः; इत्येतावदभिप्रेतम्, श्रीमद्भिः भाष्यकारैः श्रीभाष्येऽभिहितत्वात्।

१. सामानाधिकरण्यानुपपत्त्या—पा०
२. अनुगुणलक्षणा—पा०
३. निश्चय—पा०
४. व्यावृत्तिधर्मः—पा०
५. काष्र्ण्यादि—पा०
६. विशेष्यैक्यप्रतिपादनात्—पा०
७. विशेष्यैक्यमात्रप्रतिपादनात्—पा०
८. उद्देश्यविधेय—पा०
९. अवगम्यते—पा०

1. लौकिकवाक्यम्
2. श्रु. प्र. जिज्ञासाधि. पु. १०७. प. ३६.

सर्वप्रत्यनीकाकारताबोधने[1] ऽपि, [2] तत्तत्प्रत्यनीकाकारतायां भेदस्यावर्ज-नीयत्वाच्च [3] निर्विशेषत्वसिद्धिः ॥

---

अत्र [4] शौक्ल्यादिदृष्टान्तव्यावृत्तिं द्विधाऽऽह सर्व इत्यादिना। सर्वप्रत्यनी-काकारताबोधने [5] ऽपि इति। "कार्ण्यव्यावृत्त" मित्यादिषु प्रतियोगितद्व्यावृत्ती शब्दस्वारस्यादेव [6] प्रतिपन्ने; अत्र तु अन्वयरूपार्थाभिधायिनश्शब्दस्य व्यतिरेकमुखेन अर्थपरिकल्पन [7] मयुक्तम्" इत्यपिशब्दस्य भावः [8]। एवं [9] शौक्ल्यादिदृष्टान्तात् शब्दवैषम्यमुक्तम्। अथ अर्थवैषम्यमभिप्रेत्याह [10] तत्तत्प्रत्यनीकाकारतायां भेदस्यावर्जनीयत्वादिति। शौक्ल्यस्य [11] कस्यचिद्धर्मभूतत्वात् [12] स्वरूपमेव व्यावृत्तिः, स्वरूपे प्रतिपन्ने अध्यासासहत्वाच्च। ब्रह्म तु न कस्यचित् धर्मभूतम्; स्वरूपे प्रतिपन्ने अध्याससहं च। तस्मात् स्वरूपातिरेकेण व्यावृत्तिरभ्युपगन्तव्या; इति भावः।

---

१. आकारबोधने—पा०
२. तत्तत्प्रत्यनीकाकारभेदस्य, तत्तत्प्रत्यनी-कताभेदस्य—पा०
३. निर्विशेषवस्तुसिद्धिः—पा०
४. शौक्ल्यदृष्टान्त—पा०
५. प्रत्यनीकताकारबोधने—पा०
६. संप्रतिपन्ने—पा०
७. स्वार्थपरिकल्पनम्, अर्थपरत्व-कल्पनम्—पा०
८. अपिशब्दभावः
९. शौक्ल्यदृष्टान्तात्—पा०
१०. तत्तत्प्रत्यनीकताभेदस्य—पा०
११. कस्यचिद्धर्म—पा०
१२. धर्मत्वात्—पा०

ननु ज्ञानमात्रं ब्रह्मेति प्रतिपादिते निर्विशेषज्ञानमात्रं ब्रह्मेति निश्चीयते। नैवम्-स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन स्वरूपमपि[1] प्रतिपादयन्ति गवादिशब्दवत्[1]। तथाऽऽह सूत्रकारः—"तद्गुणसारत्वात्तु[2] तद्व्यपदेशः प्राज्ञवत्[2]" [[3] इति। ज्ञानगुणसारत्वात् आत्मनो ज्ञानमिति व्यपदेशः। यथा प्राज्ञेन ब्रह्मणा विपश्चिता; "यस्सर्वज्ञस्सर्ववित्" इति सर्वज्ञ एव ज्ञानगुणसारत्वात् 'सत्यंज्ञान' मिति व्यपदिश्यते।][3] यावदात्मभावित्वाच्च न दोषः" इति। ज्ञानेन[4] धर्मेण[5] स्वरूपमपि निरूपितम्। न तु[6]

[7]अथ [8]गुणनिषेधं वदन् परिचोदयति ननु इति। न [9]हि ज्ञानं [10]ज्ञानान्तराश्रयो भवति; तस्मात् ज्ञानस्वरूपत्वप्रतिपादनेन गुणनिषेधस्सिद्धः [11]इत्यर्थः। परिहरति नैवम् इति। स्वरूप इत्यादि। स्पष्टम्। तथाह इति। धर्मवाचिशब्दस्य धर्मिपर्यन्तत्वं लक्षणा स्यादिति शङ्कापरिहाराय "यावदात्म" इति सूत्रमुदाहृतम्। जातिगुणयोः व्यक्तिगुणिपर्यन्तत्वस्य लोके प्रत्यक्षसिद्धत्वात् तद्वाचिशब्दानां तत्पर्यन्तत्वमाश्रितम्। अत्र तु ज्ञानस्य धर्म्यन्तरनिष्ठत्वं [12]कथमित्यभिप्रायेण चोदयति ज्ञानेन इति। तत्र प्रमाणं दर्शयति "यस्सर्वज्ञः" इति। ज्ञानस्वरूपत्वश्रुत्यनुगुणं ज्ञातृत्वस्वरूपता-

---

१. अपिर्नास्ति क्वचित्।
२. "तु" नास्त्येतत् केषुचिद्ग्रन्थेषु।
३. कुण्डलितो भागः केषुचित्कोशेषु न दृश्यते।
४. धर्मिस्वरूपम्—पा०
५. अपिर्नास्ति क्वचित्।
६. "तु" केषुचित्कोशेष्वयं दृश्यते।
७. "अथ"—एतन्नास्ति क्वचित्।
८. आर्थगुणनिषेधं परिचोदयति—पा०
९. "हि"—अयं कुत्रचिन्नास्ति।
१०. ज्ञानाश्रयः—पा०
११. इत्यभिप्रायः—पा०
१२. कथमवगतम्—पा०

1. गवादिपदानां जातवेव शक्तिरिति मीमांसकाः। तर्कसं. दीपि. सव्या. शब्दपरि.
2. ब्र. सू. २-३-२०.
3. ब्र. सू. २-३-२१.

ज्ञानमात्रं ब्रवीति। कथ[1]मिदमवगम्यत इति चेत् "[1]यस्सर्वज्ञस्सर्ववित्" [2]इति ज्ञातृत्वश्रुतेः, "[2]परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च" "[3]विज्ञातारमरे केन विजानीयात्" [3]इत्यादिश्रुतिशतसमधिगत[4]मिदम्। ज्ञानस्य धर्ममात्रत्वात् धर्ममात्रस्यैकस्य [5]वस्तुत्व-

श्रुतिः नेया; [6]न तु ज्ञातृत्वश्रुत्यनुगुणं ज्ञानस्वरूपताश्रुतिर्नेया; इत्यत्राह "परास्य शक्ति"रिति। ज्ञातृत्वश्रुतीनां भूयस्त्वात् बहुस्वारस्यानुगुणं कतिपयश्रुतिर्नेयेत्यर्थः। [4]"द्वैधे, बहूनां वचनम्" इति हि स्मृतिः। [5]"भूयसां स्याद्बलीयस्त्वम्" इति [7]मीमांसकाः। "स्वाभाविकी" इति श्रुत्या, ज्ञातृत्वादेः आविद्यकत्वादि [8]च परिहृतं भवति। [9]ज्ञानशब्दस्य [10]ज्ञातृत्वपर्यन्तत्वे तु न कस्यचिन्नैरर्थक्यम् [11]ज्ञातृशब्दस्य ज्ञानपरत्वे 'तृच्' प्रत्ययो निरर्थकस्स्यात् इत्ययमर्थः [12]अर्थसिद्ध [13]इति न कण्ठोक्तः। [14]ज्ञानस्य ज्ञानाद्याश्रयत्वं व्याप्तिविरुद्धमित्यत्राह ज्ञानस्य इति। एकस्य धर्मिरहितस्य [15]ज्ञानस्य ज्ञानान्तराश्रयत्वे तु न श्रुतिविरोधः; [16]उपपादितप्रकारात् व्याप्तिविरोधश्चेत्, ज्ञानं कस्यचिद्धर्मत्वेन दृष्टमिति तत्रापि

१. "इदम्" एतन्नोपलभ्यते क्वचित्।
२. इत्यादिज्ञातृत्व—पा०
३. इति श्रुतिशत—पा०
४. इति—पा०
५. वस्तुप्रतिपादन—पा०
६. श्रुतयो नेयाः—पा०
७. इति हि—पा०
८. आविद्यकत्वम्—पा०
९. भवतीति न दृश्यते क्वचित्।
१०. ज्ञातृपर्यन्त—पा०
११. नैरर्थ्यम्—पा०
१२. अर्थशब्दः नास्ति कुत्रचित्।
१३. सिद्धस्स्यादिति—पा०
१४. कण्ठोक्ति.—पा०
१५. रहितज्ञानस्य—पा०
१६. उपपादन—पा०

1. मु. उ. २-२-७.
2. श्वे. उ. ६-६-१७.
3. बृ. उ. ४-४-१४.
4. याज्ञ—स्मृतिवाक्यानुवादः
5. पू-मी-१२-२-२४. सूत्रानुवादः

प्रतिपादनानुपपत्तेश्च । अतः सत्यज्ञानादिपदानि [1] स्वार्थभूतज्ञानादि-विशिष्टमेव ब्रह्म प्रतिपादयन्ति ॥

"तत् त्वम्" इति [2] द्वयोरपि पदयोः स्वार्थप्रहाणेन [3] निर्विशेष-वस्तुस्वरूपोपस्थापनपरत्वे मुख्यार्थपरित्यागश्च ।

[4] ननु ऐक्यतात्पर्यनिश्चयात् न लक्षणादोषः । "सोऽयं देवदत्तः" इतिवत् । यथा 'सोऽयम्' [5] इत्यत्र, [6] 'स' इति शब्देन देशान्तर-[7] कालान्तरसम्बन्धी [8] पुरुषः प्रतीयते ; [9] 'अयम्' [10] इति च सन्निहित-

---

तुल्यम् । श्रुतिबलात् [11] स्वतन्त्रत्वं चेत्, तत एव ज्ञानाद्याश्रयत्वसम्भवः इति प्रतिबन्दीमुखेन व्याप्तिविरोधः परिहृतः । परपक्षस्य धर्मभूतस्य स्वतन्त्रवस्त्वन्तरत्व-कल्पनानुपपत्तिः दूषणं चोक्तं भवति । अत इत्यादि स्पष्टम् ।

अथ प्रस्तुतेऽर्थे दूषणान्तरमाह "तत् त्वम्" इत्यादिना । लक्षणा स्या-दित्यर्थः ।

"तात्पर्यविरुद्धमुख्यवृत्तेरपि तात्पर्यानुगुणा लक्षणा प्रबला" इति चोदयति ननु ऐक्य इति । दृष्टान्तं विशदयति यथा इति । परिहरति नैतदित्यादिना । अन्यतरपदस्यापि न लक्षणेत्यभिप्रायेण "गन्ध"शब्दः । विरोधाभावं विवृणोति एकस्य इति । क्रियाद्वयम् किमित्यत आह देशान्तर इति । तथापि देशद्वयसम्बन्धो

१. स्वार्थभूतेति कुत्रचिन्नोपलभ्यते ।
२. द्वयोः पदयोरपि—पा०
३. निर्विशेषस्वरूप—पा०
४. ननुर्नास्ति क्वचित् ।
५. सोयं देवदत्त इत्यत्र—पा०
६. तच्छब्देन—पा०
७. कालान्तरेति क्वचिन्नोपलभ्यते ।
८. सम्बन्धिपुरुषः—पा०
९. अयमिति वर्तमानकालदेशसन्निहित-संबन्धी—पा०
१०. इत्यत्र इदंशब्देन च—पा०
११. स्वतन्त्रं चेत्—पा०

देशवर्तमानकालसम्बन्धी । तयोस्सामानाधिकरण्येनैक्यं प्रतीयते । तत्र एकस्य युगपत् विरुद्धदेशकालसम्बन्धितया[1] प्रतीतिर्न घटत इति, द्वयोरपि[2] पदयोः[3] स्वरूपमात्रोपस्थापनपरत्वम्[4], [5]स्वरूपस्य चैक्यं प्रतिपाद्यते इति चेत्; नैतदेवम्—"सोऽयं देवदत्तः" इत्यत्रापि लक्षणागन्धो न विद्यते, विरोधाभावात् । एकस्य भूतवर्तमानक्रियाद्वयसम्बन्धो[6] न विरुद्धः; देशान्तरस्थितिः भूता; सन्निहितदेशस्थितिः वर्तते; अतः भूतवर्तमान-क्रियाद्वयसम्बन्धितया ऐक्यप्रतिपादनमविरुद्धम् । देशद्वयविरोधश्च काल-भेदेन परिहृतः ।

लक्षणायामपि न द्वयोरपि पदयोर्लक्षणासमाश्रयणम्, [7]एकेनैव लक्षितेन विरोधपरिहारात् । लक्षणाभाव एव उक्तः, देशान्तरसम्बन्धितया भूतस्यैव [8]अन्यदेशसंबन्धितया वर्तमानत्वाविरोधात् । एवमत्रापि

---

विरुद्ध इत्यत्राह देशद्वय इति । कालद्वयसम्बन्धविरोधे क्षणिकत्वप्रसङ्गात् देशद्वय-सम्बन्धविरोधः इत्यर्थः । [9]देशद्वयसम्बन्धविरोधे तीर्थयात्रादिविधानानुपपत्ति-[10]श्चाभिप्रेता ॥

अथ पदद्वयलक्षणायां दूषणमाह लक्षणायामपि इति । लक्षणाभाव एव इत्यादि । स्पष्टम् । "सोऽयं देवदत्तः" इत्यादौ लक्षणा न स्यात् । अत्र तु[11] 'तत् त्वम्' पदावगतार्थविरोधात् लक्षणैव स्यात्" इत्यत्राह एवमत्रापि इति ।

१. संबन्धताप्रतीतिः—पा०
२. तयोरपि—पा०
३. स्वरूपोपस्थापन—पा०
४. परत्वात्—पा०
५. स्वरूपैक्यम्—पा०
६. क्रियासम्बन्धः—पा०
७. एकेनैव पदेन लक्षितेन—पा०
८. अन्यदेशवर्तमानत्व—पा०
९. "देशद्वयसम्बन्धविरोधे तीर्थ"—अयं न दृश्यते केषुचित्कोशेषु ।
१०. वा अभिप्रेता—पा०
११. "तु" नास्ति क्वचित् ।

जगत्कारणभूतस्यैव[1] परस्य ब्रह्मणः जीवान्तर्यामितया जीवात्मत्वं[2] अविरुद्धमिति प्रतिपादितम् । यथाभूतयोरेव हि द्वयोरैक्यं सामानाधिकरण्येन प्रतीयते? तत्परित्यागेन स्वरूपमात्रैक्यम् न सामानाधिकरण्यस्यार्थः[3] । [1]"भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्" [4]इति हि तद्विदः । [5]तथाभूतयोरेव ऐक्य[6]मुपपादितमस्माभिः ॥

जीवात्मत्वं—जीवतादात्म्यम्, स्वरूपैक्ये शरीरशरीरिभावे च साधारणमिति, तत् विशेषितम् जीवान्तर्यामितया इति । यदुक्तं तात्पर्यविरुद्धमुख्यवृत्तेरपि तात्पर्यानुगुणलक्षणा[7] बलीयसीति, तत् श्रुत्या[8] परिहरन्, अर्थाद्दूषणान्तरं चाह यथाभूतयोरिति । यथाभूतयोः यद्विशेषणविशिष्टयोः । तत्परित्यागेन—यद्विशेषणपरित्यागेन । शब्दप्रतिपन्नविशेषणपरित्यागस्य सामानाधिकरण्यप्रतिपाद्यत्वे सति हि तदनुगुणलक्षणायाः बलीयस्त्वम् । [9]यद्विशेषणं प्रवृत्तिनिमित्ततयाऽपेक्षितम्, तद्विशेषणपरित्यागे सामानाधिकरण्यस्य तात्पर्यमेव नास्ति; प्रत्युत सामानाधिकरण्यापेक्षित एव विशेषणस्वीकारः । अतः तात्पर्यानुगुण्याभावात् लक्षणा न बलीयसी इत्यर्थः । विशेषणान्वयापेक्षा कुत इत्यत्राह भिन्न इति । विशेषण[10]परित्यागरूपानुपपत्तिर्नास्त्यत्पक्ष इत्याह तथाभूतयोरिति । एवं शङ्कापरिहारः कृतः । प्रवृत्ति-

१. परस्येति नास्ति कुत्रचित् ।
२. जीवात्मकत्वम्—पा०
३. सामानाधिकरण्यार्थः—पा०
४. इति तद्विदः—पा०
५. तथाभूतयोरैक्यम्—पा०
६. संपादितम्, प्रतिपादितम्—पा०
७. प्रबलेति—पा०
८. श्रुत्यऽपि—पा०
९. लक्षणाबलीयस्त्वम्—पा०
१०. परित्यागानुपपत्तिः—पा०

1. श्रीभा. जि. अ. १०५.

उपक्रमविरोधश्चुपसंहार[1]वाक्यतात्पर्यनिश्चयश्च[2] न घटते । उपक्रमे हि[3]—[1]"तदैक्षत बहु स्यां [4]प्रजायेय" इत्यादिना सत्यसङ्कल्पत्वं[5] जगदेककारणत्वमप्युक्तम् । तद्विरोधि च अविद्याश्रयत्वादि ब्रह्मणः ॥

अपि च, अर्थभेदतत्संसर्गविशेषबोधनकृत[6]पदवाक्य[7]स्वरूपतालब्धप्रमाणभावस्य शब्दस्य[8] निर्विशेषवस्तुबोधना[9]सामर्थ्यात् न

---

निमित्तभेदाभावात सामानाधिकरण्यलक्षणहानिरूपं दूषणमुक्तं च भवति । उपक्रमदूषण[10]माह उपक्रम इति । तदेवोपपादयति उपक्रमे हि इत्यादिना । ततः किमित्यत्राह तद्विरोधि च इति ।

एवं (१) प्रकृतपरामर्शितच्छब्दावगतगुणगणबाधः[11], (२) पदद्वयलक्षणा, (३) सामानाधिकरण्यलक्षणहानिः, (४) उपक्रमविरोधश्च इति चत्वारि दूषणान्युक्तानि ॥

अथ निर्विशेषवस्तुनि प्रमाणाभावो[12] निरूप्यते अपि च इत्यादिना । अर्थभेद इति । प्रकृतिप्रत्ययार्थभेदबोधनकृतम् पदत्वम् ; अनेकपदार्थ[13]संसर्गविशेषबोधनकृतम् वाक्यत्वमित्यर्थः । "न केवलं प्राबल्यदौर्बल्य—निरूपणेन सविशेष—निर्विशेषविषयत्वनिश्चयः[14]; स्वरूपसिद्धिरेव सविशेषविषयत्वेन" इति—स्वरूपशब्दस्य भावः । प्रमाणभावः—प्रमितिजनकत्वम् ।

---

१. उपसंहारपदेन वाक्य—पा०
२. "च"—अयं केषुचिन्नास्ति ।
३. अपि—पा०
४. "प्रजायेय" इत्येतन्न दृश्यते क्वचित् ।
५. जगत्कारणत्वम्—पा०
६. बोधक्रमपदकृत—पा०
७. वाक्यरूपता, वाक्यस्वरूपतया—पा०
८. शब्दस्येति नास्ति कुत्रचित् ।
९. वस्तुप्रतिबोधना—पा०
१०. विरोधम्—पा०
११. गुणबाधः—पा०
१२. उच्यते—पा०
१३. शब्दार्थ—पा०
१४. निर्विशेषनिश्चयः, सविशेषवस्तुनिश्चयः, सविशेषत्वनिश्चय , निर्विशेषविषयनिश्चयः—पा०

1. छा. उ. ६-२-३.

निर्विशेषवस्तुनि शब्दः प्रमाणम् ।

"निर्विशेष" इत्यादिशब्दास्तु केनचिद्विशेषेण विशिष्टतयाऽवगतस्य वस्तुनो [1] वस्त्वन्तरावगतविशेषनिषेधपरतया [2] बोधकाः; इतरथा [3] तेषा[4]मप्यनवबोधकत्वमेव; प्रकृतिप्रत्ययरूपेण पदस्यैव अनेकविशेषगर्भि-

---

निर्विशेषवस्तुनि न शब्दः प्रमाणम् इति न च वाच्यम्; निर्विशेषशब्दो हि तत्प्रतिपादकः । निर्विशेषशब्देन- निर्विशेषवस्तु प्रमितं चेत्, न तद्दूष्यम् । अप्रमितं चेत्, नितराम् । तस्मात् निर्विशेषवस्तुनि शब्दः [5] प्रमाणमेव--इत्यत्राह निर्विशेष इत्यादिशब्दास्तु इति । न हि निर्विशेषशब्दो निर्विभक्तिकः पदान्तरानन्वितः प्रमितिजनकः, किं तु सविभक्तिकः पदान्तरान्वित एव प्रमितिजनकः । तस्मात् विभक्तिपदान्तरावगतविशेषा अपि न निर्विशेषशब्देन निषेध्याः । तस्मात् कतिपयनिषेधपरतया बोधकाः निर्विशेषादिशब्दाः, न कृत्स्नविशेषनिषेधपराः । तथा सति, "माता मे वन्ध्या" इतिवत् व्याहतिः स्यात् । तस्मात् निर्विशेषशब्दो न निर्विशेषवस्तुनि प्रमितिजनकः--इत्यर्थः । बोधकत्वं--प्रमितिजनकत्वम् । अबोधकत्वमेवोपपादयति प्रकृतिप्रत्ययरूपेण इति । प्रमिताप्रमितविकल्पः अतिदुस्स्थः; तथा सति सर्वदर्शनेषु पूर्वपक्षोपन्यास--[6]तन्निरासानुपपत्तेः; पूर्वपक्षः प्रमितश्चेत्, न दूष्यः; अप्रमितश्चेन्न दूष्यः--इति । पूर्वपक्षस्तु प्रतीत एव, न तु प्रमितः; प्रतीतिसिद्धत्वाच्च दूषणमपि [7] युक्तमिति चेत्-- [8] तर्हि [9] "अङ्गुल्यग्रे" *इत्यादिवाक्यवत्

---

* "अङ्गुल्यग्रे करिशतम्"--"नर्नर्त सूच्यां करिणीसहस्रम्" ।

---

१. वस्त्वन्तरगत--पा०
२. निषेधकतया--पा०
३. इतरथात्वेतेषाम्--पा०
४. अपि नास्ति क्वचित् ।
५. प्रमाणमित्यत्राह--पा०
६. निरसन--पा०
७. अपि न दृश्यते क्वचित् ।
८. "तर्हि"--एतन्नास्ति क्वचित् ।
९. अङ्गुल्यग्रादिवाक्य--पा०

तत्वात्[1], अनेकपदार्थसंसर्गबोधकतया[2] च वाक्यस्य ॥

अथ स्यात्—"नासाभिर्निर्विशेषे स्वयंप्रकाशे[3] वस्तुनि शब्दः प्रमाण[4]मित्युच्यते, स्वतस्सिद्धस्य प्रमाणानपेक्षत्वात्; सर्वैश्शब्दैः तदुपरागविशेषाः [5]ज्ञातृत्वादयः सर्वे निवर्त्यन्ते[6]; सर्वेषु[7] विशेषेषु निवृत्तेषु वस्तुमात्रं अनवच्छिन्नं स्वयंप्रकाशं [8]स्वत एवावतिष्ठते[9]"—इति।

निर्विशेषशब्देन प्रतीतिर्जायते, न तु प्रमितिः। तस्मात्, निर्विशेषवस्तु प्रतीतम् दूष्यमेव—इत्यभिप्रायेण न निर्विशेषवस्तुनि शब्दः प्रमाणम्—इत्युक्तम्। निर्विशेषवस्तुविषयप्रतीतिजनकत्वं* नास्माभिर्निषिध्यते, किं तु प्रमितिजनकत्वमेव निषिध्यते। तस्मात् न प्रमिताप्रमितविकल्पावकाशः। अतः निर्विशेषादिशब्दाः कतिपयविशेषनिषेधपराः। कृत्स्ननिषेधपरत्वे व्याघातादेव न प्रमितिजनकाः—इत्यर्थः।

एवं निर्विशेषवस्तुनो निष्प्रमाणकत्वमुक्तम्। स्वयंप्रकाशस्य वस्तुनः प्रमाणानपेक्षत्वात् शब्दो भेदनिषेधपर एव—इति शङ्कते अथ स्यात् इत्यादिना। प्रमाणानपेक्षत्वे वेदान्तवैयर्थ्यमित्यत्राह सर्वैश्शब्दैः इति। तदुपरागविशेषाः—तदारोपितविशेषाः—इत्यर्थः। अनवच्छिन्नम्। अवच्छेदकज्ञातृ—ज्ञेयादिनिवृत्त्या अनवच्छिन्नमित्यर्थः। स्वत एव। प्रमाणान्तरनिरपेक्षम्।

* "निर्विशेषादिशब्दानाम्" इति शेषः।

१. गर्भत्वात्—पा०

२. संसर्गबोधित्वात्—पा०

३. प्रकाशवस्तुनि—पा०

४. प्रमाणमुच्यते—पा०

५. "ज्ञातृत्वादयस्सर्वे"—अयं कुत्रचिन्नास्ति।

६. निरस्यन्ते—पा०

७. सर्वेष्वेव—पा०

८. स्वयम्—पा०

९. स्वयमेव तिष्ठतीति—पा०

नैतदेवम्—केन शब्देन तद्वस्तु निर्दिश्य [1] तद्गता विशेषा निरस्यन्ते? "ज्ञप्तिमात्रशब्देन" इति चेत् [2]। सोऽपि सविशेषमेव वस्तु अवलम्बते, प्रकृतिप्रत्ययरूपेण विशेषगर्भितत्वात्तस्य [3]। [1]"ज्ञा—अवबोधने" इति, सकर्मकः, सकर्तृकः, क्रियाविशेषः। [4] क्रियान्तरव्यावर्तकस्वभाव-विशेषश्च प्रकृत्या अवगम्यते; प्रत्ययेन च [5] लिङ्गसङ्ख्यादयः।

परिहरति नैतदित्यादिना। केन शब्देन इति। केनचित् [6] पदेन ब्रह्म निर्दिश्य, तद्विशेषा निरसनीयाः; [7] अनिर्दिश्य विशेषनिरसने ब्रह्मणोऽपि [8] स्वेतरव्यावृत्तत्वेन विशेषत्वात्, विशेषनिषेधे ब्रह्मापि निषिद्धं स्यात्; इति तत्परिहाराय ब्रह्म केनचित्पदेन निर्देष्टव्यमेव। वेदान्तेषु श्रूयमाणानां ब्रह्मवाचि-पदानां निर्वाहार्थं च केनचित्पदेन ब्रह्मणो निर्देश्यत्वमभ्युपगन्तव्यमित्यभिप्रायेण केन शब्देन इत्युक्तम्। ज्ञप्तिमात्र इत्यादि। स्पष्टम्। कथं [9] सविशेषवस्त्वव-लम्बते? इत्यत्राह प्रकृतिप्रत्ययरूपेण [10] इति। तदेव विवृणोति "ज्ञा—अवबोधने" इति। ज्ञप्तिमात्रशब्दस्य प्रस्तुतत्वात् 'ज्ञा-अवबोधने' इति धातुरुक्तः। इदं, ब्रह्मवाचिसर्वपदानां प्रकृतिप्रत्ययविभागस्य प्रदर्शनार्थम्। क्रियाविशेष इति। धात्वर्थत्वात्, धर्म्यन्तरनिष्ठत्वाच्च क्रियाविशेष इत्युक्तम्, न तु स्पन्दात्मकत्वात्। क्रियान्तरव्यावर्तकस्वभावविशेषश्च इति। व्यावर्तकस्वभावः—स्वयंप्रकाशत्वम्। क्रियान्तराणि हि जडरूपाणि। लिङ्गसङ्ख्यादयश्च इति। ज्ञान—ज्ञप्त्यादिशब्दानां लिङ्गस्य शब्दसाधुत्वमात्रार्थत्वेऽपि [11] देव—ईश्वर—पुरुषोत्तमादिशब्दानां लिङ्गस्य अर्थवत्त्वात् लिङ्गसङ्ख्यादयः—इत्युक्तम्।

१. "तद्गता"—इत्येतन्न दृश्यते क्वचित्।
२. चकारो न दृश्यते कुत्रचित्।
३. गर्भत्वादेव—पा०
४. क्रियान्तरव्यावृत्तस्वभाव—पा०
५. चकारो न दृश्यते क्वचित्।
६. शब्देन—पा०
७. अनिर्देश्य—पा०
८. अपिर्नास्ति कुत्रचित्।
९. सविशेषं वस्तु—पा०
१०. प्रकृतिप्रत्यययोगेन—पा०
११. मात्रत्वेऽपि—पा०

1. धा. पा. क्र्यादिपरस्मैपदिषु २५.

स्वतस्सिद्धावपि एतत्स्वभावविशेषविरहे सिद्धिरेव न स्यात्। [1] अन्यसाधनस्वभावतया हि ज्ञप्तेः स्वतस्सिद्धिरुच्यते।

ब्रह्मस्वरूपं कृत्स्नं सर्वदा स्वयमेव प्रकाशते चेत्, न तस्मिन् अन्यधर्माध्यासः संभवति। न हि रज्जुस्वरूपे [2] अवभासमाने [3] सर्पत्वादिः अध्यस्यते। अत एव हि भवद्भिः "आच्छादिकाऽविद्या" अभ्युपगम्यते। ततश्च शास्त्रीयनिवर्तकज्ञानस्य ब्रह्मणि तिरोहितांशो [4] विषयः। अन्यथा

स्वयंप्रकाशत्वसिद्धिरपि सविशेषत्वादेवेत्याह स्वतस्सिद्धावपि इति। एतत्स्वभावविशेषविरहे। [5] सकर्मकत्व—सकर्तृकत्वविरहे। सिद्धिरेव—प्रमाणमेव, न स्यात्—इत्यर्थः। कुत इत्यत्राह अन्यसाधनस्वभावतया इति। ज्ञातुः विषयव्यवहारहेतुतया हि स्वयंप्रकाशत्वं [6] साधितमित्यर्थः। ° स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वं हि स्वयंप्रकाशत्वानुमानहेतुः?

एवं निर्विशेषत्वे स्वयंप्रकाशत्वानुपपत्तिरुक्ता। निर्विशेषत्वे [7] आच्छादिकानिवृत्त्यनुपपत्तिमाह ब्रह्मस्वरूपमित्यादिना। कृत्स्नं—[8] ज्ञातव्याविशेषरहितम्। असंभवः कथमित्यत्राह न हि इति। कृत्स्नावभासे अध्यासायोगात् अनवभासमानांशः स्वीकार्यः इत्यर्थः। अत एव इति। अत एव—अज्ञातांशसम्भवादेव। न ह्याच्छाद्याभावे आच्छादनमुपपद्यते? तस्मात् अज्ञातांशोऽभ्युपगन्तव्य इत्यर्थः। ततश्च इति। न हि पुरोवर्तिमात्रविषयमिदं प्रतिज्ञानं भ्रमनिवर्तकम्; अपि तु अज्ञातशुक्त्यंशविषयज्ञानमेव भ्रमनिवर्तकम्। तस्मात् ब्रह्मणि पूर्वमज्ञाताकारसंभवे [9] एव

* अनन्याधीनस्वधर्मव्यवहारत्वं—स्वयंप्रकाशत्वम्। ° अनुमानप्रकारस्तु—अनुभूतिः, अनन्याधीनस्वधर्मव्यवहारा; स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्।

१. अनन्यसाधन—पा०
२. भासमाने—पा०
३. सर्पादिः—पा०
४. विशेषः—पा०
५. सकर्मकर्तृकत्व—पा०
६. स्वधा साधितम्—पा०
७. आच्छादननिवृत्ति—पा०
८. ज्ञातव्यविशेष, ज्ञातव्यात्मविशेष—पा०
९. अज्ञातांशसम्भवे—पा०

तस्य निवर्तकत्वं [1] च न स्यात्; अधिष्ठानातिरेकिरज्जुत्वप्रकाशनेन [2] हि सर्पत्वं बाध्यते। एकश्चेद्विशेषो ज्ञानमात्रे [3] वस्तुनि शब्देन अभिधीयते; स च ब्रह्मविशेषणं भवति इति, सर्वश्रुतिप्रतिपादित[4] सर्वविशेषणविशिष्टम्[5] ब्रह्म भवति [6]। अतः प्रामाणिकानां न केनापि [7] प्रमाणेन निर्विशेषवस्तुसिद्धिः॥

निर्विकल्पकप्रत्यक्षेऽपि सविशेषमेव वस्तु प्रतीयते। अन्यथा

---

निवर्तकज्ञानस्य निवर्तकत्वमित्यर्थः। तिरोधाननिवृत्तिसिद्ध्यर्थम्—एकविशेषाभ्युपगमं [8] शङ्कते एकश्चेत् इति। स च ब्रह्मविशेषणं भवति इति। उपलक्षणत्वव्यावृत्त्यर्थं विशेषणशब्दः। *ज्ञाप्यत्वसिद्धये, ब्रह्मगताध्यासनिवर्तकत्वसिद्धये च [9] "विशेषणम्" इत्युक्तम्। न ह्यन्यगतधर्मज्ञानेन अन्यविषयभ्रमनिवृत्तिः। पुरोवर्तिगतशुक्तित्वधर्मज्ञानेनैव हि तद्गतरूप्यत्वभ्रमनिवृत्तिः—इत्यभिप्रायः। अत इति। स्पष्टम्॥

अथ निर्विकल्पकप्रत्यक्षस्य निर्विशेषविषयत्वमाशङ्क्य व्युदस्यति—निर्विकल्पकप्रत्यक्षेऽपि इत्यादिना। बौद्धादयः सर्वविशेषशून्यविषयं निर्विकल्पकमाचक्षते। तदयुक्तम्; योग्यानुपलम्भनिरस्तत्वात्। यत्किञ्चिदपि वस्तु [10] कतिपयव्यावृत्तं प्रतीयते; [11] सर्वस्माद्व्यावृत्तं वा प्रतीयते इति, तेन आकारेण सविशेषत्वात् न सर्वविशेषशून्यत्वम्। "जातिगुणद्रव्यादीनामन्योन्यसंबन्धं विना पृथक्पृथगुपलम्भो—निर्विकल्पक-

---

* ज्ञाप्यत्वसिद्धये—ब्रह्मणो ज्ञाप्यत्वसिद्धये।

---

१. चकारः न क्वचित् परिदृश्यते।
२. प्रकाशेन—पा०
३. वस्तु—पा०
४. प्रतिपादितविशेषण—पा०
५. विशेषविशिष्टम्—पा०
६. भवतीति—पा०
७. प्रकारेण—पा०
८. अभ्युपगतिम्—पा०
९. ब्रह्मविशेषणम्—पा०
१०. गगनव्यावृत्तम्—पा०
११. वृक्षाद्व्यावृत्तम्—पा०

सविकल्पके सोऽयमिति [1]पूर्वावगतप्रकारविशिष्टप्रत्ययानुपपत्तेः[2]; वस्तु-संस्थानविशेषरूपत्वात् गोत्वादेः, निर्विकल्पकदशायामपि [3]ससंस्थानमेव प्रत्यक्षम्" इति केचिदाचक्षते । तन्न, योग्यानुपलम्भनिरस्तम् । [4]कल्प्यते चेत्, तत्र को हेतुः? दण्डदेवदत्तादिषु विशेषणविशेष्ययोः पृथगुपलम्भपूर्वक—सहोपलम्भ-दर्शनात् इति चेत्; [5]तत् किं सम्बन्धवेलायाम्, उत असम्बन्धवेलायाम्? असम्बन्धवेलायाम् पृथग्ग्रहणं असम्बन्धप्रयुक्तम्; न विशेषणविशेष्यभावप्रयुक्तम् । सम्बन्धवेलायां तु विशेषणविशेष्यभावेनैव ग्रहणम् । तस्मात् नियमेन सम्बन्धिनां [6]जातिव्यक्त्यादीनां असंबन्धप्रयुक्तं पृथग्ग्रहणं नास्ति । नियमेन संबन्धेऽपि गन्धपृथि-व्यादिषु पृथगुपलम्भः इति चेत्[7]; तत्, भिन्नसामग्रीवेद्यत्वात्, न तु, विशेषण-विशेष्यभावात् । तस्मात् जातिव्यक्त्यादेः [8]एकसामग्रीवेद्यत्वे सति सम्बन्धनियमात् न पृथग्ग्रहणमुपपद्यते इति, विशिष्टविषयमेव प्रत्यक्षम् । तस्मात् "प्रथमपिण्डग्रहणं निर्विकल्पकम्; द्वितीयादिपिण्डग्रहणं सविकल्पकम्" इत्यस्यार्थस्य सिद्धवत्करणेन[9] निर्विकल्पकस्य सविशेषविषयतां दर्शयति—**निर्विकल्पक** इत्यादिना । कुतस्सविशेष-विषयत्वमित्यत्राह—**अन्यथा** इति । प्रथमपिण्डग्रहणे अनुवृत्त्यग्रहणात् गोत्वादिग्रहणं नोपपद्यते, इत्यत्राह—**वस्तुसंस्थान** इति । न ह्यनुवृत्तिर्जातिः; अपि तु अनुवृत्तैव जातिः। [1]"अनुवृत्ता जातिः, नानुवृत्तिः" इति हि पञ्चिकाकारः । तस्मात् अनुवृत्त्यग्रहणेऽपि "इदम्, इत्थम्" इति ग्रहणे इत्थमंशो गोत्वादिः गृहीत एव; अनेकव्यक्तिसम्बन्ध-रूपानुवृत्त्यग्रहणम्, अनेकव्यक्तिग्रहणरूपसामग्र्यभावात्; तस्मात् निर्विकल्पकं सविशेष-

१. पूर्वानुभूतविशिष्ट, पूर्वमनुभूत-विशिष्ट—पा०
२. प्रतीत्यनुपपत्तेः—पा०
३. "स"—एतन्नास्ति क्वचित् ।
४. कल्प्यं चेत्—पा०
५. "तत्"—क्वचिदेतन्नास्ति ।
६. जातिगुणादीनाम्—पा०
७. चेन्न—पा०
८. व्यक्त्यादौ—पा०
९. सिद्धवत्कारेण—पा०

1. पञ्चिका.

वस्तु "इत्थम्" इति[1] प्रतीयते। द्वितीयादिप्रत्ययेषु[2] तस्यैव संस्थानविशेषस्य अनेकवस्तुनिष्ठतामात्रं प्रतीयते। संस्थानरूपप्रकाराख्यस्य पदार्थस्य अनेकवस्तुनिष्ठतया अनेकवस्तु[3]विशेषणत्वं द्वितीयादिप्रत्यया[4]-वगम्यमिति[5] द्वितीयादिप्रत्ययाः[6] सविकल्पका इत्युच्यन्ते।

अत एव एकस्य पदार्थस्य भिन्नाभिन्नरूपेण[7] विरुद्धं[8] द्व्यात्मकत्वम्

---

विषयमित्यर्थः। निर्विकल्पकेऽपि गोत्वादिः गृह्यते चेत्, निर्विकल्पक—सविकल्पकयोः को विशेषः? कतिपयविशेषग्रहणं कतिपयविशेषाग्रहणं[9] च उभयत्र तुल्यमित्यत्राह—द्वितीयादिप्रत्ययेषु इति। अनेकवस्तुनिष्ठता नाम—तत्तद्वस्तुसंस्थानसादृश्यम्। प्रथमपिण्डग्रहणस्य,[10] द्वितीयादिपिण्डग्रहणस्य च निर्विकल्पक—सविकल्पकशब्दौ कथं वाचकौ? इत्यत्राह—संस्थानरूप इति। संस्कारप्रमोषवता पुरुषेण द्वितीयादिग्रहणेऽपि नानुवृत्तिग्रहणम्, इति चेन्न; द्वितीयादित्वेन ग्रहणं हि द्वितीयादिग्रहणम् विवक्षितम्। तस्मात् न दोषः। संस्कारसचिवत्व—तद्रहितत्वसामग्रीभेदेन, अनुवृत्तिधर्मविशिष्टत्व—तद्रहितत्वग्राह्यभेदेन च सविकल्पक–निर्विकल्पकयोः वैषम्यम्—इत्यभिप्रायः॥

प्रसंगात् भेदाभेदं[11] व्युदस्यति अत एव इत्यादिना। एकस्य द्व्यात्मकत्वं चेत् न विरुद्धम्; अपि तु भिन्नाभिन्नरूपेण द्व्यात्मकत्वं विरुद्धमित्यर्थः।

---

१. "इति"—अयं न दृश्यते कुत्रचित्।
२. प्रत्यक्षेषु—पा०
३. "वस्तु"—एतन्नास्ति कुत्रचित्।
४. प्रत्यक्षावगम्यम्—पा०
५. प्रत्यक्षावगतमिति—पा०
६. प्रत्यक्षाः—पा०
७. रूपत्वात्—पा०
८. "विरुद्धम्"—क्वचिदेतन्न दृश्यते।
९. कतिपयाग्रहणम्—पा०
१०. द्वितीयादिग्रहणस्य—पा०
११. भेदाभेदमपि—पा०

प्रत्युक्तम् । संस्थानस्य संस्थानिनः प्रकारतया पदार्थान्तरत्वम्[1], प्रकारत्वादेव पृथक्सिद्ध्यनर्हत्वम्, पृथगनुपलम्भश्चेति न भेदाभेदसिद्धिः ॥

अत एव इत्यत्र गर्भितमर्थं विवृणोति संस्थानस्य इति ।

भेदाभेदे चत्वारो हेतवः—(१) सहोपलम्भनियमः, (२) * सामानाधिकरण्यप्रत्ययः, (३) एकशब्दानुविद्धप्रत्ययः, (४) प्रथमपिण्डग्रहणे भेदाग्रहणाद्भेदाप्रतिपत्तिश्च—इति । एते परिह्रियन्ते—संस्थानस्य इत्यादिना । प्रकारत्वादेव । नियतप्रकारत्वादित्यर्थः । (१) अपृथक्सिद्धधर्मत्वात् पृथक्प्रतिपत्त्यनर्हत्व[2]मिति यावत् । तत्कृतः पृथगनुपलम्भः । सहोपलम्भनियमस्तावत् संप्रतिपन्नैक्येषु भिन्नेषु च न दृष्टः । तत्र सहभावो भेदसाधकः । द्वयोरेव हि सहभावः ? नियमांशस्तु नोभयत्र । किञ्च [3]भेदसाधकः सहभावनियमः भेदनियमसाधकः । एकसामग्रीवेद्यत्वे सति पृथक्स्थितेः, अपृथक्स्थितत्वे सति भिन्नसामग्रीवेद्यत्वाद्वा सहोपलम्भनियमाभावः । अत्र तु अपृथक्स्थितत्वे[4] सति एकसामग्रीवेद्यत्वात् सहोपलम्भनियमः । न तु अभेदात् । (२) मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमपि अपृथक्सिद्धप्रकारत्वादेव उपपद्यते । (३) एकशब्दानुविद्धप्रत्ययोऽपि धर्म्यैक्यात्, न तु धर्मधर्मिणोरैक्यात्—इति हेतुत्रयपरिहारः "प्रकारत्वादेव" इत्यादिना अभिप्रेतः । (४) प्रथमपिण्डग्रहणे भेदाग्रहः "संस्थानस्य" इत्यादिना परिहृतः ।

कथम् ? उच्यते । व्यावृत्त्यनुवृत्त्यग्रहेण[5] हि भेदाग्रहः उच्यते ? न केवलं व्यावृत्त्यनुवृत्ती एव भेदकधर्मौ ; विशेषणविशेष्यभावोऽपि भेदकः । प्रथमपिण्डग्रहणेऽपि "इदम्, [6]इत्थम्" इति विशेषणविशेष्यभावेनैव ग्रहणात् भेदो गृहीत एव इति । एवं प्रसंगात् भेदाभेदनिरासः कृतः ॥

---

* मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययः ।

---

१. पदार्थत्वम्—पा०

२. अनर्हं इति—पा०

३. भेदसाधकसहभावस्य नियमः—पा०

४. सिद्धत्वे—पा०

५. ग्रहणे—पा०

६. इत्थमवस्थितम्—पा०

अपि च निर्विशेषवस्तुवादिना स्वयंप्रकाशे वस्तुनि तदुपरागविशेषाः [1]सर्वैश्शब्दैः[2] निषिध्यन्ते इति वदता, के ते शब्दा निषेधका—इति वक्तव्यम् ;

[1]"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"इति, विकार-नामधेययोः वाचारम्भणमात्रत्वात्, यत्तत्र [3]कारणतया उपलक्ष्यते वस्तु-मात्रम् तदेव सत्यम्, अन्यदसत्यमिति इयं श्रुतिर्वदति" इति चेत्, नैत-दुपपद्यते। एकस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रतिज्ञाते अन्यज्ञानेन [4]अन्यज्ञानासंभवं मन्वानस्य एकमेव वस्तु विकाराद्यवस्थाविशेषेण पारमार्थि-

---

[5]पूर्वप्रस्तुतं हि वेदान्तवाक्यानां भेदनिरासपरत्वम्? तत्र वेदान्तवाक्यानां भेदनिरासपरत्वेऽपि (१) केनचिच्छब्देन ब्रह्मणो निर्देश्यत्वात्, (२) स्वयंप्रकाशत्वात्, (३) तिरोधानात्, (४) अध्यास—तन्निवृत्तिभ्यां च सविशेषत्वम् उक्तम्। अत्र वेदान्तवाक्यानां भेदनिरासपरत्वमेव अनुपपन्नमित्युच्यते अपि च इत्यादिना। तदुपरागविशेषाः—तदारोपितविशेषाः। के ते शब्दाः निषेधकाः इति चोद्ये, उत्तरम् वक्तव्यम्; तत्तु अशक्यमेवेत्यर्थः।

पूर्वं या निर्विशेषपरत्वनिरासाय सद्विद्या व्याख्याता, इदानीं तस्याः भेदनिरास-परत्वमाशङ्क्य निराक्रियते वाचा इत्यादिना। वाचारम्भणमात्रत्वात्—वागालम्बनमात्र-त्वात्, व्यावहारिकत्वात्, अपारमार्थिकत्वादित्यर्थः। यत्तत्र कारणतयोपलक्ष्यते वस्तु-मात्रम् इति। "कार्येषु अनुवर्तमानं कारणं सन्मात्रं यद्वस्तु तदेव"इत्यर्थः। शङ्कितमर्थं दूषयति नैतदित्यादिना। वाचारम्भणमित्यादिवाक्यस्यार्थः पूर्वापरसंगतो वाच्यः; तच्च त्वन्मते नोपपद्यते इति वक्तुं पूर्वोक्तां शङ्काम् अनुवदति एकस्मिन्नित्यादिना। विकारा-द्यवस्थाविशेषेण इति। विकारः—कार्यावस्था। आदिशब्देन कारणावस्था विवक्षिता।

---

१. सर्वे—पा०
२. शब्दैस्सर्वैः—पा०
३. कारणतयैव उपलक्ष्यते—पा०
४. अन्यज्ञानस्य असंभवम्—पा०
५ पूर्वं प्रस्तुतम्—पा०

1. छा. उ. ६-१-४.

केनैव नानारूपमवस्थितं चेत्, तत्र एकस्मिन् विज्ञाते तस्माद् विलक्षणसंस्था-नान्तरमपि[1] तदेव [2]वस्तु इति तत्र दृष्टान्तोऽयं निदर्शितः। नात्र कस्यचित् विशेषस्य निषेधकः कोऽपि शब्दो दृश्यते। [3]वाचारम्भणमिति। वाचा—व्यवहारेण, आरभ्यते इति आरम्भणम्। पिण्डरूपसंस्थितायाः[4] मृत्तिकायाः नाम च अन्यत्, व्यवहारश्च अन्यः; घटशरावादिरूपेण अवस्थितायाः तस्या एव मृत्तिकाया अन्यानि नामानि[5], [6]व्यवहाराश्च अन्यादृशाः; तथाऽपि [7]सर्वत्र मृत्तिकाद्रव्यमेकमेव। नानासंस्थाननानानामधेयाभ्यां नानाव्यवहारेण [8]च आरभ्यत इति एतदेव सत्यम्—इत्यनेन, अन्यज्ञानेन अन्यज्ञानसम्भवो निदर्शितः। नात्र किञ्चिद्वस्तु निषिध्यत इति पूर्वमेव अयमर्थः प्रपञ्चितः। ०

नानारूपम्—नानावस्थम्। वाचारम्भणमिति पदस्यास्पष्टार्थत्वात् तद्व्याचष्टे वाचा इति। कर्मणि ल्युट् इत्यर्थः। व्यवहारेण इति। प्रयोजनतया हेतुत्वमित्यर्थः। नामभेदात्, कार्यभेदाच्च वैशेषिकोक्तं द्रव्यान्तरत्वमाशङ्क्य, तच्च परिहरन्, वाक्यार्थं योजयति पिण्डरूप इत्यादिना। पूर्वं हि फलितार्थ उक्तः। अत्रान्वयार्थ उच्यते नाना-संस्थान—नानानामधेयाभ्यामिति। अन्वितामित्यर्थः। इत्थम्भावे तृतीया; कर्तरि वा। तदा "ताभ्याम् आरभ्यते—आलभ्यते—संबध्यते"[9] इत्यर्थः। रलयोरविशेषः प्रसिद्धः। [1] "आलम्भस्स्पर्शहिंसयोः" इति नैघण्टुकाः। * व्यवहारेण च इति पाठे, "नानासंस्थान—नानानामधेयव्यवहारैरित्थंभूतम्" इति वा, "तैस्संबध्यते" इति वा अर्थः॥

० ४६ पुटे—"तत्र एकेन ......मृदात्मनैव सत्यत्वम्॥" इत्यत्र।

* व्यवहारेण च इति पाठे = नानासंस्थान—नामधेयव्यवहारैरिति पाठे॥

१. संस्थानान्तरविशिष्टमपि—पा०
२. 'वस्तु' शब्दः क्वचिन्न दृश्यते।
३. "वाचारम्भणमिति"—कुत्रचिदयं नोपलक्ष्यते।
४. पिण्डरूपेण अवस्थितायाः—पा०
५. नामधेयानि—पा०
६. अन्ये एव व्यवहाराः—पा०
७. सर्वं मृत्तिकाद्रव्यमेव, सर्वमृत्तिकाद्रव्यमेकमेव—पा०
८. चकारः क्वचिन्न लक्ष्यते।
९. इति वा अर्थः—पा०

1. वैजयन्ती नि. त्र्यक्षरकां. पुं. अ. १० श्लो.

दृष्टान्तेन दर्शयित्वा, श्वेतकेतो[1]रप्रज्ञातम्, [2]सर्वस्य ब्रह्मकारणत्वं वक्तुम् "सदेव सोम्येदम्[3]" इत्यारभ्य। 'इदमग्रे सदेवासीत्' इति। अग्र इति कालविशेषः। इदंशब्दवाच्यस्य प्रपञ्चस्य सदापत्तिरूपां क्रियां, सद्द्रव्यतां च वदति। "एकमेव" इति च अस्य [4]नानानामरूपविकार-प्रहाणम्। एतस्मिन् प्रतिपादिते अस्य जगतः सदुपादानता प्रतिपादिता भवति। अन्यत्र उपादानकारणस्य स्वव्यतिरिक्ताधिष्ठात्रपेक्षादर्शनेऽपि,

---

वाक्ये तत्तत्पदोपस्थापितानेकविशेषान् दर्शयितुम्, विशेषोपस्थापकपदानि उपादत्ते "इदम्—अग्रे—सदेव—आसीत्" इति। नायमन्वयक्रमः। "सदेव—इदम्—अग्रे—एकमेव—आसीत्" इति ह्यन्वयः। तस्मात् फलितान् विशेषान् वक्तुं तदुपस्थापक-पदानि उपात्तानि। उपस्थापितविशेषानाह अग्र इति इति। सद्—आपत्तिरूपाम्—क्रियाम्। अनेन आसीत् इति पदस्यार्थ उक्तः। सच्छब्दार्थमाह सद्द्रव्यतां च इति। सदेव चेत् तदानीं को विशेषः? इत्यत्राह एकमेव इति। एतस्मिन् प्रतिपादिते। विभक्तनामरूपत्वेन भविष्यतः, अविभक्तनामरूपत्वे प्रतिपादिते। 'भाव्यवस्थाविशेषवतः प्रागवस्थायोग[5] उपादानत्वम्' इति लक्षणात् उपादानत्वं प्रति-पादितं भवति" इत्यर्थः। अद्वितीयपदं व्याचष्टे अन्यत्र इति। सर्वविलक्षणत्वात् इति। विलक्षणधर्मित्वात् विलक्षणधर्मयोग उपपन्नः। यथा जलादिविलक्षणधर्मित्वात् अग्नेरुष्णत्वधर्मयोग इत्यर्थः। ब्रह्मणः चेतनत्वात् प्रथमं निमित्ततां प्रतिपाद्य, पश्चादुपादानान्तरनिषेधः कार्यः; तस्मात् प्रथममेवोपादानत्वप्रतिपादनम्, अनन्तरं निमित्तान्तरनिषेधश्च नोपपद्यते। तस्मात् अस्य वाक्यस्य नायमर्थः इति शङ्कायामाह

---

१. अपि ज्ञातम्, अप्रतिज्ञातम्—पा०

२. "सर्वस्य" इति क्वचिन्न दृश्यते।

३. सोम्येत्यारभ्यम्—पा०

४. नानारूप—पा०

५. योगो ह्युपादानत्वम्—पा०

सर्वविलक्षणत्वादस्य सर्वज्ञस्य ब्रह्मणः[1] सर्वशक्तियोगो न विरुद्ध[2] इति, 'अद्वितीय' पदम् अधिष्ठानान्तरं निवारयति[3]। सर्वशक्तियुक्तत्वादेव ब्रह्मणः, काश्चन श्रुतयः प्रथमम् उपादानकारणत्वं प्रतिपाद्य, निमित्तकारणमपि तदेवेति प्रतिपादयन्ति, यथेयं श्रुतिः ॥

[4]अन्याश्च श्रुतयः ब्रह्मणो निमित्तकारणतामनुज्ञाय, [5]तस्य उपादानतापि कथमिति परिचोद्य, सर्वशक्तियुक्तत्वात् उपादानकारणम्, तदितराशेषोपकरणं च ब्रह्मैव इति परिहरन्ति। [1]"किंस्विद्वनम्? क उ स वृक्ष आसीत्? यतो द्यावापृथिवी निष्टतक्षुः, मनीषिणो मनसा पृच्छत दु तत्,

सर्वशक्तिः इति। [2]"असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मानं स्वयमकुरुत" इति वाक्यं सर्वशक्तियुक्तत्वादेव इत्यादिग्रन्थे हृदि निहितम्। "किंस्विद्वनम्" इत्यादिवाक्यलक्ष्येणाह अन्याश्च इति। निमित्तकारणतामनुज्ञाय इति। "यद्ध्यतिष्ठद्भुवनानि धारयन्" इत्यस्य अर्थोऽभिप्रेतः। अयमर्थः—जगदुपक्रमेण ब्रह्म प्रतिपादयन्त्यः श्रुतयः उपादानत्वपूर्वकं निमित्ततां वदन्ति[6]। ब्रह्मोपक्रमेण तत्प्रतिपादयन्त्यः श्रुतयः ब्रह्मणश्चेतनत्वेन निमित्तत्वपूर्वकमुपादानतां वदन्तीति[7]। "किंस्विद्वनम्?" इत्यादि। वनशब्देन अधिकरणकारकं विवक्षितम्। वृक्षशब्देन उपादानम्[8]। "निष्टतक्षुः" इति। बहुवचने न तात्पर्यम्; [3]"अदितिः पाशान्" इतिवत्। "हे मनीषिणः! किम् यूयम् एवं पृच्छत?" इत्यर्थः।

१. ब्रह्मण एव—पा०

२. विरुध्यते—पा०

३. वारयति—पा०

४. तथा अन्याश्च—पा०

५. अस्यैव—पा०

६. वदन्तीति—पा०

७. वदन्ति—पा०

८. उपादानत्वम्—पा०

1. २ अष्ट. ८ प्र. ७ अनु. ७६.

2. तै. उ. आ. २-७-१.

3. मैत्रायणीसंहिता ४-१४-४

यदध्यतिष्ठद्भुवनानि धारयन्" [1]"ब्रह्म वनं ब्रह्म स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः मनीषिणो मनसा विब्रवीमि वः ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति। सामान्यतो दृष्टेन विरोधमाशङ्क्य ब्रह्मणस्सर्वविलक्षणत्वेन परिहार उक्तः॥

अतः [2]"सदेव सोम्येदमग्र आसीत्" इत्यत्रापि, अग्र इत्याद्यनेक विशेषाः[1] ब्रह्मणः प्रतिपादिताः[2]। भवदभिमतविशेष[3] निषेधवाची कोऽपि शब्दः न दृश्यते[4]। प्रत्युत जगद्ब्रह्मणोः कार्यकारणभावज्ञापनाय[5] "अग्र"

---

यदध्यतिष्ठत् इति। निमित्तत्वस्य संप्रतिपन्नत्वात्तदनुवादः। अधिकरणम्—[6]उपादानम्, [7]तद्व्यतिरिक्तसकलकारक[8]वर्गश्च ब्रह्मैव[9] इत्युत्तरमाह ब्रह्मवनम् इति। अधिकरणकारकं सर्वकारकोपलक्षणार्थम्। चोद्यपरिहाररूपेण ब्रह्मण एव सर्वविधकारणत्वोपपादने किं प्रयोजनम् इत्यत्राह सामान्यतो दृष्टेन इति। तस्मात् सदेव इत्यादिवाक्यस्य अस्मदुक्त[10] एवार्थः—इत्याह अत इति। "निषेधार्थं विशेषाणामनुवादस्स्यात्" इति शङ्कायाम् आदिशब्दोपात्तविशेषान् वदन् परिहरति प्रत्युत इत्यादिना। अप्रज्ञाताः इत्यनेन "निषेधार्थमनुवादः" इत्येतत् परिहृतम्। पूर्वयोजनायामसत्कार्यवादोपन्यासनिरासवाक्यस्य अव्याख्यातत्वात्,

---

१. विशेषणाः—पा०
२. प्रतिपादिता भवन्ति—पा०
३. निषेधवाचकः कोऽपि, निर्विशेषवाचक कोऽपि—पा०
४. विद्यते—पा०
५. कार्यकारणत्वज्ञापनाय—पा०
६. उपादानव्यतिरिक्तसकल—पा०
७. व्यतिरिक्तसकल—पा०
८. कारण—पा०
९. सकलकारणमपि ब्रह्मैव—पा०
१०. एव वाक्यार्थः—पा०

1. २. अट. ८ प्र. ७ अनु. ७७.
2. छा. उ. ६-२-१.

इति कालविशेषप्रकाराः, "आसीत्"[1] इति क्रियाविशेषः, जगदुपादानता[2], जगन्निमित्तता च, निमित्तोपादानयोर्भेदनिरासेन[3] [4]तस्यैव ब्रह्मणः सर्वशक्तियोगश्चेति, अप्रज्ञाताः षड्विधा विशेषा [5]एव प्रतिपादिताः । यतो वास्तवकार्यकारणभावादिज्ञापने प्रवृत्तम्[6], अत एव

---

तदिदानीं व्याचष्टे यत इत्यादिना । आदिशब्दात् अनुप्रवेशादयः । कार्यकारणभावादेः परमार्थस्यैव[7] ज्ञापने प्रवृत्तम् इदं सद्विद्याप्रकरणम्; कार्यकारणभावस्य अपारमार्थ्ये, असत्कार्यवादनिरासो[8]ऽनुपपन्नः । सत्त्वं हि पारमार्थ्यम्? कार्यमपरमार्थभूतं[9] चेत्, तस्य सत्त्वप्रतिपादनं विरुद्धम् । तस्मात् असत्कार्यवादनिरासः सत्यत्वपक्षे एव उपपन्नः इत्यर्थः ॥

"[10]असदेवेदम् इत्यादिकं वाक्यम् माध्यमिकपक्षप्रतिक्षेपपरम्"[11] इति शङ्करेण व्याख्यातम्; तदनुपपन्नम् । असदेवेदमग्र आसीत इति अग्रशब्दाभिधेये कालविशेषे[12] असत्त्वप्रतीतेः; न हि शून्यवादी कालविशेषे शून्यत्वं ब्रवीति । शून्यवादनिरासमात्रेण एकविज्ञानेन सर्वविज्ञानं च[13] प्रतिज्ञातं नोपपादितं भवति; अपि तु वैशेषिकमतनिरासादेव उपपादितं भवति[14] । कार्यस्य[15] कारणस्य चासत्त्वं हि

---

१. इति न—पा०
२. उपादानता च—पा०
३. निरासेन—पा०
४. तस्य ब्रह्मणः—पा०
५. एवकारः क्वचिन्न दृश्यते ।
६. भावापादनेन प्रवृत्तमिदं शास्त्रम्—पा०
७. एवकारः क्वचिन्न दृश्यते ।
८. निरासोऽनुपपन्नः—पा०
९. अपरमार्थं चेत्—पा०
१०. सदेवेदम्, असदेवेत्यादिकम्—पा०
११. "इतिः" न दृश्यते क्वचित् ।
१२. असत्प्रतीतेः—पा०
१३. चकारः कुत्रचिन्न दृश्यते ।
१४. 'भवति'—एतन्नास्ति क्वचित् ।
१५. 'कारणस्य'—अयं कुत्रचिन्नोपलभ्यते ।

[1] "असदेवेदमग्र आसीत्" इत्यारभ्य, असत्कार्यवादनिषेधश्च क्रियते, [2] "कुतस्तु खलु सोम्यैवं स्यात्" इति। "प्रागसतः उत्पत्तिः अहेतुका" इत्यर्थः।

---

माध्यमिकाभिमतम्। इह तु [3] 'कथमसतस्सज्जायेत'—इति [1] कारणासत्वं कार्यसत्त्वं च प्रतीयत इति, न शून्यवादिनिरासपरमिदं वाक्यम्। अतः [2] क्षणिकवादनिरासपरम्—इति भास्करेण व्याख्यातम्। तच्चानुपपन्नम्; कालविशेषे असत्वप्रतीतेः। न हि महाप्रलयसमये क्षणिकत्वमुच्यते क्षणिकवादिभिः। तन्निरासेऽपि वैशेषिकमतनिरासः प्रतिज्ञातार्थस्यापेक्षित एव। तन्निरासे क्षणिकशून्यवादादिनिरासश्च अर्थतः कृतस्स्यात्। "कथमसतस्सज्जायेत?" इत्यादिवाक्यं कारणासत्त्वपरं प्रतीयत इति क्षणिकवादनिरासानुगुणमिति चेन्न। तस्यापि उपक्रमभूत[3] कार्यासत्त्वपरपरमतोपन्यासवाक्यस्वारस्यानुगुणार्थत्वेन वर्णनीयत्वात्तस्य। एवम् उपक्रमानुगुण्यमभिप्रेत्य, "[4] असदेवेदमग्र आसीत्" इत्यारभ्य इत्युक्तम्। एकविज्ञानेन सर्वविज्ञानस्य, अन्तरङ्गतयाऽपेक्षितो वैशेषिकमतनिरासः। एतन्निरासे [5] शून्यवादादिनिरासः अर्थसिद्धः। एवम् [6] उपक्रमवाक्यस्वारस्यानुगुण्यात् प्रतिज्ञातार्थोपपादनस्यान्तरङ्गत्वेनापेक्षितत्वाच्च वैशेषिकमतमेवात्र निरसनीयम्॥

"कुतस्तु" इति [7] व्याख्येयोपादानम्। अस्यार्थमाह "प्रागसतः उत्पत्तिः अहेतुका" इत्यर्थः इति। हेतुशब्दः आश्रये पर्यवस्यति, आश्रयस्यापि हेतुत्वात्। "उत्पत्तिर्नाम सतो द्रव्यस्यावस्थान्तरयोग" इति, वाचारम्भणमित्यादिवाक्येन ह्युपपादितम्? इति। तदुपजीव्य, "कुतस्तु" इत्यादिवाक्येन असत्कार्यवादो निरस्यते। उत्पत्तिर्नाम हि अवस्थाविशेषः। तदाश्रयभूतं द्रव्यं पूर्वमसच्चेत् उत्पत्त्याख्या अवस्था निराश्रया कथं भवति—इत्यर्थः। कुतः—[8] आश्रयरूपाद्धेतोः; एवं स्यात्—उत्पत्त्यवस्था स्यात् इति श्रुत्यक्षरार्थः। उत्तरवाक्यसंगतिमाह तदेव इति।

---

१. कारणसत्वम्—पा०
२. क्षणिकत्ववादि, क्षणिकवादि—पा०
३. कार्यासत्वपरमतोपन्यास—पा०
४. सदेवेदम्—पा०
५. शून्यवादनिरासोप्यर्थसिद्धः—पा०
६. उपन्यासवाक्य—पा०
७. व्याख्यानोपादानम्—पा०
८. निराश्रय—पा०

1,2,3. छा. उ. ६-२-२.

तदेव उपपादयति [1] "कथमसतस्सज्जायेत" इति । "असत उत्पन्नम् असदात्मकमेव भवति" इत्यर्थः । यथा मृद उत्पन्नं घटादिकम् [1] मृदात्मकम् । सत उत्पत्तिर्नाम, व्यवहारविशेषहेतुभूतः अवस्था-विशेषयोगः ।

एतदुक्तं भवति । एकमेव कारणभूतद्रव्यम् अवस्थान्तरयोगेन कार्यमित्युच्यत इति, एकविज्ञानेन सर्वविज्ञानं प्रतिपिपादयिषितम् । तत् असत्कार्यवादे न सेत्स्यति । तथा हि--निमित्तसमवाय्यसमवायिप्रभृतिभिः [2] कारणैः अवयव्याख्यं कार्यं द्रव्यान्तरमेव [3] आरभ्यत इति कारण-

"निराश्रयावस्थास्वीकारे बाधकं दर्शयति" इत्यर्थः । कथमसत इत्यादिवाक्यं व्याचष्टे असत उत्पन्नमिति । असतस्सज्जायेत । असतः कथं सज्जायेतेत्यर्थः । "मृदेव घटो जायते" इत्यर्थे सत्यपि "मृत्तिकायाः घटो [4] जायते" इतिवत् अयं निर्देशः । कार्यकारणयोरनन्यत्वं प्रागुपपादितं मन्वानेन एवं निर्दिष्टम् । इह सच्छब्दः जगदवस्थाविशिष्टपरः । विशेष्यं वस्तु पूर्वम् असच्चेत्, विशेषणभूत-जगत्त्वावस्थाया अप्यसत्त्वात् विशिष्टमप्यसत् स्यात्--इत्यर्थः । सत् चेत्, कथमुत्पत्तिः उपपद्यते इत्यत्राह सत् इति ॥

अत्र वैशेषिकमतनिरासः किमर्थं क्रियते? क्षणिकवादनिरास एवात्र स्यात् इति शङ्कायाम्, हेत्वन्तरमाह एतदुक्तं भवति इति । असत्कार्यवादः कीदृशः? तस्मिन् सति, [5] प्रतिज्ञातार्थासिद्धिः कथम्? इत्यत्राह तथा हि इति । दण्डचक्रादेरपि निमित्तत्वेऽपि निमित्तशब्दस्य अधिष्ठातरि प्रसिद्धिप्राचुर्यात् तद्व्यतिरिक्तकारणं प्रभृति-शब्देनोच्यते । अवयव्याख्यम् इति । अवयवाः बहवः अल्पपरिमाणाः, अवयवि एकं

१. मृदात्मकमेव—पा०
२. कारणैरेव—पा०
३. उत्पाद्यते—पा०
४. जात इतिवत्—पा०
५. प्रतिज्ञातार्थसिद्धिः—पा०

1. छा. उ. ६-२-२

भूताद्वस्तुनः कार्यस्य वस्त्वन्तरत्वात् न तज्ज्ञानेन,[1] अस्य ज्ञातता कथमपि संभवतीति। "कथम् अवगति द्रव्यान्तरं निरस्यते" इति चेत्, कारणगतावस्थान्तरयोगस्य द्रव्यान्तरोत्पत्तिवादिनः[2] संप्रतिपन्नस्यैव

---

बृहत्परिमाणम्[3] इति। अनेन संख्याभेद—परिमाणभेदादिद्रव्यान्तरत्वसाधकहेतवो[4] विवक्षिताः।[5] "अस्य"—कार्यस्य।[6] कथमपि इति। अवस्थातः द्रव्यतश्च ज्ञातता न संभवतीत्यर्थः। द्रव्यभेदहेतवः कथं निरस्यन्त इति चोदयति कथमिति। परिहरति कारण इति। संप्रतिपन्नस्यैव इति।[7] असमवायिकारणत्वेन संप्रतिपन्नस्येत्यर्थः। द्रव्यान्तराभ्युपगतिः किं दर्शनात्? उत[8] कल्पनेन? न तावद्दर्शनम्। कल्पकाः बुद्धिशब्द[9] कार्यान्तरादयः अवस्थाविशेषेण अन्यथासिद्धाः[10]। "आस्ते, शेते, गच्छति, तिष्ठति" "एकोऽयं[11] समाजः" इत्यादिषु बुद्धिशब्दान्तरादेः[12] अवस्थाविशेषहेतुकत्वदर्शनात् घटपटादिषु द्रव्यभेदहेतुकत्वं च दृष्टम्। आस्ते, शेते—इत्यादिषु अवस्थाभेदहेतुकत्वं च[13] दृष्टमित्यत्र किं नियामकम्? इति चेत्, आस्ते, शेते—इत्यादिषु[14] हि द्रव्यप्रत्यभिज्ञया अवस्थाभेदहेतुकत्वं ज्ञायते। एवम् मृद्घटादिष्वपि द्रव्यप्रत्यभिज्ञया अवस्थाभेदहेतुकत्वं बुद्धिशब्दान्तरादेः[15] ज्ञायते इत्यर्थः। "कथं....निरस्यते" इति शङ्कायां द्रव्यान्तरादर्शनाच्च निरस्यते इत्यन्वयः।

---

१. अन्यस्य—पा०
२. संप्रतिपन्नस्य एकत्वनामान्तर, संप्रतिपन्नस्यैव नामान्तर—पा०
३. परिणामम्—पा०
४. साधका हेतवः—पा०
५. अन्यस्य—पा०
६. कथं संभवतीति—पा०
७. समवायि—पा०
८. कल्प्यते—पा०
९. कार्यादयः—पा०
१०. विशेषान्यथासिद्धाः—पा०
११. यः—पा०
१२. अवस्थाभेदहेतुकत्व—पा०
१३. दृष्टम्। अत्र—पा०
१४. "हि"—अयं क्वचिन्न दृश्यते।
१५. शब्दादेः—पा०

एकत्व—नामान्तरव्यवहारादेरुपपादकत्वात्, द्रव्यान्तरादर्शनाच्च; इति, कारणमेव अवस्थान्तरापन्नम्, कार्यमित्युच्यते इत्युक्तम् ॥

ननु निरधिष्ठानभ्रमासम्भवज्ञापनाय असत्कार्यवादनिरासः क्रियते । तथा हि—एकं चिद्रूपं सत्यमेव अविद्याशबलम्[1] जगद्रूपेण[2] विवर्तते इति, अविद्याश्रयत्वाय मूलकारणं सत्यमित्यभ्युपगन्तव्यम्—इति असत्कार्यवादनिरासः । नैतदेवम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तमुखेन सत्कार्यवादस्यैव प्रसक्तत्वात्[3]—इत्युक्तम् * ; भवत्पक्षे निरधिष्ठान-

इति कारणमेव इति । इति—तस्मादित्यर्थः । एवं नात्र क्षणिकमतनिरासः क्रियते, अपि तु वैशेषिकमतनिरासः इत्युक्तम् ॥

अथ माध्यमिकमतनिरासपरत्वम् आशङ्क्य निराक्रियते ननु इत्यादिना । निरधिष्ठान इति । स्पष्टम् । कथं निरधिष्ठानभ्रमासम्भवः ? अधिष्ठानं च किम् ? तस्य[4] पारमार्थ्ये कथं[5] भ्रमसंभवः ? इत्यत्राह तथा हि इति । एकशब्देन सजातीयादिभेदनिषेधः । सत्यमेव इति एवकारेण अधिष्ठानापारमार्थ्यव्यावृत्तिः । अधिष्ठानापारमार्थ्ये, तस्यापि अपरमार्थत्वात्, अधिष्ठानान्तरापेक्षा—इत्यनवस्था स्यात्, तस्मात् "सत्यमधिष्ठानम्" इत्यभिप्रायः । परिहरति नैतद् इत्यादिना । प्रसक्तत्वादसत्कार्यवाद-निरासः क्रियते इत्युक्तम्—इत्यन्वयः । प्रतिज्ञादृष्टान्ताभ्यां सत्कार्यवादस्य प्रस्तुतत्वात्, तदुपयोगित्वेन असत्कार्यवादनिरासः क्रियते, न तु निरधिष्ठानभ्रमासम्भवज्ञापनाय असत्कार्यवादनिरासः क्रियते इत्यर्थः । हेत्वन्तरं[6] चाह भवत्पक्षे इति ।

* २५-२७, ४६, ६६-६९ पुटेषु द्रष्टव्यम् ।

१. शबलितम्, आच्छादितम्—पा०

२. वर्तते—पा०

३. प्रतिपन्नत्वात्—पा०

४. अपारमार्थ्ये—पा०

५. भ्रमासंभवः—पा०

६. "च"—क्वचिन्नास्ति ।

भ्रमासम्भवस्य[1] दुरुपपादत्वाच्च[2]। यस्य हि चेतनगतो दोषः पारमार्थिकः, दोषाश्रयत्वं च पारमार्थिकम्, तस्य पारमार्थिकदोषेण युक्तस्य[3], अपारमार्थिकगन्धर्वनगरादिदर्शनमुपपन्नम्। यस्य तु दोषश्च अपारमार्थिकः, दोषाश्रयत्वं च अपारमार्थिकम्, तस्य अपारमार्थिकेनाप्याश्रयेण तदुपपन्नमिति भवत्पक्षे न निरधिष्ठानभ्रमासम्भवः ॥

तदेवोपपादयति यस्य हि इति। यस्य मते इत्यर्थः। दोषाश्रयत्वं च। दोषसंबन्धश्चेत्यर्थः। तस्य। तस्य मते इत्यर्थः। अधिष्ठानापारमार्थ्ये भ्रमासंभवः, किं दर्शनादुच्यते? उत युक्तिभिस्तथा कल्प्यते? दर्शनाच्चेत्, दोष--दोषाश्रयत्वादेरपि[4] अपारमार्थिकत्वे न क्वचिद्भ्रमो दृष्ट इति, दोषादेरपि पारमार्थ्य[5]मभ्युपगम्यं स्यात्; युक्त्या पारमार्थ्यं कल्प्यते चेत्, तर्हि दोषस्य[6] अपारमार्थ्ये[7] दोषान्तरापेक्षित्वेन अनवस्थाप्रसङ्गात्, [8]तस्यापि पारमार्थ्यं स्यात्; तत्रानवस्थादोषपरिहाराय[9], स्वरूपानादित्वं, प्रवाहानादित्वं, दुर्घटत्वं,[10] [11]स्वपरनिर्वाहकत्वं वा यदुच्यते, तत् अधिष्ठानेऽपि तुल्यमिति न तत्पारमार्थ्यसिद्धिः। अनादित्वेऽपि अनवस्था दुष्परिहरा; अनादेरेव जीवभेदस्य अपरमार्थस्य दोषमूलत्वाभ्युपगमात्। एवम् भवत्पक्षे निरधिष्ठानभ्रमासंभवस्य दुरुपपादत्वात्, [12]तज्ज्ञापनाय असत्कार्यवादनिरासोऽनुपपन्न इत्यर्थः ॥

१. भ्रमस्य--पा०
२. चकारः क्वचिन्न दृश्यते।
३. दोषयुक्तस्य--पा०
४. अपारमार्थ्ये, अपारमार्थिकत्वेऽपि--पा०
५. पारमार्थिकत्वम्--पा०
६. दोषस्यापि--पा०
७. अपारमार्थ्येन--पा०
८. तत्रापि--पा०
९. अनवस्थापरिहाराय--पा०
१०. दुर्घटम्--पा०
११. स्वपरनिर्वाहकत्वम्--पा०
१२. तदुपपादनाय--पा०

शोधकेष्वपि[१] [1]“सत्यं ज्ञानमनन्तं ब्रह्म”, [2]“आनन्दो ब्रह्म”[२] इत्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धानेकगुणविशिष्टैकार्थाभिधानम्[३] अविरुद्धमिति, सर्वगुणविशिष्टं ब्रह्म अभिधीयत इति पूर्वमेवोक्तम्*। [3]“अथात आदेशो नेति नेति” इति बहुधा निषेधो दृश्यत इति चेत्, किमत्र निषिध्यत इति वक्तव्यम्। [4]“द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च[४]” इति मूर्तामूर्तात्मकः प्रपञ्चस्सर्वोऽपि[५] निषिध्यत इति चेत्, ब्रह्मणो रूपतया अप्रज्ञातं सर्वं रूपतया उपदिश्य पुनस्तदेव निषेद्धुमयुक्तम्। [5]“प्रक्षालनाद्धि-

[१] यानि श्रुतिवाक्यानि निर्विशेषपरत्वेन परैरुक्तानि, तेषां सर्वेषां भेदनिषेधपरत्वमपि निरसनीयम्। अतः सद्विद्यानन्तरं शोधकवाक्यानां भेदनिषेधपरत्वं व्युदस्यते[६] शोधकेष्वपि इत्यादिना। स्पष्टम्। सद्विद्यादिषु भेदनिषेधपरत्वम् आक्षेप्यमिति, निषेधकण्ठोक्तिमत् वाक्यं “अथात आदेश”[७] इत्यादिकम्, भेदनिषेधपरं[८] शङ्कते अथात इत्यादिना। किमत्र इति। किंशब्दः क्षेपार्थः। प्रमाणान्तरागोचरस्य विहितस्य निषेधायोगात् न किञ्चिदपि निषेद्धुं शक्यम्—इति भावः। निषेध्यं शङ्कते द्वे वाव इति। पूर्वाभिप्रेतमर्थं वदन् परिहरति ब्रह्मण इति। ब्रह्मणो रूपवत्त्वेना-प्रज्ञातत्वात्, निषेधार्थमनुवादः इति वक्तुं न शक्यते। तस्मात्[९] विधीयत एवेति, विहितस्य निषेधो नोपपद्यते। तथा सति वेदस्य विप्रलम्भकत्वेन निषेधवाक्यमपि अप्रमाणं भवेदित्यर्थः। एतदनुगुणन्यायप्रतिपादकं पुराणवचनमाह प्रक्षालनाद्धि इति। यथा पङ्कोपलेप—तत्क्षालनादपि तदस्पर्शो वरम्, तथा[१०] अपूर्वश्रमान्तरा-

* ४९-५४ पत्रेषु द्रष्टव्यम्।

१. एतच्छोदकेष्वपि, शोधकवाक्येष्वपि-पा०
२. इदं वाक्यम् क्वचिन्न दृश्यते।
३. एकार्थावबोधनम्—पा०
४. मूर्तं चैवामूर्तं च—पा०
५. अपिर्नास्ति क्वचित्।
६. व्युदस्यति—पा०
७. इत्यादिभेद—पा०
८. परत्वम्—पा०
९. विहित एव—पा०
१०. पूर्वं श्रमान्तर—पा०

1. तै. उ. आ. २-११.
2. तै. उ. भृ. ६.
3. बृ. उ. ४-३-६.
4. बृ. उ. ४ ३-१.
5. पञ्चतन्त्रे २-१५-७.

पङ्कस्य दूरादस्पर्शनं वरम्[1] " इति न्यायात्। कस्तर्हि निषेधकवाक्यार्थः[2] ? सूत्रकारः स्वयमेव वदति-[1] " प्रकृतैतावत्त्वं हि प्रतिषेधति, ततो ब्रवीति च भूयः " इति । उत्तरत्र[2] " अथ नामधेयम्, सत्यस्य सत्यमिति प्राणा वै सत्यम्, तेषामेष सत्यम् " इत्यादिना।[3] गुणगणस्य प्रतिपादितत्वात् " पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति,[4] ब्रह्मण[5] एतावन्मात्रता प्रति-

रोपण—तन्निषेधादपि मौनमेव वरम्[6] । न हि पङ्कोपलेप—तत्क्षालनाऽऽयासस्य प्रयोजनं विद्यते । एवम् अपूर्वभ्रमारोपण—तन्निषेधाऽऽयासस्य अप्रयोजनत्वात्, शास्त्रस्य प्रयोजन पर्यवसायित्वं न स्यादिति, बुभुत्सितब्राह्मं शास्त्रम् अनारम्भणीयं स्यात् इति भावः । एवं स्वोक्तार्थे निरस्ते राद्धान्तिनं पृच्छति क इति ।[7] निषेधकवाक्यार्थः ।[8] निषेध-वाक्यस्य अर्थः । आह सिद्धान्ती सूत्रकार इति । उदाहृतं[9] सूत्रं व्याचष्टे उत्तरत्र इत्यादिना।[10] उत्तरत्रशब्देन सौत्रं 'ततः' इति पदं व्याख्यातम्। भूयः—बहुतरमित्यर्थः। तदभिप्रेत्योक्तम् गुणगणस्य इति । स्वरूपान्यथाभावरूप[11] विकारास्पदाचिद्व्यावृत्त्या सत्यशब्दवाच्यो जीवः । तस्य धर्मान्यथाभावरूप[12] विकारोऽस्ति । स्वरूपतो धर्मतश्चाविकारः परमात्मेति, तदुभयव्यावृत्त्या परमात्मा[3] " सत्यस्य सत्यम् " इत्युच्यते इत्यर्थः। एतावन्मात्रं न भवति ब्रह्मेति[13] इति। गुणविशिष्टं ब्रह्म एतावन्न भवति ; एतावद्गुणकं ब्रह्म न भवतीत्यर्थः। नेह नानास्ति—इत्यादिषु इयत्तानिषेधपरत्वं दुर्वचम्

१. क्षमम्—पा०
२. वाक्यस्य अर्थः—पा०
३. इत्यादि—पा०
४. ब्रह्मैतावन्मात्रता—पा०
५. तावन्मात्रता—पा०
६. अपूर्वभ्रमान्तरारोपेण तन्निषेधादवेदनमेव वरम्—पा०
७. 'निषेधकवाक्यार्थः' इति क्वचिन्न दृश्यते ।
८. निषेधवाक्यस्य अर्थः—इति क्वचिन्नास्ति ।
९. " सूत्रम् "—क्वचिदेतन्न दृश्यते ।
१०. उत्तरशब्देन—पा०
११. रूपशब्दः क्वचिन्नास्ति ।
१२. रूपशब्दः क्वचिन्न दृश्यते ।
१३. इतिर्नास्ति क्वचित् ।

1. ब्र. सू. ३-२-२२.
2,3. बृ. उ. ४-३-६.

षिध्यते" इति सूत्रस्यार्थः[१]। [1]"नेह नानास्ति किञ्चन" इत्यादिना नानात्वप्रतिषेध एव[२] दृश्यत इति चेत्; अत्रापि उत्तरत्र [2]"सर्वस्य वशी सर्वस्येशानः" इति, सत्यसङ्कल्पत्वसर्वेश्वरत्वप्रतिपादनात्, चेतनाचेतन[३]वस्तुशरीरः ईश्वर इति सर्वप्रकारसंस्थितः सर्वेश्वरः स[४] एक एवेति,

---

इति [५]कृत्स्नभेदनिषेधपरत्वं शङ्कते नेह इत्यादिना। परिहरति [६]अत्रापि इति। वशित्वम्—गुणेन वशीकारः। ईशानः—नियन्ता। वशित्वादीनां सत्यसङ्कल्पत्वविशेषरूपत्वात् सत्यसङ्कल्पत्वम् अत्रोक्तम्। [3]"सर्वस्याधिपतिः" इति वाक्योक्तं स्वामित्वं [७]सर्वेश्वरत्वशब्देनोच्यते। अस्य—प्रदर्शनार्थत्वात् प्रकरणोक्तस्य[८]। [4]"सर्वमिदं प्रशास्ति" इत्युक्तं नियमनम् [5]"एष सेतुर्विधरणः" इत्युक्तं धारकत्वं च उक्तं भवति[९]। एवं पतित्व—नियन्तृत्व—धारकत्वैः ईश्वरस्य, तं प्रति शेष-नियाम्य—धार्यभूतस्य जगतः शरीरत्वात्, चेतनाचेतनवस्तुशरीर इत्युक्तम्। सर्वप्रकारसंस्थितः—सर्वप्रकारविशिष्टः। एवं प्रकार्यैकत्वस्य[१०] विहितत्वात्, निषेधस्य [११]विहितव्यतिरिक्तविषयकत्वाच्च, [१२]प्रकारिनानात्वनिषेधपर[१३]मिदं वाक्यम्—इत्यर्थः।

---

१. सूत्रार्थः—पा०
२. एवकारः क्वचिन्न परिदृश्यते।
३. सर्ववस्तु—पा०
४. स एवेति—पा०
५. कृत्स्ननिषेध—पा०
६. तत्रापीति—पा०
७. सर्वेश्वरशब्देन—पा०
८. प्रकरणोक्तम्—पा०
९. भवतिः क्वचिन्न दृश्यते।
१०. प्रकार्यैकस्य—पा०
११. विहितस्य व्यतिरिक्तत्वात्—पा०
१२. प्रकारनानात्व—पा०
१३. नानात्वपरम्—पा०

1. बृ. उ. ६-४-१९.
2, 3, 4, 5. बृ. उ. ६-४-२२.

[1] तत्प्रत्यनीकाऽब्रह्मात्मकनानात्वं प्रतिषिद्धम्—न भवदभिमतम्। सर्वासु एवंप्रकारासु श्रुतिषु इयमेव [2] स्थितिः—इति, न क्वचिदपि ब्रह्मणः सविशेषत्वनिषेधवाची [3] कोऽपि शब्दो दृश्यते ॥

अपि च "निर्विशेषज्ञानमात्रं ब्रह्म, तच्च आच्छादिकाऽविद्यातिरोहितस्वस्वरूपं [4] स्वगतनानात्वं पश्यति" इत्ययमर्थो न घटते। तिरोधानं नाम प्रकाशनिवारणम्। स्वरूपातिरेकिप्रकाशधर्मानभ्युपगमेन, प्रकाशस्यैव

---

न भवदभिमतम् इति। सजातीयविजातीयस्वगतरूपकृत्स्ननानात्वम् [5] न प्रतिषिध्यत इत्यर्थः। उक्तन्यायकलापेन सर्वाश्श्रुतयो निर्वाह्या इत्याह सर्वासु इति। निषेधवाची [6] कोऽपि शब्दो दृश्यते इति। के ते शब्दा इति हि प्रक्रान्तम्; अतस्तदेवोपसंहृतम्। एवं ब्रह्माज्ञानपक्षस्य श्रुत्यपेतत्वं दर्शितम् ॥

अथ न्यायापेतत्वं दर्शयति अपि च इत्यादिना। श्रुतिन्यायापेतम्—इति हि पूर्वमुक्तम् *। अपि चेति। न केवलं श्रुत्यपेतत्वमेव, अपि तु न्यायापेतत्वं चेत्यर्थः। तिरोहितस्वरूपस्य हि भेददर्शनम्। तत्र तिरोधानदूषणेनैव [7] परमतम् [8] समूलमुन्मूलितं भवतीति, [9] तिरोधिं दूषयितुं [10] तन्मतमुपन्यस्य, तदनुपपत्तिं प्रतिजानीते निर्विशेष इत्यादिना। कथमित्यत्राह तिरोधानं नाम इति। प्रकाशनिवृत्तिः

---

* द्वितीयमङ्गलश्लोके।

१. तत्प्रत्यनीकम् अब्रह्मात्मक—पा०

२. रीतिः—पा०

३. निषेधकः—पा०

४ स्वरूपम्—पा०

५. कृत्स्नान्यत्वम्—पा०

६. निषेधकः—पा०

७. एवकारः न दृश्यते क्वचित्।

८. समूलकम्—पा०

९. विरोधिनम्—पा०

१०. दुदूषयिषुः—पा०

स्वरूपत्वात् स्वरूपनाश एव स्यात् । "प्रकाशपर्यायं ज्ञानं नित्यम् । स च प्रकाशः अविद्यातिरोहितः[1]" इति बालिशभाषितमिदम्[2] । अविद्यया प्रकाशस्तिरोहित इति—प्रकाशोत्पत्तिप्रतिबन्धो वा, विद्यमानस्य विनाशो वा[3] ? प्रकाशस्यानुत्पाद्यत्वात् स्वरूपनाश[4] एव स्यात् ।

---

तिरोधानमस्तु ततः किम् ? इत्यत्राह स्वरूप इति । "नित्यं विभुम्" इत्यादिश्रुतयो नित्यत्वं वदन्ति । [1] "अनृतेन हि प्रत्यूढाः" [5] इत्यादयस्तिरोधानं वदन्ति । एवं नित्यत्व—तिरोधानयोरुभयोरपि श्रुतिप्रतिपन्नत्वान्नानित्यत्वम् इति शङ्कायाम् "श्रुति-रप्ययोग्यार्थं वक्तुं नालम्" इत्यभिप्रायेणाह प्रकाशपर्यायम् इति । बाधन्तैरिव ज्ञानस्य जडत्वमङ्गीकृतं चेत्, प्रकाशस्य तद्व्यतिरिक्तत्वात् तन्निवृत्तिः स्वरूपनाशो न स्यात् । न च तथाऽभ्युपगतम् । ब्रह्म ज्ञानस्वरूपम्; ज्ञानं च स्वयंप्रकाशम् [6] इत्येवाभ्युपगतम् [7] इत्यभिप्रायेण "प्रकाशपर्यायम्" इत्युक्तम् । तिरोधानं प्रकाश-निवृत्तिः । तस्मात् स्वयंप्रकाशरूपं [8] ज्ञानं नित्यम् । तच्च अविद्यातिरोहितमिति व्याहतम् इति, इममर्थं श्रुतिः न प्रतिपादयतीत्यर्थः । एवं स्वयंप्रकाशत्वश्रुतिं, तिरोधानश्रुतिं, उभयं श्रद्दधानेन त्वया व्याहतार्थ उक्तस्स्यात् इत्युक्तम् । उक्तार्थं च विवृण्वन्, अन्यतरपरिग्रहे अन्यतरत् त्याज्यमित्याह अविद्यया इति । अविद्यया प्रकाशस्तिरोहित इति । अस्यार्थः—प्रकाशस्य प्रागभावः, प्रध्वंसाभावो वा [9] इत्यर्थः । तत्र अनुत्पाद्यस्य प्रकाशस्य प्रध्वंसाभाव एव तिरोधिस्स्यात् इत्याह प्रकाशस्य इति । एवं "तिरोधानश्रुतिं श्रद्दधानेन त्वया [10] स्वयं प्रकाशत्वश्रुतिः

---

१. निवारितः—पा॰
२. "इदम्"—क्वचिदेतन्न दृश्यते ।
३. 'वा' इति क्वचिन्नास्ति ।
४. विनाशः—पा॰
५. इत्यादिश्रुतयः—पा॰
६. इत्यभ्युपगम—पा॰
७. अभ्युपगम्य—पा॰
८. रूपज्ञानम्—पा॰
९. 'इत्यर्थः'—एतन्नास्ति क्वचित् ।
१०. 'त्वया' इति क्वचिन्न दृश्यते ।

1. छा. उ. ८-३-२.

"आकाशः नित्यो निर्विकारस्तिष्ठति" इति चेत्, सत्यामप्यविद्यायां ब्रह्मणि न किञ्चित्तिरोहितम्[1] इति. "[2]नानात्वं पश्यति" इति भवतामयं व्यवहारः सत्सु अनिर्वचनीय एव ॥

ननु च भवतोऽपि विज्ञानस्वरूप[3] आत्मा अभ्युपगन्तव्यः, स च स्वयं प्रकाशः। तस्य[4] देहादिरूपाध्यासवादे स्वरूपप्रकाशतिरोधानम्[5] अवश्या-श्रयणीयम्। स्वरूपप्रकाशे सति स्वात्मनि[6] आकारान्तराध्यासायोगात्।

---

त्याज्या स्यात्, स्वप्रकाशभङ्गात्" इत्युक्तम्। अथ स्वप्रकाशत्वाभ्युपगमे, तिरोधानश्रुतिः त्याज्या स्यात् इत्याह प्रकाशो नित्य इति। सत्स्वनिर्वचनीय एव इति। व्याहतत्वादयमर्थः विद्वत्सन्निधौ वक्तुमयोग्यः—इत्युपालम्भः ॥

उक्तदोषोऽस्मत्पक्षेऽपि प्रसजतीति चोदयति ननु च इत्यादिना। भवतोऽपि इति। [1]"सत्यं ज्ञानमनन्तं ब्रह्म" [2]"विज्ञानघन एव" [3]"प्रज्ञानघन एव" इत्यादिभिः, ज्ञानस्वरूपत्वं[7] त्वयाऽभ्युपगन्तव्यम्। स च इति। [4]"अत्रायं पुरुषस्स्वयञ्ज्योतिर्भवति" [5]"आत्मा ज्योतिस्सम्राडिति होवाच" इत्यादिभिः स्वयम्प्रकाशत्वमभ्युपेत्यम्[8]। तस्य इति। [6]"तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता"[9] इत्यादिभिः,[10] तिरोधानमभ्युपेत्यम्, देवत्वाद्यध्याससिद्ध्यर्थ-

---

१. तिरोहितं ब्रह्म स्वगतनानात्वम्—पा०
२. स एव नानात्वम्—पा०
३. स्वरूप एव अयमात्मा—पा०
४. तस्य च—पा०
५. अवश्यम् आश्रयणीयम्—पा०
६. आकाराध्यासायोगात्—पा०
७. स्वरूपत्वं च—पा०
८. अभ्युपेतम्—पा०
९. इत्येवमादिभिः—पा०
१०. तिरोधानमप्यभ्युपेत्यम्—पा०

1. तै. उ. आ. २-१-१.
2. बृ. उ. २-४-१२.
3. नृसिंहो. ता. उ. ८-५ ; रामो. ता. उ. २-२.
4. बृ. उ. ६-३-९.
5.
6. वि. पु. ६-२-६३.

अत्रोच्यते—स्वभावतः [1]मलप्रत्यनीकानन्त[2]ज्ञानानन्दैकस्वरूपम्, स्वाभाविक – अनवधिकातिशय – अपरिमित – उदार गुण सागरम्,

परिहरति अत्रोच्यत इत्यादिना। प्रतिबन्दीं वदता पूर्वपक्षिणा अयमर्थः अभिप्रेतः—"न हि वचनविरोधे न्यायः प्रवर्तते" इति न्यायात् जीवस्वरूपनित्यत्वे, तस्य च तिरोधाने शास्त्रसिद्धे सति, तद्विरुद्धस्तर्को न प्रवर्तते इति परिहारं वदसि चेत्; सोऽस्मत्पक्षेऽपि तुल्यः इति। एतत् प्रतिवक्ति स्वभावत इति। वचनविरोधे [3]केवलस्तर्को यद्यपि न प्रवर्तते, तथाऽपि वचनान्तरविरोधो दुर्वारः। ब्रह्मणो हेयप्रत्यनीकत्व—कल्याणगुणाकरत्ववचनैः; जगतस्तात्त्विकत्वविधाय[4]वचनैश्च, ब्रह्मणो भ्रमाश्रयत्वादिकम्, जगतो भ्रमविषयत्वं च विरुद्धमिति, ब्रह्मणस्तिरोधानादिकं वचनं न प्रतिपादयितुमलम्। एवं वचनविरोधेन [5]भवदभिमतार्थस्य व्याहतस्य श्रुत्या प्रतिपादयितुमशक्यत्वात्, अस्मदुक्तस्तर्कः त्वन्मते प्रवर्तत एवेति। अस्मत्पक्षे तु जीवस्वरूपतिरोधानादेः वचनान्तरविरोधाभावात्, जीवस्वरूपतिरोधानादिकं वचनं प्रतिपादयत्येवेति, तद्विरोधे न तर्कः प्रवर्तत इति न परिहारसाम्यम्—इत्यभिप्रायेण स्वभावत इत्यादिकमुच्यते। न केवलं मलराहित्यम्, अपि तु मलविरोधि—इत्यभिप्रायेण मलप्रत्यनीक इत्युक्तम्। [6]पञ्चगव्यादिव्यावृत्त्यर्थं स्वभावत इत्युक्तम्। अनन्तम् अपरिच्छिन्नम्। स्वरूपम्—धर्मिस्वरूपम्। प्रदेशभेदेन जडत्व—अननुकूलत्वशङ्काव्यावृत्त्यर्थम् "एक"शब्दः। "स्वाभाविक"शब्देन [1]"स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतिरभिप्रेता। सावधिकातिशयव्यावृत्त्यर्थम् "अनवधिकातिशय" शब्दः। अपरिमितः—असंख्येयः, उदारगुणसागरः यस्य इति बहुव्रीहिः। एवम् उभयलिङ्गत्ववचनाविरोधो दर्शितः। अनेन भ्रमाश्रयत्वं दुर्वचम् इत्युक्तं भवति॥

१. मलप्रत्यनीकज्ञानानन्द—पा०
२. ज्ञानानन्दैकरसस्वरूपम्—पा०
३. केवलतर्कः—पा०
४. विधायकवचनैः—पा०
५. निरोधस्य—पा०
६. पञ्चगव्यव्यावृत्त्यर्थम्—पा०

I. श्वे. उ. ६-८.

अनन्तमहाविभूति, स्वलीलापरिकर–स्वांशभूतानन्त–बद्ध–मुक्त–नानाविध-[1]चेतन-तद्भोग्यभूतानन्तविचित्रपरिणाम[2]शक्ति चेतनेतरवस्तुजातान्तर्यामित्व

---

महच्छब्देन विशेषणम्, लीलाविभूत्यपेक्षया महत्त्वाभिप्रायम्। आनन्त्यं हि विभूतिद्वयसाधारणम्। भोगोपकरणाद्यानन्त्यपरो [3]वा महच्छब्दः। "अशेषानन्त-महाविभूति" इति ब्रह्मविशेषणम्। [1]"महाविभूतिसंस्थानम्", [2]"[4]शुद्धे महा-विभूत्याख्ये" इति वचने महाविभूतिशब्देन स्मारिते॥

अथ लीलाविभूतिमत्त्वमुच्यते स्वलील इत्यादिना। मुक्तस्य लीलापरिकरत्वम् मोचनलीलोपकरणत्वात्[5]। स्वांशभूतशब्देन विशेषणतया अंशत्वम् विवक्षितम्। मुक्तेषु नानाविधत्वम्, [3]"स एकधा भवति" इत्यादिश्रुत्युक्तम्, भगवल्लीलान्तर्गत-स्वसंकल्पगृहीतदेहवैविध्यरूपम्। चेतनेतरशब्देन अचेतनशब्दार्थो व्याख्यातः। वस्तुजातशब्देन [6]प्रधानाव्यक्तकाला विवक्षिताः। पूर्वं [7]कालसंकीर्तनं नित्य-विभूतेस्तादधीन्यव्यावृत्त्यै। [8]एवंविधस्य वस्तुजातस्य अन्तर्यामित्वेन कृतम्, सर्व-शरीरत्वसर्वप्रकारावस्थानम्। [9]सर्वशरीरतया सर्वप्रकारत्वेनावस्थानम् अन्तर्यामित्व-कृतम्। तेन अवस्थानेन अवस्थितम्—विशिष्टम् इत्यर्थः। एवं शरीरशरीरिभाव-कथनेन, [4]"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः

---

१. चेतनाचेतन—पा०
२. परिणामहितपरमार्थशक्ति—पा०
३. "वा"—एतन्नास्ति क्वचित्।
४. शुद्धमहा—पा०
५. लीलापरिकरत्वात्—पा०
६. प्रधानव्यक्त—पा०
७. कालकीर्तनम्—पा०
८. एवंविधवस्तु—पा०
९. सर्वशरीरत्वं सर्वप्रकारावस्थानम्—पा०

1. वि. पु. ५-१-५०.
2. वि. पु. ६-५-७२.
3. छा. उ. ७-२६-२.
4. वि. पु. ६-५-७१.

[illegible]पुराणमाम्नोपबृंहित – परमार्थेषु [illegible] – अविच्छिन्न-संप्रदाय[1] – ऋग्यजुस्सामाथर्वरूपानन्तशाखं [illegible] अध्ययन[illegible]
किं न सिध्यति?

यथोक्तं भगवता द्वैपायनेन[2] महाभारते— [1]"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" [2]"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥" [3]"[illegible] पश्यन्ति [illegible] प्रभुः। एते हि [illegible] पर-

---

वचन–तत्प्रामाण्यादेः पारमार्थ्यात् इति सूचितम्। अनादिनिधनादिशब्दैः वेद-प्रामाण्यं विवक्षितम्। किमर्थम् उपबृंहणापेक्षा, [4]"अनन्ता वै वेदाः" इति वेदानामानन्त्यात् इति चेन्न। ऋग्यजुस्सामाथर्वरूपाणां वेदानां चतुस्संख्यासंख्यातत्वेन आनन्त्याभावात् इति चेत्; तत्राह ऋग्यजुस्सामाथर्वरूपानन्तशाखम् इति। यथा देवमनुष्यादिचतुष्कोटिनिविष्टाः प्राणिनोऽसंख्येयाः,[3] तथा ऋग्यजुस्सामादिचतुष्कोटिनिविष्टा अपि वेदाः, शाखाभेदेन अनन्ता इत्यर्थः। वेदं चाप्युपगच्छताम् इति। प्रमाणं, प्रमेयं च परमार्थत्वेन अभ्युपगच्छताम् इत्यर्थः॥

उक्तार्थेषु ऋषिवचनानि परिगणनाक्रमेणोपन्यस्यति यो माम् इत्यादिना। "यो माम्" इति।[4] "अजम्" इति अचेतनव्यावृत्तिः। "अनादिम्", "अजम्" इति मुक्तव्यावृत्तिः। "लोकमहेश्वरम्" इति[5] नित्यसिद्धव्यावृत्तिः, लोक्यत इति व्युत्पत्त्या। एवं विजानतो मुक्तिरुक्ता "असंमूढः स मर्त्येषु" इत्यादिना; तदपि अत्राभिप्रेतम्। चिदचिद्वैलक्षण्यमाह[6] द्वाविमौ इति। अत्र व्यापनभरणस्वाम्यादयः प्रतिपन्नाः। तत्रैव नित्यविभूतिमत्त्वे प्रमाणमाह कालम्

---

१. पाठसंप्रदाय—पा०
२. भगवद्द्वैपायनेन—पा०
३. एवम्—पा०
४. अजमिति क्वचिन्न।
५. नित्यव्यावृत्तिः—पा०
६. वैलक्षण्यादाह—पा०

1. गीता १०-३.
2. गीता. १५-१६.
3. मोक्ष. २९०-९
4. काठ. ? ५.

मनुनाऽपि—[1] "प्रशासितारं सर्वेषामणीयांसमणीयसाम्" इत्या-द्युक्तम् ॥

याज्ञवल्क्येनापि[1]—[2] "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इत्यादि[2] ॥

आपस्तम्बेनापि[3] [3] "पूः प्राणिनः[4] सर्वे गुहाशयस्य" इति । सर्वे-प्राणिनः, गुहाशयस्य—परमात्मनः, पूः—पुरम्, शरीरमित्यर्थः । प्राणिन इति । [5]जीवात्मकभूतसंघाताः ॥

---

मनुनाऽपि इति । प्रशासितृत्वादिगुणा उक्ताः इत्यभिप्रायः ॥

याज्ञवल्क्येनापि इति[6] । उक्तम् इत्यन्वयः । ईश्वरज्ञानात् । न तु निर्विशेषज्ञानादिति भावः ॥

आपस्तम्बवचो[7] व्याचष्टे सर्वे इत्यादिना । [4] "अङ्गं वपुर्वर्ष्म पुरं प्रतीकम्" इति हि नैघण्टुकाः[8] ॥

एवम् उभयलिङ्गत्व — उभयविभूतिमत्त्वप्रतिपादकवचनैः विरोधात् [9]वचनं ब्रह्मणस्तिरोधानादिकं न प्रतिपादयतीति हेतोश्च,[10] वचन—तत्प्रामाण्यादेः मिथ्यात्वाभ्युपगमाच्च, "न हि वचनविरोधे न्यायः प्रवर्तते" इति परिहारः स्वपक्षे वक्तुमशक्यः । अस्मत्पक्षे तु, जीवस्वरूपतिरोधानादेः वचनान्तरविरोधाभावात् तद्वाक्यं प्रतिपादयतीति, अनेन वचन—तत्प्रामाण्यादेः मिथ्यात्वाभावाच्च[11], "न हि वचनविरोधे न्यायः प्रवर्तते" इति परिहारः सुवच एव इत्यभिप्रायः ॥

---

१. याज्ञवल्क्योऽपि—पा०
२. इति—पा०
३. आपस्तम्बोऽपि—पा०
४. सर्वे एव गुहाशयस्य—पा०
५. जीवात्मभूतसंघाताः, जीवात्मसंघाताः—पा०
६. क्वचिदितिर्न दृश्यते ।
७. वचनम्—पा०
८. नैखण्डुकाः, नैघण्टुकाः—पा०
९. अद्वैतवचनम्—पा०
१०. चकारः क्वचिन्नास्ति ।
११. 'चः' कुत्रचिन्न दृश्यते ।

1. मनुस्मृ. १२-१२२.
2. याज्ञ. स्मृ. प्रा. आ. ३४.
3. आपस्तम्बधर्मसूत्रम्—२२-४.
4. हलायुधकृत—अभिधानरत्नमाला २-३५५.

अपरस्तु प्रकाश एव [1]स्वरूपमिति प्रकाशो [2]न धर्मभूतः, तस्य [3]संकोचो, विकासो वा नाभ्युपगम्यते। प्रकाशप्रसरानुत्पत्तिं च तिरोधानभूताः कर्मादयः

---

श्रम उपपद्यते। तिरोधानं च प्रकाशनिवृत्तिः। प्रकाशश्च न ज्ञानस्वरूपः। अपि तु प्रसराख्यो ज्ञानधर्मः,[4] प्रकाशरूपप्रसरणाख्यश्च संकोचः,[5] भावान्तरस्यैवाभावत्वात् संकोचाभावः प्रसरः, स एव तिरोधाननिवृत्तिरिति न तदा भ्रमः। एवं सति ज्ञानं धर्मिस्वरूपं च नित्यम्। ज्ञानधर्मभूतप्रसरस्यैव प्रकाशत्वात्, तदभावस्य च संकोचत्वात्, प्रसराख्यप्रकाशनिवृत्तिरूपं[6] तिरोधानमुपपद्यते इत्यर्थः। एवं परिहारो अन्यपक्षे[7] कर्तुं न शक्यते इत्याह अपरस्तु इति। स्वरूपेऽपि प्रकाशे तस्य संकोचविकासौ अभ्युपगतौ चेत्, न स्वरूपप्रकाशः; तथा च नाभ्युपगतमित्याह तस्य इति। स्वरूपतो संकोचविकासौ अभ्युपगतौ[8] स्याताम्, ततः कथं प्रकाशनिवृत्तिः इत्यत आह प्रकाशप्रसर इति। प्रकाश एव प्रसरः—प्रकाशप्रसरः। यद्वा, प्रकाशशब्दवाच्यस्य ज्ञानस्य प्रसरः—तस्यानुत्पत्तिः इत्यर्थः। प्रकाशशब्दो हि[9] धर्मिपरो, धर्मपरश्च; भानुर्भानुमान्, तेजस्तेजस्वी—इतिवत्। एवकारेण स्वरूपाभावधर्मभूतज्ञानाभावौ[10] च[11] व्यावर्तितौ। तिरोधानभूताः—तिरोधायकभूताः। कर्मादय इति। आदिशब्देन प्रकृतिः वासना च गृह्यते [1]"वासनारेणुकुण्ठितः" [2]"गुणमायासमा-

---

1. एतत्स्वरूपम्—पा०
2. नाम धर्मभूतः—पा०
3. संकोचविकासौ वा नाभ्युपगम्येते—पा०
4. ज्ञानधर्मः प्रकाशः, प्रकाशरूप—पा०
5. भावस्यैवाभावाभावत्वात्—पा०
6. निवृत्तिरूपतिरोधानम्—पा०
7. नोपपद्यते इत्याह—पा०
8. अभ्युपेतौ—पा०
9. व्यक्तिपरः—पा०
10. ज्ञानभावौ—पा०
11. चकारः कुत्रचिन्न दृश्यते।

1. वि. पु. ६-७-१९.
2. जितन्तेस्तोत्रम् ३ श्लो

यथोक्तम् [1] "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा । संसारतापानखिलान् अवाप्नोत्यति-सन्ततान् । तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥" इति । क्षेत्रज्ञानां [1] स्वधर्मभूतज्ञानस्य कर्मसंज्ञया अविद्यया संकोचं, विकासं च दर्शयति ॥

---

स्वोक्ता तर्कसरणिः प्रमाणानुसारिणी इति दर्शयति यथोक्तम् इति । तारतम्येन वर्तते—इत्यनेन ज्ञानस्य संकोचविकासौ सिद्धौ । न ह्यणुमात्रस्य स्वरूपस्य तारतम्यम् । तस्मात् धर्मभूतज्ञानद्वारकमेव आत्मनस्तारतम्यमिति । ज्ञानद्वारकत्वं च तत्रैव उपरितनैः श्लोकैः विवृतम्—[2] "अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका" इत्यादिभिः । उदाहृतश्लोकार्थमाह क्षेत्रज्ञानाम् इति ।

+ अतोच्यते इत्यादिग्रन्थस्यायमर्थः प्रतिपाद्यः—[3] स्वरूपनाशप्रसङ्गप्रभृतीनि यानि दूषणानि त्वन्मते[4] लक्ष्यन्ते,[5] तेषामस्मन्मतेऽपि साम्यापादनमनुपपन्नम् । निर्विशेषत्व–जीवब्रह्मैक्य–जगन्मिथ्यात्वप्रयुक्तत्वात् तेषां दूषणानाम् इत्यभिप्रायेण "स्वभावतः" ○ इत्यादिग्रन्थजातमुक्तम् । एवं सामान्येनोक्ते सति प्रस्तुतचोद्य-विशेषस्य कः परिहार उक्तः ? इत्यभिप्रायेण ❀ "ननु च किमनेन आडम्बरेण ?" इत्यादिचोद्यमुक्तम् । ‡ "उच्यते" इत्यादिना प्रस्तुतचोद्यविशेषपरिहारश्चोक्तः[6] इति ॥

+ ८५ पुटे । ○ ८५ पुटे । ❀ ९२ पुटे । ‡ ९२ पुटे ।

१. स्वधर्मभूतस्य ज्ञानस्य—पा०

२. अप्राणवत्सु—पा०
अप्राणवत्सु = 'अनभिव्यक्तप्राणेषु' इति श्रीधरीये । "अधिका शङ्का तु—कृत्स्नस्य भूतजातस्य प्राणाधीनस्थिति–प्रवृत्त्यादि दर्शनात् प्रसिद्ध एव प्राणः जगत्कारण-तया निर्देशमर्हतीति । परिहारस्तु—शिला-काष्ठादिषु, चेतनस्वरूपे च तदभावात्" इति श्रीभाष्ये १ अ. १ पा. प्राणाधिकरणे ॥

३. स्वरूपनाशप्रभृतीनि—पा०

४. त्वन्मते एव—पा०

५ वक्ष्यन्ते—पा०

६. उक्त इत्यर्थः प्रतिपाद्य इति—पा०

1. वि. पु. ६-७-६०, ६१.

2. वि. पु. ६-७-६४

ब्रह्मैव मिथ्यादर्शनमूलं स्यात् ।

तस्याश्च अनादित्वेऽपि, मिथ्यारूपत्वादेव, ब्रह्मदृश्यत्वेनैव अनादित्वात्, [1]तद्दर्शनमूलपरमार्थदोषानभ्युपगमाच्च, ब्रह्मैव तद्दर्शनमूलं

---

आत्माश्रयदोषो मा भूत्, तथा सति 'उपपादकम् उपपादकान्तरानपेक्षम्[2]' इति न्यायेन माध्यमिकस्य अधिष्ठानापारमार्थ्यं सुवचं भवति, 'उपपादकम् उपपादकान्तरानपेक्षम्' इति न्यायेन अधिष्ठानानवस्थायाः परिहृतत्वात्, इत्येवम् अनवस्थापरिहारार्थम्, अद्वैतहानिपरिहारार्थं च ब्रह्मैव दोषस्स्यात् इत्यर्थः ॥

प्रपञ्चस्य आदिमत्वात् दोषान्तरसापेक्षत्वम्[3], दोषस्य तु अनादेः न दोषान्तरापेक्षा[4] इति चेत् तत्राह तस्याश्चानादित्वेऽपि इति । जीवभेदस्य स्वरूपानादित्वेऽपि[5] दोषसापेक्षत्वाभ्युपगमात् जीवभेदोऽत्र प्रतिबन्दीत्वेन अभिप्रेतः । मिथ्याभूतस्य प्रतीयमानत्वव्यतिरेकेण स्वरूपाभावात्, तत्प्रतीतेश्च स्वरूपप्रयुक्तत्वे[6] सति उक्तदोषप्रसङ्गात्, अतिरिक्तहेतोश्च पूर्वकालवर्तितया पश्चाद्भाविनो मिथ्याभूतस्य स्वरूपानादित्वमेवानुपपन्नम्—इत्यभिप्रायः । जीवभेदस्य स्वरूपानादित्वेऽपि मिथ्याभूतस्य तस्य ब्रह्मदृश्यत्वेनैव अनादित्वात्, तदपरमार्थभेददर्शनस्य स्वरूपप्रयुक्तत्वे तदनिर्मोक्षप्रसंगात्, [7]निर्मोक्षे च स्वरूपोच्छेदप्रसङ्गाच्च तद्दर्शनहेतुदोषापेक्षा अस्ति[8] इति चेत्, दोषस्यापि तत्तुल्यम् इत्यर्थः । परमार्थदोषानभ्युपगमाच्च इति । अद्वैतहानिप्रसंगादिति भावः । एवम् अनवस्था—अद्वैतहानिपरिहारार्थं ब्रह्मैव दोषस्स्यात्

---

१. दर्शन—पा०

२. अनपेक्षितम्—पा०

३. दोषान्तरापेक्षत्वम्—पा०

४. अपेक्षित्वम्—पा०

५. अपिर्नास्ति क्वचित् ।

६. प्रयुक्तदोषत्वे—पा०

७. अनिर्मोक्षे च—पा०

८. "अस्ति" – क्वचिदेतन्न दृश्यते ।

स्यात्; तस्य नित्यत्वात् अनिर्मोक्ष एव[१] ॥

इत्यर्थः। ततः किमनिष्टं स्या[२]दित्यत्राह तस्य इति। दुर्घटत्वेन अनवस्थापरिहारोऽप्यतिदुर्बलः[३]। तथा सति तत्वज्ञानोदयेऽपि *सा तिष्ठतु, उपपत्त्यनपेक्षत्वात्। न हि निवर्तकसन्निधौ निवर्त्यं तिष्ठति इति चेत्, तर्हि उपपत्तिमती सेति न दुर्घटत्वम्। किञ्च प्रपञ्चस्यापि मिथ्यात्वेन दुर्घटत्वात्, मूलदोषापेक्षा न स्यात्। कारणेन विना कार्यं न संभवतीति चेत्, [४]उपपत्त्यपेक्षत्वं [५]स्यात्। जीवभेदोऽपि दुर्घटत्वान्मूलदोषानपेक्षस्स्यात्। अधिष्ठानापारमार्थ्येऽपि[६] दुर्घटत्वात्, अधिष्ठानान्तरानपेक्षत्वेन अनवस्था [७]न स्यात्। दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्त्यनपेक्षत्वम्। अपरमार्थत्वप्रयुक्तोपपत्तिरपेक्षितैव। यथा प्रासादनिगरणादिषु परमार्थत्वप्रयुक्तोपपत्तिः अल्पास्येन विपुलनिगरणायोगरूपा अनपेक्षिता[८]। निगरणसाधनस्य [९]निगरणीयाद्विपुलत्वं ह्यपेक्षितम्, पारमार्थ्ये; तच्च प्रासादनिगरणादावनपेक्षितम्। [१०]एवं परमार्थत्वप्रयुक्तोपपत्तिरेव अनपेक्षिता। अपरमार्थत्वप्रयुक्तोपपत्तिस्तु अपेक्षिता। अधिष्ठानं तु अपरमार्थत्वप्रयुक्तमिति[११] तदपेक्षया अनवस्था इति चेत्, दोषश्च अपरमार्थत्वप्रयुक्त इति दोषापारमार्थ्ये, तदपेक्षया अनवस्था स्यादिति ॥

* सा = आच्छादिका अविद्या।

१. एवकारः क्वचिन्नास्ति।
२. तत्राह—पा०
३. दुर्लभः—पा०
४. उपपत्त्यनपेक्षत्वम्—पा०
५. न स्यात्—पा०
६. अधिष्ठानपारमार्थ्येऽपि—पा०
७. "न"—एतन्नास्ति क्वचित्।
८. अपेक्षिता—पा०
९. निगरणीयविपुलत्वम्—पा०
१०. क्वचित् एवमिति न दृश्यते।
११. अधिष्ठानापारमार्थ्ये तदपेक्षया—पा०

अत एव इदमपि निरस्तम् । "एकमेव शरीरं जीववत्, निर्जीवानीतराणि शरीराणि[1] । यथा स्वप्नदृष्ट[2]नानाविधशरीराणां निर्जीवत्वम् । तत्र [3]स्वप्ने द्रष्टुश्शरीरमेकमेव जीववत् । तस्य स्वप्नवेलायां[4] दृश्यभूतनानाविधानन्तशरीराणां निर्जीवत्वमेव । अनेनैकेनैव परिकल्पितत्वात् जीवाः मिथ्याभूताः" इति । ब्रह्मणा स्वस्वरूपव्यतिरिक्तस्य[5] जीवभावस्य

एकजीववादं निराकरोति अत एव इति । अत एव — ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाभ्युपगमादेव[6] इत्यर्थः । किं निरस्तमिति शङ्कायां — निरसनीयमुपन्यस्यति एकमेव इति । स्वप्नदृष्टशरीराणां निर्जीवत्वे कथमेकस्य सजीवत्वम्, इतरेषां निर्जीवत्वं च ? इति शङ्कायाम् — एकस्य सजीवत्वम्, इतरेषां निर्जीवत्वं चाह तत्र [7]इत्यादिग्रन्थद्वयेन । तेषां मिथ्यात्वं कथम् इत्यत्राह अनेनैकेनैव इति । इतिः—समाप्तौ । एतत् कथं निरस्तं भवति इति शङ्कायाम्—अत एवेत्यभिप्रेतमर्थं विवृणोति ब्रह्मणा इति । जीवभावः—जीवत्वम् । किं प्रातिभासिकजीवैकत्वमुच्यते ? उत पारमार्थिकजीवैकत्वम्? प्रातिभासिकजीवैकत्वं चेत्, स्वप्नजागरयोः जीवबहुत्वप्रतिभासात्[8] दृष्टान्तदार्ष्टान्तिकयोः जीवबहुत्वप्रतिभासः सार्वलौकिको विरुध्येत[9] । पारमार्थिकजीवैकत्वं चेत्, एकोऽपि जीवो न पारमार्थिकतया अभ्युपगत इति, तत् सुतराम् अनुपपन्नम्—इत्यभिप्रायः । ब्रह्मणा — कल्पित-

१. शरीराणीति क्वचिन्न दृश्यते ।
२. नानाशरीराणाम्—पा०
३. स्वप्नद्रष्टुः—पा०
४. स्वप्नदशायाम्—पा०
५. व्यतिरिक्तस्य तस्य सर्वजीवभावस्य—पा०
६. क्वचित् एवकारः न दृश्यते ।
७. इत्यादिना, इति—पा०
८. प्रातिभासात्—पा०
९. विरुध्यते—पा०

सर्वशरीराणां च कल्पितत्वात्, एकस्मिन्नपि शरीरे शरीरवत्, जीवसद्भावस्य मिथ्यारूपत्वात् सर्वाणि शरीराणि मिथ्यारूपाणि। तत्र जीवभावश्च मिथ्यारूपः[1] इति। एकस्य शरीरस्य तत्र जीवसद्भावस्य च न कश्चिद्विशेषः। अस्माकं तु [2]स्वप्ने द्रष्टु[3]श्शरीरस्य तस्मिन्नात्मसद्भावस्य [4]च प्रबोधवेलायामबाधितत्वात्, अन्येषां शरीराणां तद्गतजीवानां च बाधितत्वात् ते सर्वे मिथ्याभूताः। स्वशरीरमेकम्, तस्मिन् जीवभावश्च परमार्थः इति विशेषः॥

अपि च केन वा अविद्यानिवृत्तिः? सा च कीदृशी? इति विवेचनीयम्। "ऐक्यज्ञानं निवर्तकम्, निवृत्तिश्च अनिर्वचनीयप्रत्य-

---

त्वात् इत्यन्वयः। स्वस्वरूपव्यतिरिक्तस्य इति हेतुगर्भविशेषणम्। न कश्चिद्विशेषः इति। प्रातिभासिकत्वं स्वप्नदृष्टशरीरस्थस्य, अन्यशरीरस्थस्य च जीवभावस्य, अविशिष्टम्। पारमार्थिकत्वं तु न कस्यचिदपि इत्यर्थः। प्रपञ्चसत्यत्वपक्षे कथं "स्वप्नदृष्ट्—तद्दृश्यविशेषस्सिध्यति? इत्यत्राह अस्माकं तु इति। तस्मिन् जीवभावश्च। जीवसद्भावः इत्यर्थः। लोकसिद्धप्रक्रियया स्वाप्नार्थानां बाधाभ्युपगमः। सूत्रकारेणापि हि तथा कृतम् [1]"वैधर्म्याच्च न स्वप्नादिवत्" इत्यत्र। एवम्, एकजीववादः प्रसंगात् निरस्तः॥

अथ निवर्तकानुपपत्तिं, निवृत्त्यनुपपत्तिं चाह अपि च इत्यादिना। किंशब्दः क्षेपार्थः। निवर्तकनिवृत्त्योः पराभ्युपगतप्रकारं शङ्कते ऐक्य इति। तत्र निवृत्तिं दूषयति अनिर्वचनीय इति। शब्दशक्त्यैव पञ्चमकोट्यभावो दर्शितः।

---

१. मिथ्याभूतः—पा०
२. स्वप्नद्रष्टुः—पा०
३. स्वशरीरस्य—पा०
४. क्वचित् चकारः न दृश्यते।
५. स्वप्ने द्रष्टुः—पा०

1. ब्र. सू. २-२-२९.

नोकाकारा" इति चेत्, अनिर्वचनीयप्रत्यनीकं निर्वचनीयम्। तच्च सद्वा? असद्वा? द्विरूपं वा? [1]कोट्यन्तरं न विद्यते ॥

ब्रह्मव्यतिरेकेण एतदभ्युपगमे पुनरप्यविद्या न निवृत्ता स्यात्;

---

अनिर्वचनीयप्रत्यनीकं निर्वचनीयम् इति। नञर्थस्य हि [2]स्वनिरूपक एव प्रत्यनीकः इति भावः। अनिर्वचनीयप्रत्यनीकम्—न तावत् अनिर्वचनीयम्, अपि तु निर्वचनीयमेव। तत्र त्रैविध्यमाह तच्च इति। एवं शब्दस्वभावात् पञ्चम-कोटिर्नास्ति। अर्थस्वभावाच्च[3] तथा ॥

अविद्यानिवृत्तिः किं ख्याता? उत अख्याता? अख्यातत्वे असत्त्वम्। ख्यातत्वे किं बाध्या? उत अबाध्या? इति विकल्पः। बाध्या चेत्, अनिर्वचनीयता। किञ्च निवृत्तेश्च[4] बाध्यत्वे निवर्त्यमज्ञानं स्थितं स्यात्। निवृत्तेरसत्त्वेऽपि तुल्यमेव तत्। अबाध्या चेत्, सत्त्वम्[5]। अबाध्यत्वेऽपि आदिमत्वात् न सत्त्वम्[6] इति चेन्न। आदिमत्वं नित्यवैलक्षण्यम्। न तत्[7] सद्वैलक्षण्यम्। प्रतिपन्नोपाधावबाध्यत्वं हि सत्यत्वम्? तदेव हि सत्त्वम्। त्वन्मते [8]प्रतिपन्नोपाधौ बाधात् सद्व्यावृत्ति-रित्युक्तेः[9]। तत्र सत्त्वपक्षे किं काल्पनिकसत्? उत अकाल्पनिकसत्? इति विकल्पमभिप्रेत्य, अकाल्पनिकसत्त्वे च ब्रह्मव्यतिरिक्तत्वपक्षे अद्वैतहानि[10]प्रसङ्गः*। अव्यतिरिक्तत्वपक्षे दूषणं वक्ष्यते। काल्पनिकसत्त्वे दूषणमाह ब्रह्मव्यतिरेकेण इति। व्यावहारिक[11]सद्धि अनिर्वचनीयम्? तस्मात् अविद्या न निवृत्ता स्यात्।

---

* विवक्षित इति शेषः।

---

१. कल्पान्तरम्—पा०
२. स्वरूपनिरूपक—पा०
३. अर्थस्वभावाच्च। अथाविद्यानिवृत्तिः—पा०
४. चकारः क्वचिन्नास्ति।
५. सत्यत्वम्—पा०
६. सत्यत्वम्—पा०
७. न तु—पा०
८. "प्रतिपन्नोपाधौ"—एतन्नास्ति क्वचित्।
९. सद्व्यावृत्त्युक्तेः—पा०
१०. अद्वैतहानिः—पा०
११. व्यावहारिकसत्त्वं निर्वचनीयम्—पा०

ब्रह्मैव चेन्निवृत्तिः, [1]तत् प्रागभ्यनिशिष्टमिति, वेदान्तज्ञानात्पूर्वमेव निवृत्तिस्स्यात् । "ऐक्यज्ञानं निवर्तकम्, तदभावात् संसारः" इति भवद्दर्शनं विहन्यते ॥

असत्त्वपक्षेऽपि इदमेव दूषणम् । निवृत्तिः[2] सती चेत्, "द्वौ नञौ प्रकृतमर्थं सूचयतः" इति न्यायात् अविद्या ह्यनिवृत्ता स्यात् । [3]द्विरूपत्वपक्षेऽपि सदंशेन अद्वैतहानिः, असदंशेन निवृत्तेरसत्वात् अविद्यास्थितिरेव इत्यर्थः । सदंशोऽपि काल्पनिकत्व—अकाल्पनिकत्वविकल्पः पूर्ववत् । अकाल्पनिकसत्त्वे च ब्रह्मस्वरूपानतिरिक्तत्वपक्षमाशङ्क्य दूषयति ब्रह्मैव इति । तत्त्वज्ञानात्पूर्वमेव निवृत्तिरस्तु, ततः किम्? इत्यत्राह ऐक्यज्ञानम् इति । ननु यथा भावान्तराभाववादपक्षे भूतलमेव घटाभावोऽभ्युपगतः, तथा स्वरूपमेव अविद्यानिवृत्तिस्स्यात्—इति चेन्, न । [4]भूतले वैलक्षण्यमस्त्येव । कालविशेषविशिष्टदेशविशेषत्वं[5] तत्[6] । तदेव घटाभावः । तच्च अभाववादिनाप्यभ्युपगतम् । एकस्मिन् देशे कालभेदेन [7]भावाभावसंभवात् । एकस्मिन् काले देशभेदेन [8]घटभावाभावसंभवाच्च । अनेन अभाववादिभिरुक्तो विकल्पः परिहृतः । केवलभूतलमेव अभावः—इति वाक्ये केवलशब्दार्थः किं भूतलातिरिक्तः? तर्ह्यभावाङ्गीकारः[9] । भूतलमेव चेन्, सघटेऽप्यभावप्रसङ्गः—इति हि तैः विकल्प्य दूषणमुक्तम्? तत् परिहृतम् अनेन वैलक्षण्येन । एवं वैलक्षण्यानभ्युपगमात्, ब्रह्मस्वरूपमेव निवृत्तिर्भवितुं नार्हति । स्वरूपमेव अविद्यानिवृत्तिश्चेत् अविद्यानुदय एव स्यात् । निवृत्तौ सत्यां निवर्त्यस्थित्यनुपपत्तेः । ब्रह्मस्वरूपमेव निवृत्तिश्चेत् पञ्चमकोटित्वं च न स्यात्, स्वरूपस्य सत्वात् ॥

१. "तत्"—इति क्वचिन्न दृश्यते ।
२. अस्तीति चेन्—पा०
३. द्विरूपपक्षे—पा०
४. भूतलवैलक्षण्यम्—पा०
५. विशेषविशिष्टं यत् तदेव—पा०
६. "तत्"—क्वचिदेतन्नास्ति ।
७. घटतदभावसंभवात्—पा०
८. घटतदभावसंभवाच्च—पा०
९. अभावाङ्गीकारात्—पा०

**किञ्च निवर्तकज्ञानस्याप्यविद्यारूपत्वात् [1]तन्निवर्तनं केनेति वक्तव्यम् । निवर्तकज्ञानं स्वेतरसमस्तभेदं निवर्त्य, क्षणिकत्वादेव[2] स्वयमेव विनश्यति[3] । दावानलविषनाशन[4]विषान्तरवत् इति चेत्, न । निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन तत्स्वरूप–तदुत्पत्तिविनाशानां मिथ्यारूपत्वात् तद्विनाशरूपा अविद्या तिष्ठत्येवेति, तद्विनाशदर्शनस्य[5] निवर्तकं[6] [7]वक्तव्यमेव । दावाग्न्यादीनामपि पूर्वावस्थाविरोधिपरिणामपरम्परा अवर्जनीयैव ॥**

---

एवं निवृत्तिदूषणेनैव निवर्तकेऽपि दूषिते सति, मुखान्तरेणापि[8] दूषणमस्ति इत्यभिप्रायेण आह **किञ्च** इति । किंशब्दः क्षेपार्थः । तदभ्युपगमप्रकारं शङ्कते **निवर्तक** इति । दूषयति **न** इति । वस्तुतः उत्पन्नस्यैव हि वस्तुनो विनाशः[9] उत्पत्त्यादेः काल्पनिकत्वेन विनाशोऽपि काल्पनिक इति, तद्विनाश–तद्विषयभ्रम–भ्रान्त–[9]भ्रमहेतुरूपा अविद्या स्थितेति तन्निवर्तकं वक्तव्यम्[10] इत्यर्थः । '[11]स्वरूपतदुत्पत्ति' इत्यत्र स्वरूपशब्दः स्थितिवाची । **तद्विनाशरूप** इति । विनाशानुबन्धिनां भ्रम–तदाश्रय–तद्धेतूनामपि विनाशशब्देन विवक्षा । 'तद्विनाशदर्शनस्य' इत्यत्रापि, तदाश्रय[12]तत्कल्पकाविद्या–तत्कल्पनीयानां च प्रदर्शनं कृतम् । मुखान्तरेण दूषयति **दावाग्न्यादीनामपि** इति । दावाग्न्यादीनां विनाशो नाम, पूर्वावस्था विरोध्यवस्थान्तरप्राप्तिः; न तु द्रव्याभावः । एवम् अविद्याया अवस्थान्तरप्राप्तौ सा न निवृत्ता स्यात् इत्यर्थः ॥

---

१. निवृत्तिः—पा०
२. "एव"—क्वचिन्न दृश्यते ।
३. नश्यति—पा०
४. नाशक—पा०
५. तद्विनाशस्य—पा०
६. निवर्तकत्वम्—पा०
७. मन्तव्यमेव—पा०
८. अपिर्नास्ति क्वचित् ।
९. भ्रमरूपाविद्यादौ स्थिते सति—पा०
१०. वक्तव्यमेव—पा०
११. तत्स्वरूप—पा०
१२. तत्काल्पनिकाविद्या—पा०

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूपः इति चेत्, न; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् [1]तत्कर्तृत्वानुपपत्तेः। ब्रह्मस्वरूपमेव इति चेत्, न[2]। ब्रह्मणः निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उत अध्यस्तम्? अध्यस्तं चेत् [3]अयमध्यासः, तन्मूलाविद्यान्तरं च निवर्तक[4]ज्ञानाविषयतया तिष्ठत्येव। तन्निवर्तकान्तराभ्युपगमे, तस्यापि त्रिरूपतया[5] अनवस्थैव[6]। सर्वस्य हि ज्ञानस्य त्रिरूपत्वविरहे[7] ज्ञानत्वमेव हीयते; कस्यचित्[8] कञ्चन अर्थविशेषं प्रति सिद्धिरूपत्वात्। ज्ञानस्य त्रिरूपत्वविरहे, भवतां [9]स्वरूपभूतज्ञानवत्

---

ज्ञात्रनुपपत्तिं दर्शयति अपि च इति। निषेध्यतया—निवर्त्यतया। किम् अध्यासरूपो ज्ञाता? उत ब्रह्मैव ज्ञातृ[10]? इति विकल्पोऽभिप्रेतः। ब्रह्मैव इति पक्षे ज्ञातृत्वधर्मे विकल्पः। ज्ञातृत्वं किं स्वरूपम्? उत अध्यस्तम्? इति। तस्यापि त्रिरूपतया इति। निवर्तकज्ञानस्य त्रिरूपत्वं ज्ञातृज्ञेयानुबन्धित्वकृतम्[11]। निवर्तकज्ञानस्य त्रिरूपत्वाभावे दूषणमाह सर्वस्य इति। ज्ञानस्य—[12]प्रमाणज्ञानस्य; न तु स्वरूपभूतज्ञानस्य इत्यर्थः। कथं ज्ञानत्वं [13]हीयते इत्यपेक्षायाम् अन्वयव्याप्तिं दर्शयति कस्यचित् इति। सिद्धिरूपत्वात्—[14]प्रकाशरूपत्वात्। दूषणान्तरमाह, यद्वा, व्यतिरेकव्याप्तिं दर्शयति त्रिरूपत्वविरहे इति। 'ज्ञातृत्वम्

१. 'तत्' इति क्वचिन्नास्ति।
२. "न"—एतन्न दृश्यते क्वचित्।
३. "अयमध्यासः"—नास्त्येतत् क्वचित्।
४. ज्ञानाद्यविषयतया—पा०
५. त्रिरूपत्वात्—पा०
६. एवकारः क्वचिन्नास्ति।
७. त्रिरूपकत्वविरहे—पा०
८. चित्—इति कुत्रचिन्न।
९. स्वरूपभूतज्ञानमप्यनिवर्तकम्—पा०
१०. ज्ञातेति—पा०
११. अनुबन्धिकृतम्—पा०
१२. प्रमाणजन्यज्ञानस्य—पा०
१३. अभिधीयते—पा०
१४. प्रकाशरूपत्वात्—पा०

निवर्तकज्ञानमपि अनिवर्तकं स्यात् । ब्रह्मस्वरूपस्यैव ज्ञातृत्वाभ्युपगमे, [1]अस्मदीयपक्ष एव परिगृहीतस्स्यात् । "निवर्तकज्ञानस्वरूपज्ञातृत्वं च स्वनिवर्त्यान्तर्गतम्" इति वचनम्, "भूतलव्यतिरिक्तं कृत्स्नं छिन्नं देवदत्तेन" इत्यस्यामेव छेदनक्रियायाम् [2]अस्याः छेदनक्रियायाः, छेतृत्वस्य च छेद्यान्तर्भाववचनवत् [3]उपहास्यम् ॥

अपि च निखिलभेदनिवर्तकमिदमैक्यज्ञानं केन [4]जातम्—इति [5]विवेचनीयम् । श्रुत्यैव इति चेत् , न । तस्याः [6]ब्रह्मव्यतिरिक्तायाः अविद्यापरिकल्पितत्वात्, अपश्च [7]बाधकज्ञानोत्पादकत्वं न संभवति । तथा हि—

अध्यस्तम्' इति पक्षो दूषितः । अथ स्वरूपम्—इति पक्षाङ्गीकारे अपसिद्धान्तप्रसङ्गः इत्याह ब्रह्म इति । निवर्तकज्ञानस्य निवर्तकान्तरापेक्षत्वे ह्यनवस्था? न चान्यापेक्षा । "स्वयं [8]च ज्ञातृत्वम्, विषयश्च, सर्वम्, स्वनिवर्त्यम्" इति चेत्तत्राह निवर्तक इति । ज्ञातृत्वादिकं सर्वं, स्वयं च स्वनिवर्त्यान्तर्गतम्—इति वचनम्, अङ्गुल्यग्रादिवाक्यवत्, अयोग्यार्थत्वात् न प्रमितिजनकमिति भावः ॥

अथ सामग्र्यनुपपत्तिमाह अपि च इति । केन जातम् । न केनापीति भावः । श्रुतेस्सामग्रीत्वमाशङ्क्य दूषयति श्रुत्यैव इति । अविद्याकल्पितवाक्यजन्यं ज्ञानं न भ्रमनिवर्तकम् इत्यर्थः । [9]निवर्त्यम्—दुष्टकारणजन्यत्वात् दुष्टकारणजन्येनापि ज्ञानेन बाध्यते इति चेत्तत्राह तथा हि इति । तदेव विवृणोति

१. अस्मदीय एव पक्षः—पा०
२. अस्या छेदनक्रियायाः—इति क्वचिन्न ।
३. अपहास्यम्—पा०
४. ज्ञातम्—पा०
५. विमर्शनीयम्, निर्वचनीयम्—पा०
६. ब्रह्मव्यतिरिक्ततया—पा०
७. बाधकबोधोत्पादकत्वम्, बाधकज्ञानस्य उत्पादकत्वम्—पा०
८. चकारः क्वचिन्नास्ति ।
९. निवर्त्यस्य—पा०

दुष्टकारणजन्यमपि रज्जुसर्पज्ञानम्, दुष्टकारणजन्येन "रज्जुरियं न सर्पः" इति ज्ञानेन न बाध्यते । रज्जुसर्पज्ञानभये वर्तमाने, केनचिद्भ्रान्तेन पुरुषेण, "रज्जुरियं न सर्पः" इत्युक्तेऽपि[1] "अयं भ्रान्तः" इति ज्ञाने[2] सति, तद्वचनं रज्जुसर्पज्ञानस्य बाधकं न भवति, भयं च न निवर्तते; प्रयोजकज्ञानवतः श्रवणवेलायामेव हि[3], ब्रह्मव्यतिरिक्तत्वेन श्रुतेरपि भ्रान्तिमूलत्वं ज्ञातम् इति ॥

[4]किञ्च, निवर्तकज्ञानस्य, ज्ञातुः, तत्सामग्रीभूतशास्त्रस्य च ब्रह्मव्यतिरिक्ततया यदि बाध्यत्वमुच्यते[5], हन्त ! तर्हि प्रपञ्चनिवृत्तेः

[6]रज्जुसर्प इति । बाधकस्य दुष्टकारणजन्यत्वे ज्ञाते सति हि[7] तत् अनिवर्तकम् । अत्र तु न दुष्टकारणजन्यत्वं ज्ञातम् इति चेत्तत्राह प्रयोजक इति । प्रयोजकज्ञानवतः । ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति, मिथ्यात्वे प्रयोजकं ब्रह्मव्यतिरिक्तत्वम्—इति ज्ञानवतः इत्यर्थः । निदिध्यासनेन निरस्तसमस्तभेदवासनस्य निवर्तकज्ञानोत्पत्तिः[8] इत्यभ्युपगमात्, श्रवणवेलायामेव श्रुतेः भ्रान्तिमूलत्वज्ञानाच्च न सा बाधकज्ञानहेतुः इत्यर्थः । भ्रान्तिमूलत्वं ज्ञातम् इति । बाधकज्ञानोत्पादकत्वं न संभवति इति पूर्वेण अन्वयः ॥

सामग्रीदूषणप्रसङ्गात्, ज्ञानज्ञातृत्वमिथ्यात्वेप्यनुगतं दूषणमाह निवर्तक इति । न हि विरुद्धद्वयस्य मिथ्यात्वं संभवति । अपि त्वन्यतरस्यैव मिथ्यात्वम् । तच्चाभ्युपगतं परेण । सर्वशून्यवादिना उक्तस्य अधिष्ठानमिथ्यात्वस्य बाधितत्वे

१. अपिर्नास्ति क्वचित् ।
२. ज्ञाते—पा०
३. हिर्नास्ति क्वचित् ।
४. 'किञ्च'—एतन्नास्ति क्वचित् ।
५. उच्येत—पा०
६. रज्जुरियं न सर्प इति—पा०
७. हिः न दृश्यते कुत्रचित् ।
८. उत्पत्तेरभ्युपगमात्—पा०

मिथ्यात्वमापततीति प्रपञ्चस्य सत्यता स्यात्; स्वप्नदृष्ट[1]पुरुषवाक्यावगत[2]पुत्रादिमरणस्य [3]मिथ्यात्वेन [4]पुत्रादिसत्यतावत् । किञ्च तत्त्वमस्यादि[5]वाक्यं न प्रपञ्चस्य बाधकम्, भ्रान्तिमूलत्वात्; [6]भ्रान्तप्रयुक्तरज्जुसर्पबाधकवाक्यवत् ॥

---

अधिष्ठानं [7]सत्यं भवति । न हि अधिष्ठानभूता संवित्तिः, मिथ्यात्वम्, उभयं च मिथ्या भवति । तस्मात् ब्रह्मव्यतिरिक्तोपाधिः निवृत्तेरप्यविशिष्ट इति निवृत्तिः मिथ्या भवतीति, तन्निवृत्तेः, निवर्त्यस्य चोभयस्य मिथ्यात्वम्—मातृत्ववन्ध्यात्वयोरिव अनुपपन्नम् इत्यर्थः । [8]तत्र दृष्टान्तमाह स्वप्न इति । [9]निवृत्तेर्मिथ्यात्वे [10]निवर्त्यस्थितिरेव, न तु निवर्त्यसत्यत्वम्[11]—इति चेत्, न । निवर्त्यस्थितेः यावत्कालं बाधानुदयात् सत्यत्वसिद्धेः, अबाधिततया हि स्थितिः [12]सत्यत्वम्? तत्त्वमस्यादि इति । अयम् अनिष्टप्रसङ्गः, न त्वनुमानम्,[13] *व्याप्तिप्रदर्शनार्थं प्रतिज्ञाहेतुरूपेण उक्तम् ॥

---

* वयन्तो धुः; पुमानित्यधिकारः । * अत्र इदमित्यध्याहार्यम् ।

---

१. पुरुषेण वाक्यावगता—पा०

२. पित्रादि—पा०

३. मरणमिथ्यात्वेन—पा०

४. पित्रादि—पा०

५. वाक्यजन्यज्ञानं प्रपञ्चस्याबाधकम्—पा०

६. भ्रान्तिप्रयुक्त—पा०

७. सद्भवति—पा०

८. तद्दृष्टान्तमाह—पा०

९. निवृत्तिमिथ्यात्वे—पा०

१०. निवर्त्यस्य स्थितिः—पा०

११. सत्यमिति चेत्—पा०

१२. सत्यत्वमिति क्वचिन्नास्ति ।

१३. अनुमानव्याप्तिप्रदर्शनार्थम्—पा०

ननु च[1] स्वप्ने कस्मिंश्चिद्भये वर्तमाने स्वप्नदशायामेव "अयं स्वप्नः" इति ज्ञाते सति, पूर्वभयनिवृत्तिः दृष्टा; तद्वदत्रापि संभवति इति[2]। नैवम्—[3]स्वप्नवेलायामेव, "सोऽपि स्वप्नः" इति ज्ञाते सति[4] पुनर्भयानिवृत्तिरेव दृष्टेति न कश्चिद्विशेषः। श्रवणवेलायामेव "सोऽपि स्वप्नः" इति [5]ज्ञातमेवेत्युक्तम्॥

यदपि चेदमुक्तम्—भ्रान्तिपरिकल्पितत्वेन मिथ्यारूपमपि शास्त्रं [1]"सत्...अद्वितीयं ब्रह्म" इति बोधयति। तस्य[6] सतो ब्रह्मणो विषयस्य पश्चात्तनबाधादर्शनात् ब्रह्म सुस्थितमेव इति। तदयुक्तम्। "शून्यमेव

---

भ्रान्तिमूलस्य ज्ञानस्यापि निवर्तकत्वे दृष्टान्तमुखेन चोदयति ननु च इति। परिहरति **नैवम्** इति। "सोऽपि स्वप्नः" इति ज्ञाते सति इति। प्रथमस्वप्नबाधके द्वितीयस्वप्नेऽपि 'स्वप्नः' इति ज्ञाते, भयानिवृत्तिदर्शनात् इत्यर्थः। द्वितीयस्वप्नस्य स्वप्नत्वं न स्वप्नेन ज्ञायते इति चेत्, तर्हि तस्य प्रथमस्वप्नभयनिवर्तकत्वम्, दुष्टमूलत्वाज्ञानकृतं स्यात्। एतत्परिहाराय द्वितीयस्वप्नज्ञानस्य स्वप्नता ज्ञायते इति चेत्, तदा तस्य भयानिवर्तकत्वमपि दृष्टम् इत्यभिप्रायः। **न कश्चिद्विशेषः** इति। बाध्यबाधकयोः न कश्चिद्विशेषः—इत्यर्थः। प्रस्तुतार्थे स्वप्नत्वं किम् अवगतम्? इत्यत्राह **श्रवण** इति। स्वप्नशब्दः गौणवृत्त्या मिथ्यात्वपरः[7]॥

मिथ्यारूपस्यापि[8] शास्त्रस्य निर्विशेषवस्तुबोधकत्वम्, पश्चात्तनबाधादर्शनेन संभवति इति शङ्कते **यदपि** इति। परिहरति **तदयुक्तमिति**। पुनरशङ्क्ते

---

१. चकारः क्वचिन्न दृश्यते।
२. इति चेत्—पा०
३. तद्दशायामेव—पा०
४. सति अनिवृत्तिरेव—पा०
५. पूर्वमेवोक्तम्—पा०
६. तस्येति क्वचिन्न।
७. मिथ्यात्वापन्नः—पा०
८. मिथ्यास्वरूपस्यापि—पा०

1. छा. उ. ६-२-१.

तत्त्वम्" इति वाक्येन तस्यापि बाधितत्वात्। इदं भ्रान्तिमूलं वाक्यम् इति चेत्, "सत् अद्वितीयं ब्रह्म" इति वाक्यमपि भ्रान्तिमूलमिति स्वयैवोक्तम्। पश्चात्तनबाधादर्शनं तु [1]सर्वशून्यवाक्यस्यैवेति[2] विशेषः। सर्वशून्यवादिनः, ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिन[3]श्च, स्वपक्ष[4]साधनप्रमाणपारमार्थ्यानभ्युपगमेन अभियुक्तैः वादानधिकार एव प्रतिपादितः–[1]"अधि-

इदम् इति। दूषयति सत् इति। वेदस्त्वपौरुषेयः, तद्वाक्यं पौरुषेयम्—इति चेत् ततः किम्? पौरुषेयत्वापौरुषेयत्ववैषम्यस्यापि भ्रान्तिसिद्धत्वेन द्वयोस्तुल्यत्वात्। किञ्च तद्वाक्यस्य पौरुषेयत्वं [5]वदता "भ्रान्तिमूलत्वात्" इति हेतोः किं दूषणमुक्तं स्यात्। हेतोस्सोपाधिकत्वम् इति चेत् न। वाक्याप्रामाण्ये पौरुषेयत्वस्य उपाधित्वाभावात्। आप्तवाक्ये व्यभिचरितस्य हि न साध्यसमव्याप्तिः[6]। स्वाभिमतार्थसिद्धिः प्रमाणमिथ्यात्ववादिनो नास्ति इत्याह सर्व इति। अभियुक्तैः इति। * भट्टाचार्यैरित्यर्थः[7]। यथा—"सर्वदा सदुपायानां वादमार्गः प्रवर्तते[8]" इति पूर्वार्धम्। "अधिकारोऽनुपायत्वात् न वादे शून्यवादिनः[9]" इत्यत्र "सर्वशून्यवादिनः" इत्युक्तेऽपि ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनोऽपि ग्रहणम्, तुल्यन्यायत्वात्[10]। न्यायश्च—स्वपक्षसाधनप्रमाणपारमार्थ्यानभ्युपगमः। अनेन 'सदुपायानाम्' इति पदं व्याख्यातम्। सदुपायानाम्—परमार्थभूतप्रमाण-

* पूर्वतन्त्रव्याख्यातृभिः कुमारिलभट्टैः।

1. शून्यवाक्यस्य—पा.
2. वाक्यस्यैति—पा.
3. मिथ्यावादिनः—पा.
4. साधक—पा.
5. वेदान्तभ्रान्तिमूलत्वात्—पा.
6. समव्याप्तिः—पा.
7. इत्यर्थः—इत्येतत् क्वचिन्न।
8. प्रवर्तकः—पा.
9. शून्यवादिनाम्—पा.
10. न्यायात्—पा.

1. पू. मी. श्लोकवार्तिकम्. सू. ५. निरालम्बनवादे श्लो. १२८

कारोऽनुपायत्वात् न वादे * शून्यवादिनः" इति ॥

अपि च [1]प्रत्यक्षदृष्टस्य प्रपञ्चस्य मिथ्यात्वं केन प्रमाणेन साध्यते? प्रत्यक्षस्य दोषमूलत्वेन[2] अन्यथासिद्धिसंभवात्, निर्दोषं शास्त्रमनन्यथासिद्धं प्रत्यक्षस्य बाधकम् इति चेत्, केन दोषेण जातं प्रत्यक्षम् अनन्तभेदविषयम् इति वक्तव्यम्। [3]अनादिभेदवासनाख्य-

---

दीना[4]मित्यर्थः। [5]शून्यवादिनं प्रति अनुपायत्वात् वादानधिकारः इत्युक्ते, वादः प्रवृत्त एवेति व्याहतमिदं वादानधिकारवचनम् इति चेन्न। ग्रन्थाभिप्रायाज्ञानकृतमिदं चोद्यम्। वादो नाम स्वाभिमतार्थसाधकत्वम्[6]। अनुपायस्य स्वाभिमतार्थसिद्धिर्नास्ति, साधकाभावात्। अतो निष्प्रयोजनत्व[7]मुक्तम्। न तु "अनुपायस्य वादानधिकारः" इति वाक्यप्रयोगस्याप्ययोग्यत्वम्[8]। यद्वा, अनेन ग्रन्थेन शून्यवादिनो व्याहतिरापाद्यते "कथाप्रवृत्तेन त्वया [9]कथाप्रवृत्तिविरुद्ध[10]मङ्गीकृतम्" इति। तस्मान्नाल चोद्यम् ॥

शास्त्रप्रत्यक्षयोः बाधकत्वबाध्यत्वे निरस्यति अपि च इत्यादिना। प्रत्यक्ष इत्यादि। स्पष्टम्। काचतिमिरादेः दोषत्वं कैश्चिदुक्तमिति, तस्य सर्वभेदानुगतत्वाभावात् अयुक्तमित्यभिप्रायेण 'अनन्तभेदविषयम्' इत्युक्तम्। काचतिमिराद्यभावेऽपि क्वचिद्दर्शनात् अन्यत्र कल्प्यते चेत्, वाक्यत्वाद्वेदस्य पौरुषेयत्वादिकं कल्प्यताम्

---

* उपायप्रामाण्यमनभ्युपगच्छतः पुरुषस्य।

---

१. प्रत्यक्षदृष्टप्रपञ्चस्य—पा०
२. मूलत्वेनासिद्धिसंभवात्—पा०
३. अनादिभेदसमाख्यदोषजातम्—पा०
४. प्रमाणवादिनाम्—पा०
५. ननु शून्यवादिनं प्रति—पा०
६. विधायकत्वम्—पा०
७. निष्प्रयोजनो वाद इत्युक्तम्—पा०
८. अनधिकारित्वम्—पा०
९. कथाप्रवृत्तेर्विरुद्धम्—पा०
१०. अभिधीयत इति—पा०

दोषजातं प्रत्यक्षम् इति चेत्, हन्त! नहिं अनेनैव दोषेण जातं शास्त्रमपीति, एकदोषमूलत्वात् शास्त्रप्रत्यक्षयोः[1] न बाध्यबाधकभावसिद्धिः। आकाश-वाय्वादि भूत - तदारब्धशब्दस्पर्शादि[2] युक्त - मनुष्यत्वादिसंस्थानसंस्थित-पदार्थग्राहि प्रत्यक्षम्; शास्त्रं तु [4]प्रत्यक्षाद्यपरिच्छेद्यसर्वान्तरात्मत्वा[5]द्यनन्त-विशेषणविशिष्टब्रह्मस्वरूप - तदुपासनाद्याराधनप्रकार - तत्प्राप्तिपूर्वक - तत्प्रसादलभ्यफलविशेष — तदनिष्टकरणमूलनिग्रहविशेषविषयम् — इति शास्त्रप्रत्यक्षयोः न विरोधः ॥

---

इत्यभिप्रायः। उपालम्भसूचको हन्तशब्दः। एवं बाध्यबाधकयोः तुल्यदोषत्वेन प्राबल्यदौर्बल्याभाव उक्तः। प्राबल्यं दौर्बल्यं चास्ताम्[6], तथाऽपि विरोधाभावात् न बाध्यबाधकत्वसिद्धिः[7]—इति वक्तुं शास्त्रप्रत्यक्षयोः विषयभेदमाह आकाश इति। [8]तदुपासनादि इति। आदिशब्देन यागदानादयो विवक्षिताः। [9]तत्प्राप्तिः—मोक्षः। तदादिकफलविशेषः—त्रिवर्गः। तदनिष्टकरणम्—पापम्। एवं तुल्यदोषत्वम्, विरोधाभावश्चोक्तः *। पूर्वमेव स्वमूलोच्छेदित्वं चोक्तम्⁕। ।वक्ष्यते च 'अनादि' इति। प्रमाणान्तरेण सदोषत्वानवगतिश्चार्थसिद्धा इति, ज्वालाभेदानुमान-वैषम्यचतुष्टयमनुसन्धेयम् ॥

---

* अस्मिन्नेव पुटे। ⁕ १०९ पुटे। । ११२ पुटे।

---

१. प्रत्यक्षशास्त्रयोः—पा०

२. भूतारब्धस्पर्शादि—पा०

३. संयुक्तदेवमनुष्यादि—पा०

४. प्रत्यक्षाद्यगोचरसिद्धसर्वान्तरात्म—पा०

५. सर्वान्तरात्मत्वसत्यत्वाद्यनन्त—पा०

६. अस्तु—पा०

७. बध्यबाधकभावसिद्धिः—पा०

८. तदुपादानादीति—पा०

९. प्राप्तिः—पा०

अनादिनिधन-अविच्छिन्नपाठसंप्रदायताद्यनेकगुणविशिष्टस्य शास्त्रस्य बलीयस्त्वं वदता प्रत्यक्षपारमार्थ्यमवश्यं[1] अभ्युपगन्तव्यम् इति, अलमनेन श्रुतिशतविततिवातवेगपराहततुच्छदृष्टियुक्तिजालतूलनिरसनेन-इत्युपरम्यते ॥

इति शाङ्करमतनिराकरणम्

अथ भास्करमतनिराकरणम्

द्वितीये तु पक्षे उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरानभ्युपगमात्,

अत्र [2]मूलोच्छेदित्वप्रसङ्गाय प्रत्यक्षपारमार्थ्यम् .... वक्तव्यम् इत्याह अनादि इति । शब्दस्वरूपग्रहण—व्युत्पत्ति—तात्पर्यलिङ्गग्रहणादेः, अपौरुषेयत्वानुमानलिङ्गस्य च प्रत्यक्षमूलत्वात् तत्पारमार्थ्यम् अवश्याभ्युपेत्यम्[3] । अन्यथा धर्मिस्वरूप—तद्बलीयस्त्वहेतुभूतगुणासिद्धिः इत्यर्थः । 'इति' शब्देन अन्येषामपि कुतर्कजालानां[4] दूषणम् उक्तप्रयोजकान्तर्भूत[5]मित्यभिप्रेतम् । श्रुतिशत इति । शतशब्दः शाखाभेदपरः । विततिशब्दः प्रतिशाखं वाक्यपरम्परापरः । वातवेगशब्देन प्राबल्यमुक्तम्[6] । तूलशब्देन परमतस्य दौर्बल्यमभिप्रेतम् । न हि वचनविरुद्धस्तर्कः प्रबलः—[7]इति स्पष्टम् । एवं ब्रह्माज्ञानपक्षः प्रतिक्षिप्तः ॥

इति शाङ्करमतनिराकरणम्

अथ भास्करमतनिराकरणम्

अथ द्वितीयश्लोकोक्तक्रमेण भास्करमतं निराकरोति द्वितीये तु इत्यादिना । मिथ्यात्वप्रयुक्तानुपपत्त्यप्रसंगेऽपि जीवब्रह्मस्वरूपैक्यनिबन्धनदोषाः भवन्त्येवेति "तु"

१. वक्तव्यम्—पा०
२. मूलोच्छेदितत्व—पा०
३. अवश्यमभ्युपेतव्यम्—पा०
४. जातानाम्—पा०
५. प्रयोजकान्तर्गतम्—पा०
६. अभिप्रेतम्—पा०
७. क्वचित् इतिर्नास्ति ।

[1]ब्रह्मण्येव उपाधिसंसर्गात् औपाधिकास्सर्वे दोषाः ब्रह्मण्येव भवेयुः। ततश्च * अपहतपाप्मत्वादिनिर्दोषश्रुतय[2]स्सर्वा विहन्यन्ते। [3]यथा [4]घटाकाशादेः परिच्छिन्नतया महाकाशाद्वैलक्षण्यम्, परस्परभेदश्च दृश्यते; तत्रस्था दोषा वा, गुणा वा अनवच्छिन्ने महाकाशे न संबध्यन्ते; एवम् उपाधिकृतभेदव्यवस्थितजीवगताः[5] दोषाः[6] अनुपहिते परे ब्रह्मणि न संबध्यन्ते इति चेत्,

शब्दाभिप्रायः। ब्रह्मण्येवोपाधिसंसर्गस्य हेतुः, उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरानभ्युपगमः। व्यतिरिक्तशब्दः [7]ईश्वरत्वाकारात् जीवत्वाकारविशेषणभेदानुवादपरः। वस्त्वन्तरशब्दः धर्म्यन्तरवाची[8]। आकारभेदाभ्युपगमेऽपि धर्म्येकत्वाभ्युपगमात्, ब्रह्मण्येवोपाधिरिति, तत्कृतदोषास्तत्रैव स्युः इत्यर्थः। ततः किमित्यत्राह—ततश्च इति। निर्दोषश्रुतिबाधं परिहरन् चोदयति यथा इति। तत्रस्था दोषा [9]वा गुणा वा इति। अल्पत्वम्, अभिगतविनियोगविशेषानर्हत्वं च घटाकाशस्य दोषः। अभिमतविनियोगविशेषार्हत्वम्, [10]महत्वं च गुणः। तदुभयं महाकाशे न प्रसजेत्। घटकरकाद्यवच्छिन्नाकारः परस्परभेदश्च दृश्यते। न हि [11]घटावच्छिन्नाकाशकार्यं करकावच्छिन्नाकाशे संभवति? एवम् उपाधिभेदकृतपरस्परभेदेन गुणदोषव्यवस्थान्विताः

* मु. उ. ७.

१. ब्रह्मण एव उपाधि—पा०
२. अपहतपाप्मत्व-निर्दोषत्वश्रुतयः, अपहतपाप्मत्वादिश्रुतयः—पा०
३. तथा—पा०
४. घटकरकादेः, घटकरकादिपरिच्छिन्न-पा०
५. जीवगतदोषाः—पा०
६. "दोषाः" इति क्वचिन्न दृश्यते।
७. ईश्वरत्वाकारजीवत्व—पा०
८. धर्मान्तरवाची—पा०
९. क्वचित् वाकारः न दृश्यते।
१०. महत्वं चेति क्वचिन्नास्ति।
११. घटत्वावच्छिन्न—पा०

15

नैतदुपपद्यते। निरवयवस्य आकाशस्य [1]अनवच्छेद्यस्य घटादिभिः छेदासंभवात्[2], तेनैवाकाशेन घटादयस्संयुक्ता इति, ब्रह्मणो[3]ऽनवच्छेद्यत्वात् ब्रह्मैव उपाधिसंयुक्तं स्यात् ॥

घटसंयुक्ताकाशप्रदेशः अन्यस्मा[4]दाकाशप्रदेशाद्भिद्यते–इति चेत्[5], [6]आकाशस्यैकस्यैव[7] प्रदेशभेदेन घटादिसंयोगात्, घटादौ गच्छति,

---

जीवाः, तद्गतगुणदोषाश्च न [8]परब्रह्मणि संबध्यन्ते[9] इति। निर्दोषत्वश्रुतीनां सावकाशत्वात् न तत्र[10] बाधप्रसङ्गः इत्यर्थः। परिहरति नैतद् इति। उरगक्षताङ्गुलिवत् ब्रह्म खण्डनार्हं चेत्, ब्रह्मणि जीवगतगुणदोषास्पर्शः उपपद्यते। ब्रह्मणो निरवयवत्वेन अच्छेद्यत्वात् ब्रह्मण्येवोपाधिसंसर्गस्स्यादिति निर्दोषश्रुतिबाध एव इत्यर्थः ॥

प्रदेशभेदेन व्यवस्थां शङ्कते [11]घटसंयुक्त इति। [12]त्वदुक्तदृष्टान्तेनैव अनियम इत्याह आकाशस्य इति। एकस्यैव इति। आकाशव्यक्तयः[13]अनेकाः सन्ति चेत, उपाधीनां गमनेऽपि आकाशव्यक्त्यन्तरासंबन्धेन गुणदोषव्यवस्था स्यात्। न च तथा आकाशव्यक्तिभेदोऽस्ति इति भावः। प्रदेशभेदेन इत्यादि।

१. अच्छेद्यस्य–पा०
२. छेदासंभवादाकाशेनैव घटादयः–पा०
३. अपच्छेद्यत्वात्–पा०
४. आकाशाद्भिद्यते–पा०
५. इति चेन्न–पा०
६. अत्राकाशस्य–पा०
७. आकाशस्यैव–पा०
८. परे ब्रह्मणि–पा०
९. संपद्यन्ते–पा०
१०. तद्बाधप्रसङ्गः–पा०
११. घटेति–पा०
१२. तदुक्त–पा०
१३. अनन्ताः, अनेकास्सन्तीति चेत्, अनेके सन्ति चेत्–पा०

[1]तस्य च [2]प्रदेशस्य अनियम इति ; तद्वत् ब्रह्मण्येव प्रदेशभेदानियमेन उपाधिसंसर्गात्, उपाधौ गच्छति संयुक्तवियुक्तब्रह्मप्रदेशभेदाच्च[3], ब्रह्मण्येव[4] उपाधिसंसर्गः[5], क्षणे क्षणे [6]बन्धो मोक्षश्च भवतीति सन्तः परिहसन्ति ॥

निरवयवस्याकाशस्यैव श्रोत्रेन्द्रियत्वेऽपि इन्द्रियव्यवस्थावत् अत्रा-प्यपि व्यवस्था उपपद्यते इति चेत्, न। वायुविशेषसंस्कृतकर्णप्रदेश-

---

एको घटः एकत्रैव तिष्ठति चेत्, प्रदेशभेदेन व्यवस्था स्यात्, न च तथा अस्ति [7]इत्यर्थः। इति, दृष्टान्ते अनियमो दर्शितः। तं दार्ष्टान्तिके दर्शयति तद्वत् इति। ब्रह्मण्येव प्रदेशभेदानियमेन उपाधिसंसर्गात्, उपाधौ संयुक्तवियुक्तब्रह्मप्रदेश-भेदाच्च—इति हेतुद्वयस्य साध्यद्वयं क्रमादुच्यते—ब्रह्मण्येवोपाधिसंसर्गः क्षणे क्षणे बन्धो मोक्षश्च भवति इति। निरवयवत्वेन अच्छेद्यत्वात्, व्यक्तिबहुत्वाभावात्, उपाधीनामेकत्रैव स्थित्यभावाच्च व्यवस्थानुपपत्तिः इत्यर्थः ॥

पुनः दृष्टान्तविशेषमुखेन व्यवस्थां शङ्कते निरवयवस्य इति। यथा निरवयवस्य आकाशस्यैव श्रोत्रेन्द्रियत्वेऽपि श्रोत्रेन्द्रियाणां परस्परव्यवस्था, [8]इन्द्रिया-निन्द्रियव्यवस्था च उपपद्यते ; तथा जीवानामन्योन्यव्यवस्था, जीवब्रह्मव्यवस्था च उपपन्ना इत्यर्थः। तत्राप्यनियमापादनेन दूषयति न इति। दार्ष्टान्तिकं दूषयितुं [9]दृष्टान्तव्यवस्थाप्रकारं दर्शयति वायु इति। [10]उच्चारणप्रयत्नजनितवायुविशेष-

---

१. तस्य चेति क्वचिन्न दृश्यते।
२. प्रदेशभेदस्यानियम इति-पा०
३. प्रदेशाभेदाच्च, प्रदेशान्न—पा०
४. एवकारः कुत्रचिन्नास्ति।
५. संसर्गात्—पा०
६. बन्धमोक्षौ स्यातामिति—पा०
७. इति भावः—पा०
८. इन्द्रियानिन्द्रियव्यवस्था—इति क्वचिन्न दृश्यते।
९. दृष्टान्ते अर्थव्यवस्थाप्रकारम्—पा०
१०. उच्चारणप्रयुक्तजनित—पा०

[1]संयुक्तस्यैव आकाशप्रदेशस्य इन्द्रियत्वात्। तस्य च [2]प्रदेशान्तराद्भेदानियमेऽपि इन्द्रियव्यवस्था उपपद्यते। [3]आकाशस्य तु, सर्वेषां शरीरेषु गच्छत्सु अनियमेन सर्वप्रदेशसंयोगः, इति ब्रह्मण्यपि[4] उपाधिसंयोगप्रदेशानियम एव[5]।

---

संयोगसंस्कृतकर्णशष्कुलीसंयुक्तस्यैव आकाशस्य[6] शब्दोपलम्भहेतुत्वमेव[7] श्रोत्रेन्द्रियत्वमिति, प्रदेशभेदानियमेऽप्युपलम्भकार्यकरत्वोपपत्तेः उपलम्भहेतोः प्रदेशस्य इन्द्रियत्वात्, तदहेतोरनिन्द्रियत्वाच्च इन्द्रियानिन्द्रियव्यवस्थोपपत्तिः। प्रदेशभेदेनाप्येकपुरुषं[8] प्रति वायुविशेषसंस्कृतकर्णसंयुक्तस्य प्रदेशविशेषस्य शब्दोपलम्भकार्यकरत्वात्, तं प्रति वायुविशेषसंस्कृतकर्णसंयुक्तस्यापि[9] नभःप्रदेशान्तरस्य अकार्यकरत्वेन इन्द्रियाणां परस्परव्यवस्थासिद्धिश्च। एवं प्रदेशभेदेनापि कदाचित्[10] कार्यकरत्वात् इन्द्रियव्यवस्थासिद्धिः इत्यर्थः। दार्ष्टान्तिकदूषणसिद्ध्यर्थम् 'अनियमेऽपि' इत्युक्तमर्थमुपपादयति **आकाशस्य तु** इति। प्रदेशव्यवस्थित्यभावरूपवैषम्यपरः 'तु' शब्दः। आकाशस्य तु सर्वशरीराणां गमनात् तत्कर्णप्रदेशभेदेन संयोगो विद्यत इति अनियमः इत्यर्थः। ततः किम् इत्यत्राह इति[11] **ब्रह्मण्यपि** इति। इतिः हेतौ। [12]**उपाधिसंयोगप्रदेशानियमः**। उपाधिसंयोगस्य प्रदेशानियमः। एवं [13]ब्रह्मण्यपि

---

१. संयुक्तस्यैवेति क्वचिन्न दृश्यते।
२. प्रदेशान्तरत्वाद्भेदादनियमे—पा०
३. आत्मनस्तु, आकाशस्य च—पा०
४. क्वचित् अपिर्न दृश्यते।
५. प्रदेश एव—पा०
६. आकाशस्येव—पा०
७. हेतुत्वं तस्यैव श्रोत्रेन्द्रियत्वम्, हेतुत्वं तदेव श्रोत्रेन्द्रियत्वम्—पा०
८. एकं पुरुषम्—पा०
९. कर्णयुक्तस्यापि—पा०
१०. कादाचित्ककार्यकरत्वात्—पा०
११. इतिर्नास्ति क्वचित्।
१२. उपाधिसंयोगाख्यप्रदेश—पा०
१३. ब्रह्मण्यपीति—पा०

आकाशस्य स्वरूपेणैव श्रोत्रेन्द्रियत्वमभ्युपगम्यापि, [1]इन्द्रियव्यवस्था उक्ता। परमार्थतस्तु आकाशो न श्रोत्रेन्द्रियम्। "वैकारिकादहङ्कारात् एकादश इन्द्रियाणि जायन्ते" इति हि[2] वैदिकाः।

यथोक्तं भगवता पराशरेण—[1]"तैजसानि इन्द्रियाण्याहुः, देवा वैकारिका दश, एकादशं मनश्चात्र, देवा वैकारिकास्स्मृताः" इति। अयमर्थः—वैकारिकः, तैजसः, भूतादिः इति त्रिविधोऽहङ्कारः।

---

[3]प्रदेशभेदानियमेन उपाधिसंयोगः[4] इत्यर्थः। आकाशप्रदेशानियमेऽपि "कदाचित् कार्यकरत्वरूपं श्रोत्रेन्द्रियत्वमिति इन्द्रियव्यवस्था उपपद्यते। एवं ब्रह्मण्यपि प्रदेशभेदानियमेन उपाधिसंयोगे[5] जीवत्वमपि कादाचित्कं स्यात्। तत् अजत्वनित्यत्वश्रुतिविरुद्धम्। अतः जीवब्रह्मव्यवस्था नोपपद्यते इत्यभिप्रायः। "परस्परव्यवस्था चानुपपन्ना; [6]उपाधीनां गमने सर्वजीवगतसुखादिप्रतिसन्धानप्रसंगात्[7]। प्रदेशभेदाद्प्रतिसन्धाने च एकोपाधौ गच्छति सति, प्रतिसन्धानाभावप्रसङ्गाच्च" इत्यनुसन्धेयम्। नभस इन्द्रियत्वाभ्युपगमेन अयं परिहार उक्तः, नेयमर्थस्थितिः इत्याह—**आकाशस्य** इति। "स्वरूपेणैव" इति पदेन भूतैरिन्द्रियाणामाप्यायनव्यावृत्तिः। तद्धि अप्रामाणिकम्? कथमर्थतत्त्वम्? इत्यत्राह **वैकारिकात्** इति।

अत्र प्रमाणमाह **यथोक्तम्** इति। वैकारिकादिपदव्याख्यानार्थं, [8]पौनरुक्त्यव्याघातशङ्कापरिहारार्थं च तं श्लोकं व्याचष्टे **अयमर्थः** इत्यादिना। [2]"सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्। वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।

---

१. इन्द्रियस्य व्यवस्था—पा॰
२. हिर्नास्ति क्वचित्।
३. प्रदेशानियमेन—पा॰
४. संयोगप्रदेशाः—पा॰
५. कादाचित्ककार्यकरत्व—पा॰
६. संयोगात्—पा॰
७. सन्धानसंगात्—पा॰
८. पौनरुक्त्यशङ्का—पा॰

1. वि. पु. १-२-४७.
2. वि. पु. १-२-३४, ३५.

स च क्रमात् सात्त्विकः, राजसः, तामसश्च । तत्र 'तामसाहङ्कारात् आकाशादीनि भूतानि जायन्ते' इति सृष्टिक्रममुक्त्वा, 'तैजसात् राजसाहङ्कारात् एकादश इन्द्रियाणि जायन्ते' इति परमतमुपन्यस्य, 'सात्त्विकाहङ्कारात् [1]वैकारिकाणि इन्द्रियाणि जायन्ते' इति स्वमत-मुच्यते[2]—देवा वैकारिकास्स्मृताः इति । देवाः—इन्द्रियाणि । एवम् [3]आहङ्कारिकाणामिन्द्रियाणाम् , भूतैश्चाप्यायनम् महाभारते उच्यते ॥

भौतिकत्वेऽपि इन्द्रियाणाम्, आकाशादिभूतविकारत्वादेव—[4]आका-

---

त्रिविधोऽयमहङ्कारो महत्तत्वादजायत" इत्यादि [5]प्रकरणपर्यालोचनया तदनुगुण व्याख्यानम् । अहङ्कारकार्यप्रतिपादकश्लोके तामसाहङ्कारप्रस्तावः[6] कथम् ? "तैजसान्याहुः" "वैकारिकास्स्मृताः" इत्येतत्र कथं घटते ? इत्यत्राह तत्र इति । तामसाहङ्कारकार्यस्य पूर्वमेवोक्तत्वात् तदत्रानुक्तम् । आहुः—इति परमतोपन्यासः । वैकारिकास्स्मृताः—इति सिद्धान्तः इत्यर्थः । इन्द्रियवाचिपदं किम् ? इत्यत्राह देवाः इति । [1]"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः" [2]"मनसा तु विशुद्धेन," [3]"सहैव सन्तं न विजानन्ति देवाः" इत्यादिषु प्रयोगानुसारेण देवशब्दः इन्द्रियवाची इत्यर्थः । कथित् इन्द्रियाणां भौतिकत्वमुच्यते इत्यत्राह एवम् इति । वैकारिका[7]दुत्पत्तिवाचिवचनाविरोधाय, आपातप्रतीतार्थत्यागेन तदाप्यायनमेवार्थ इति मन्तव्यम् इत्यर्थः ॥

आपातप्रतीतार्थपरत्वाभ्युपगमेन दूषयति [8]भौतिकत्वेऽपि इति । पूर्वं भूतानामेवेन्द्रियत्वाभ्युपगमेन परिहार उक्तः । अत्र भूतपरिणामत्वाभ्युपगमेनोच्यते—इति

---

१. वैकारिकादीन्द्रियाणि—पा०
२. सूच्यते—पा०
३. अहङ्काराणाम्, इन्द्रियाणामाहङ्कारिकाणाम्—पा०
४. आकाशभूतपरिणाम—पा०
५. प्रमाणपर्यालोचनया—पा०
६. अहङ्कारप्रस्तावः—पा०
७. उत्पत्तिवचनाविरोधाय—पा०
८. भौतिकत्वाभ्युपगमेऽपि इति—पा०

1. मु. उ. ३-८.
2. व्याससमृतिः ।
3. आर. ३-२-४.

शादिभूतपरिणामविशेषाः व्यवस्थिता एव, शरीरवत् पुरुषाणामिन्द्रियाणि भवन्ति इति ; ब्रह्मणि अच्छेद्ये निरवयवे निर्विकारे तु अनियमेन अनन्त-हेयोपाधिसंसर्गदोषो[1] दुष्परिहर[2] एव इति ; अश्रद्दधानानामेव अयं पक्षः इति शास्त्रविदो न बहुमन्यन्ते ॥

स्वरूपपरिणामाभ्युपगमात् [3]अविकारश्रुतिः बाध्यते । [4]निरवद्यता

गिरा । भूतपरिणामत्वाविशेषात् अनिन्द्रियत्वमपि स्यात घटवत्--इति शङ्कापरिहारार्थं भूतविकारत्वादेव इत्युक्तम् । 'आकाशादिभूतपरिणामविशेषाः' 'आकाशादि-भूतविकारत्वादेव' 'शरीरवत्' 'व्यवस्थिता एव' 'पुरुषाणामिन्द्रियाणि भवन्ति' इत्यन्वयः । न हि शरीरस्य भूतपरिणामविशेषत्वा[5]दशरीरत्वम् । एवं भूतपरिणामत्वेन इन्द्रियाण्यपि व्यवस्थितानि भवन्तीति, जीवस्य ब्रह्मपरिणामत्वाभावात् व्यवस्था अनुपपन्ना इत्यर्थः । ब्रह्मपरिणामत्वेऽपि जीवस्य अजत्वनित्यत्वश्रुतिबाधः[6], अकृताभ्यागम-कृतविप्रणाशप्रसंगश्च, ब्रह्मणो निर्विकारत्वश्रुतिबाधश्च[7] इत्यभिप्रायः । निरवयवत्वं, निर्विकारत्वं च अच्छेद्यत्वे[8] हेतुः । अश्रद्दधानानाम्— [9]न्यायनिरूपणाक्षमाणाम्, उपदेशमात्रतृप्तानाम् इत्यर्थः । एवं जीवब्रह्मैक्याभ्युपगमे निर्दोषत्वश्रुतिबाध उक्तः ।

अचिद्रूपेण ब्रह्मणः परिणामाभ्युपगमे दूषणमाह स्वरूप इति । अविकारत्व-श्रुतिः, निर्मलत्वश्रुतिश्च बाध्येते इत्यर्थः । न स्वरूपेण परिणामः, अपि तु

१. संसर्गदोषाः—पा०
२. दुष्परिहराः—पा०
३. अविकारत्वश्रुतिः—पा०
४. निरवद्यस्य ब्रह्मणः, निरवद्या च ब्रह्मणः—पा०
५. भूतपरिणामत्वाविशेषत्वात्—पा०
६. श्रुतिविरोधः—पा०
७. बाधप्रसंगश्च—पा०
८. अवच्छेद्यत्वे—पा०
९. न्यायनिर्णय—पा०

च ब्रह्मणः शक्तिपरिणामः इति चेत्, कथं शक्ति[1]रित्युच्यते? किं ब्रह्म-परिणामरूपा? उत ब्रह्मणोऽनन्या काऽपि? इति; उभयपक्षेऽपि स्वरूप-परिणामः अवर्जनीय एव ॥

इति भास्करमतनिराकरणम्

अथ यादवप्रकाशमतनिराकरणम्

[2]तृतीयेऽपि पक्षे जीवब्रह्मणोः [3]भेदवदभेदस्य चाभ्युपगमात्,

---

शक्तिरेव परिणमते "देवात्मशक्तिम्" इत्यादिवचनात् इति शङ्कते ब्रह्मणः इति। [4]दूषयति कथम् इति। ब्रह्मणोऽनन्या काऽपि इति। ब्रह्मस्वरूपमेव इत्यर्थः। विकल्पशिरस्त्वेन अत्यन्तभेदो न शङ्कितः, तदनभ्युपगमात्। शिरोद्वयेऽपि दूषणमाह उभय इति। एवम् भास्करमतं प्रतिक्षिप्तम् ॥

इति भास्करमतनिराकरणम्

अथ यादवप्रकाशमतनिराकरणम्

अथ यादवप्रकाशमतं निरस्यति तृतीयेऽपि इत्यादिना।

भास्कर—यादवप्रकाशाभ्यां स्वाभिमतार्थसाधकप्रमाणसिद्ध्यर्थम्, बन्धमोक्षादि-व्यवस्थासिद्ध्यर्थं च, प्रपञ्चस्य पारमार्थ्यमभ्युपेतम्। तत्र मुक्तावभेदश्रुतेः, भेदस्यौपाधिकत्वम्, अभेदस्य स्वाभाविकत्वं च जीवब्रह्मणोरभ्युपेतम्। अचिद्ब्रह्म-णोस्तु सर्वस्य ब्रह्मात्मकत्वश्रुतेः, निर्मलत्वादिश्रुतेः उपाध्यन्तराभ्युपगमे [5]अनवस्थानाच्च, भेदाभेदौ स्वाभाविकावभ्युपगतौ[6] भास्करमते। यादवप्रकाशमते तु मुक्तावपि भेदनिर्देशश्रुतेः जीवब्रह्मणोश्च भेदाभेदौ [7]स्वाभाविकावभिमतौ—इति भिदा ॥

---

१. इतिर्नास्ति क्वचित्।
२. तृतीयपक्षेऽपि—पा०
३. भेदस्यानभ्युपगमात्—पा०
४. दूषणमाह—पा०
५. नावस्था, न व्यवस्था—पा०
६. अभ्युपेतौ—पा०
७. स्वाभाविकाविति मताभिमता, स्वाभाविकाविति मताभिदा स्थितिः, स्वाभाविकाविति मताविति भिदा, स्वाभाविकाविति मताभिदा—पा०

तस्य च [illegible], सौभरिभेदवत्, स्वावतारभेदवच्च[1] ईश्वरस्य ईश्वरभेदत्वात् सर्वे जीवगता दोषाः ईश्वरस्य स्युः ॥

एतदुक्तं भवति—[2] ईश्वरः स्वरूपेण । सुर–नर–तिर्यक्–स्थावरादि-भेदेन अवस्थितः[3] इति हि[4] तदात्मकत्ववर्णनं क्रियते ? तथा सति एक-

तत्र भास्करमतनिक्षेपानन्तरं यादवप्रकाशमतं निरस्यते तृतीयेऽपि इति । तस्य च तद्भावात् । ब्रह्मणो जीवसमानात् । एकजीवभेदस्य[5] सौभरिदृष्टान्तः । ईश्वरभेदस्य स्वावतारदृष्टान्तः । न हि सौभरिशरीरभेदात् जीवभेदः ? न च नृसिंह–वामनादीनामनीश्वरत्वम् ?

यथा स्वमते भेदश्रुतिमुख्यार्थापरित्यागेन[6] स्वाभाविकभेदाभ्युपगमात् ब्रह्मणि जीवगतदोषाद्यस्पर्शः[7], तथा अस्माभिरपि स्वाभाविको भेदोऽभ्युपगतः, [8]न त्वाविद्यकः, औपाधिको वेति अस्मत्पक्षेऽपि न कश्चिद्दोषः । अभेदश्रुतेरपि मुख्यार्थस्वीकारे यो दोषः त्वया आपाद्यते, [9]सः त्वत्पक्षेऽपि तुल्यः ; अभेदश्रुति-मुख्यार्थस्य त्वत्पक्षेऽपि स्वीकृतत्वात् । तस्मात्, अस्मान् प्रति अयं दोष आपादयितुं न युज्यते[10] । किञ्च चिदचिदीश्वराः ब्रह्मांशभूताः, ब्रह्म तु तदंशि । तस्मात्, यथा मृदंशभूतघटशरावादीनाम् अन्योन्यगुणदोषासङ्करः, एवं ब्रह्मांशभूतयोः जीवेश्वरयोरपि गुणदोषासङ्करः इति शङ्कायामाह एतदुक्तम् इति । "ईश्वरः स्वरूपेणैव" इत्यनेन ईश्वरस्य ब्रह्मांशत्वं निरस्तं भवति । जगत्कारणत्वं हि[11] ब्रह्मलक्षणम् ? कारणवाक्यानि च [1]"सदेव सोम्येदमग्र आसीत्", [2]"ब्रह्म वा

१. भेदत्वाच्च—पा०
२. ईश्वरस्य—पा०
३. अवस्थितिः—पा०
४. हिः नास्ति क्वचित् ।
५. सौभरिः दृष्टान्तः—पा०
६. मुख्यार्थपरित्यागेन—पा०
७. जीवगतदोषास्पर्शः—पा०
८. न त्वविद्या, नत्वाविद्यः—पा०
९. स च—पा०
१०. न शक्यते—पा०
११. हिः नास्ति क्वचित् ।

1. छा. उ. ६-२-१.
2. बृ. उ. ३-४-११.

मृत्पिण्डारब्धघटशरावादिगतान्युदकाहरणादीनि सर्वकार्याणि यथा तस्यैव भवन्ति, एवम्, सर्वजीवगतसुखदुःखादि सर्वम् ईश्वरगतमेव स्यात् इति ॥

[1]घटकरकादिसंस्थानानुपयुक्तमृद्द्रव्यं यथा कार्यान्तरानन्वितम्, एवमेव [2]सुर-पशु-मनुजादिजीवत्वानुपयुक्तेश्वरः सर्वज्ञः सत्यसङ्कल्पत्वादि-

---

इदमेकमेवाग्र आसीत्", [1]"आत्मा वा इदमेक एवाऽग्र आसीत्", [2]"एको ह वै नारायण आसीत्", "विष्णुस्तदासीद्धरिरेव निष्कलः", [3]"तमीश्वराणां परमं महेश्वरम्" इत्यारभ्य, [4]"स कारणं करणाधिपाधिपः" इत्यादीनि[3] ऐककण्ठ्येन ईश्वरस्य जगत्कारणत्वं वदन्ति । ईश्वरस्य च [5]"न तत्समश्चाभ्यधिकश्च दृश्यते" इति समाभ्यधिकराहित्यं च श्रूयते । तच्च ईश्वरस्य ब्रह्मांशत्वे तु न घटते । अंशात् अंशिनोऽधिकत्वेन[4] ईश्वरादप्यधिकस्य संभवात् । तस्मात्, समाभ्यधिकराहित्यात् जगत्कारणत्वाच्च ईश्वर एव ब्रह्मेति, ईश्वरस्य ब्रह्मांशत्वमनुपपन्नम्—इत्यभिप्रायेण "ईश्वरः स्वरूपेण[5]" इत्युक्तम् । न हि त्वया अस्मन्मत इव आत्मशरीरभावेन तादात्म्यं वर्ण्यते? अपि तु ईश्वरः स्वरूपेणैव सुरनरादिरूपेण स्थित इति हि तादात्म्यं वर्ण्यते? तथा सति मृत्पिण्डारब्धघटादिगतोदकाहरणादिकार्याणि यथा मृत्पिण्डस्यैव भवन्ति, एवम्, [6]सर्वजीवगतसुखदुःखभागीश्वरस्स्यात् इत्यर्थः ॥

पुनः, परमतं शङ्कते [7]"घटकरकादि" इति । यद्यपि [8]कार्यत्वेनोपयुक्तमृदंशस्पर्शि घटादिगतोदकाहरणादि भवति, तथाऽपि कार्यत्वेनानुपयुक्तमृदंशान्तर-

---

१. घटशरावादि—पा०
२. सुरनरजीवत्व, सुरनरमनुजादिजीवत्व, सुरनरपशुमनुजादिजीवत्व, सुरपशुमनुष्यजीवत्व—पा०
३. इत्यादिनैककण्ठ्येन—पा०
४. अधिकत्वेनेति क्वचिन्न ।
५. स्वरूपेणैवेत्युक्तम्—पा०
६. सर्वजगतस्सर्वसुख, सर्वजीवगतसर्वसुख—पा०
७. घटशरावादि—पा०
८. कार्यकरत्वेन—पा०

१. ऐ. उ. १-१-१.
२. महो. उ. १.
३. श्वे. उ. ६-१३.
४. श्वे. उ. ६-१९.
५. श्वे. उ. ६-१६.

गुणाकरः इति चेत्, सत्यम्। "[1]स एव [2]ईश्वरः [3]एकेनांशेन कल्याणगुणाकरः, स एव [4]च [5]अन्येनांशेन हेयगुणाकरः" इत्युक्तम्, द्वयोरंशयोः ईश्वरत्वाविशेषात्॥

द्वावंशौ व्यवस्थितौ इति चेत्, कस्तेन लाभः? एकस्यैव [6]एकेनांशेन नित्यदुःखित्वात्, अंशान्तरेण सुखित्वमपि न ईश्वरत्वाय[7] कल्पते। यथा देवदत्तस्य एकस्मिन् हस्ते चन्दनपङ्कानुलेपः[8] केयूरकटकाङ्गुलीयकालङ्कारः, [9]एतस्यैवान्यस्मिन् हस्ते मुद्गराभिघातः, कालानलज्वालानुप्रवेशश्च, तद्वदेव [10]ईश्वरस्य[11] स्यात् इति, ब्रह्माज्ञानपक्षादपि

स्पर्शि न भवति। तथा जीवत्वानुपयुक्तेश्वरांशे जीवगतदोषाः न प्रसजन्ति इत्यर्थः। परिहरति सत्यम् इति। तत्रापि अंशिन एकत्वात् ईश्वरस्यैव दोषः प्रसजति इत्यर्थः॥

जीवेश्वरांशयोः व्यवस्थितत्वात् जीवगतदोषः न ईश्वरस्पृक् इति शङ्कते द्वावंशौ इति। दूषयति कः इति। ईश्वरस्य चेतनत्वेन स्वांशजीवगतसर्वदुःखप्रतिसन्धातृत्वात् अंशान्तरेण सुखित्वं न ईश्वरत्वाय भवति इत्यर्थः। तत्र दृष्टान्तमाह यथा इति। ऐहिकाल्पसुखस्य, मोक्षसुखस्य च स्थाने चन्दनानुलेपः, केयूराद्यलङ्कारश्च। ऐहिकाल्पदुःख--नारकानन्तदुःखस्थाने मुद्गराभिहतिः[12], कालाग्नि-

१. "स एव" इति क्वचित् न दृश्यते।
२. 'ईश्वरः'—क्वचिदेतन्नास्ति।
३. तेनांशेन—पा०
४. चकारः क्वचिन्नास्ति।
५. एकेनांशेन—पा०
६. एकांशेन—पा०
७. ईश्वराय—पा०
८. पङ्कानुलेपनकेयूर—पा०
९. तस्यैव—पा०
१०. ईश्वरः—पा०
११. ईश्वरस्यापीति ब्रह्माज्ञान, ईश्वरस्यापि ब्रह्माज्ञान—पा०
१२. मुद्गराभिहतिकालाग्निप्रवेशौ—पा०

पापीयानयं भेदाभेदपक्षः ; अपरिमितदुःखस्य पारमार्थिकत्वात्, संसारिणामनन्तत्वेन[1] दुरुत्तरत्वात् । तस्मात् विलक्षणोऽयं जीवांशः इति चेत्, आगतोऽसि[2] तर्हि मदीयं पन्थानम् ॥

ईश्वरस्य स्वरूपेण तादात्म्यवर्णने स्यादयं दोषः । आत्मशरीरभावेन तु तादात्म्यप्रतिपादने न कश्चिद्दोषः । प्रत्युत [3]निखिलजगन्नियमनादिभिः[4] महान् [5]गुणगणः प्रतिपादितो भवति । सामानाधिकरण्यं च मुख्य-वृत्तम् ॥

---

प्रवेशश्च । भेदाभेदपक्षस्य पापीयस्त्वमुपपादयति अपरिमित इति । औपाधिक-भेदादिनाऽपि तुल्यमिदं पापीयस्त्वम् । ततोऽप्याधिक्यबुद्ध्या पश्चात्पठनत्वात् , अत्रेदं दूषणमुक्तम् । अगत्या परेण विलक्षणत्वाभ्युपगमे[6] शङ्कते तस्मात् इति । अभ्युपगमेन प्रतिपत्तिं दूषयति आगतोऽसि इति । अपसिद्धान्तप्रसङ्ग इत्यर्थः ॥

भवत्पक्षे[7] तु अभेदश्रुतिः[8] अमुख्यार्था स्यात् । मुख्यार्थस्वीकारे उक्तदोषा-पातस्स्यात् इति शङ्कायां [9]तं परिहर्तुं स्वरूपेण तादात्म्यवर्णने तं दोषमनुमन्यते ईश्वरस्य इति । तर्हि कथं भवता तादात्म्यं वर्ण्यते ? इत्यत्राह आत्म इति । न केवलं[10] दोषाभावः, मङ्गलगुणसिद्धिः इत्याह प्रत्युत इति । आदिशब्देन धारकत्वशेषित्वाद्युच्यते । तर्हि अमुख्यत्वं स्यादित्यत्राह सामानाधिकरण्यं च इति ॥

---

१. अनन्तत्वेनापि—प्रा०
२. आगतोऽसि हि तर्हि—पा०
३. निखिलचेतन—पा०
४. नियमनादिभि—पा०
५. गुणप्रतिपादितः—पा०
६. अभ्युपगतिमाशङ्कते, अभ्युपगतदूषण-माशङ्कते—पा०
७. तुर्नास्ति क्वचित् ।
८. अभेदश्रुतेः अमुख्यार्थस्स्यात्—पा०
९. तत्परिहर्तुम्—पा०
१०. केवलदोषाभावः—पा०

अपि च एकस्मिन्[1] वस्तुनि [2]हि भिन्नाभिन्नत्वं विरुद्धत्वात् न सं[illegible]ति [illegible] । घटस्य [3]घटाद्भिन्नत्वे सति तस्य [4]तादात्म्याभावः । अभिन्नत्वे सति [5]तस्य च भावः इति, एकस्मिन् काले च, एकस्मिन् देशे च, एकस्य [6]हि पदार्थस्य युगपत् तद्भावः असद्भावश्च विरुद्धः । जात्यात्मना[7] [illegible], व्यक्त्यात्मना च [illegible] इति चेत्[8], जातेः [9]मुण्डेन

[illegible], [illegible] भेदा[illegible]परत्वं [illegible] । इदानीं सामान्येन सर्वस्य वस्तुनो [illegible] निरस्यति । अपि च [illegible] । निर्विशेषवस्तुनिरासे प्रसङ्गात् उक्तम् इत्यर्थः । तत्र [10]विरुद्धत्वहेतोः सिद्धवत्कारेण असंभव उक्तः । अत्र तदेव विरुद्धत्वं कथम् ? इति शङ्कायां तदुपपाद्यते घटस्य इति । घटस्य [11]घटाद्भिन्नत्वं नाम तस्य तदभावः । अभिन्नत्वं नाम तत्र तस्य भावः—इत्यर्थः । ततः किम् ? इत्यत्राह एकस्मिन् इति । आकारभेदादविरोधं शङ्कते जात्या इति । जातिमभ्युपगच्छद्भिः [illegible]भेदाभेददूषणेन, तामनभ्युपगच्छद्भिः आकारभेदाभेदोऽपि प्रतिक्षिप्तस्स्यात् इत्यभिप्रायेण [12]जात्यात्मना इत्याद्युच्यते । अत्र जातिव्यक्त्योः किमभिन्नत्वम् ? उत भिन्नत्वम् ? उत भिन्नाभिन्नत्वम् ? इति विकल्पमभिप्रेत्य अभिन्नत्वपक्षे दूषणमाह जातेः इति । जातिव्यक्त्योरभेदश्चेत् खण्डमुण्डव्यक्तिद्वयेन जातेरभेदात् खण्डस्य मुण्डत्वप्रसङ्ग इत्यर्थः । तत्र भिन्नत्वपक्षे व्यक्तिगतो भेदः, जातिगतश्चाभेद इति न

१. एकस्येव—पा०
२. हिर्नास्ति क्वचित् ।
३. घटाद्भिन्नत्वे—पा०
४. तस्य तादात्म्यतया तादात्म्यभावः—पा०
५. तस्य सद्भावः, तस्य तादात्म्यतया भावः—पा०
६. हिर्नास्ति क्वचित् ।
७. जात्यात्मना च—पा०
८. इति चेन्न—पा०
९. मुण्डाभेदे सति—पा०
१०. विरुद्धहेतोः—पा०
११. घटाद्भिन्नत्वम्—पा०
१२. जात्याद्युच्यते—पा०

व्यक्त्या[1] चाभेदे सति, खण्डे मुण्डस्यापि सद्भावप्रसङ्गः। [2]खण्डेन च जातेरभिन्नत्वे सद्भावः; भिन्नत्वे असद्भावः; अश्वे महिषत्वस्यैवेति[3] विरोधो दुष्परिहर एव॥

जात्यादेः वस्तुसंस्थानतया वस्तुनः प्रकारत्वात्, प्रकारप्रकारिणोश्च पदार्थान्तरत्वम्, प्रकारस्य पृथक्सिद्ध्यनर्हत्वम्, पृथगनुपलम्भश्च, तस्य च

---

एकस्य द्व्यात्मकतोति दूषणस्य स्पष्टत्वात् तदनुक्तम्। भिन्नाभिन्नत्वपक्षे दूषणमाह [4]खण्डेन च इत्यादिना। जातेः मुण्डस्य च अभेदात् [5]खण्डस्य मुण्डत्वप्रसङ्गः *॥

जातेः मुण्डस्य च भेदात् अश्वस्य[6] गजत्वाभाववत्, खण्डस्य मुण्डत्वाभावप्रसङ्गः इति विरोधः। यद्वा, जातिव्यक्त्योः अभेदे खण्डस्य जातिरूपत्वप्रसङ्गः। भेदे खण्डस्य जातिरूपत्वाभावप्रसङ्गः इति। एवं युगपत् एकत्र एकस्य भावाभावविरोधो दुष्परिहर इत्यर्थः। जातिरूपेणाभेदः, व्यक्तिरूपेण भेदः इत्येवंरूपभेदाभेददूषणेन अवस्थात्मना भेदः, द्रव्यरूपेण अभेदः इत्येवंरूपभेदाभेदश्च यादवप्रकाशाभिमता निरस्तो भवति, तुल्यन्यायत्वात्। यद्वा, जातिशब्दो द्रव्यपरः, व्यक्तिशब्दः [7]अवस्थापरः [8]इति योजनायम्। न हि [9]दृष्टे अनुपपन्नं नाम? तस्मात् भेदाभेदयोः प्रतिपन्नत्वेन नोक्तदोषप्रसङ्गः इति शङ्कायां प्रतीतिः न तथेत्याह जात्यादेः इति। प्रथमपिण्डग्रहणे अभेदेन ग्रहणम्, भेदाभेदसाधनत्वेन हि परैरुच्यते? तदयुक्तं प्रकारप्रकारिणोश्च पदार्थान्तरत्वम् इति। वस्तुसंस्थानतया इति। संस्थानशब्दः

---

* "तदभिन्नाभिन्नस्य तदभिन्नत्वम्" इति नियमेन मुण्डव्यक्त्यभिन्नजातेः खण्डाभेदवत्त्वेन खण्डस्य मुण्डत्वप्रसंग इत्यर्थः॥

१. "व्यक्त्या"—क्वचिदेतन्नास्ति।
२. खण्डे च जातेः—पा.
३. महिषस्यैवेति—पा.
४. खण्डे चेत्यादिना—पा.
५. खण्डत्वस्य—पा.
६. अश्वे, अश्वरूपे—पा.
७. द्रव्यावस्थापरः—पा.
८. इत्येवं योजनीयम्—पा.
९. दृष्टोऽनुपपन्नः, दृष्टे नोपपन्नं नाम—पा.

संस्थानस्य च अनेकवस्तुषु प्रकारतया अवस्थितिश्च इत्यादि पूर्वमेवोक्तम् ॥

"[1] सोऽयम्" इति बुद्धिः प्रकारैक्यात्, "अयमपि

अपृथक्सिद्ध[2]धर्मवाची । वस्तुसंस्थानतया—वस्तुनः प्रकारत्वात् अपृथक्सिद्धधर्मत्वेन वस्तुनः विशेषणत्वादित्यर्थः । इदम्, इत्थम्—इति प्रकारप्रकारिभावेन प्रतीतेः नात्र अभेद इति स्पष्टम् ॥

"[3]पृथक्सिद्ध्यनर्हत्वम्" इत्यनेन सहोपलम्भनियमः प्रत्युक्तः । मत्वर्थीय-प्रत्ययनिरपेक्षसामानाधिकरण्यमपि, अपृथक्सिद्धधर्मवाचित्वात् इत्युक्तं भवति । एक-शब्दानुविद्धप्रत्ययः धर्म्यैक्यात्, न तु धर्मधर्मिणोरभेदात् इति स्फुटतरम् । "संस्थानस्य च अनेकवस्तुषु[4] प्रकारतया अवस्थितिश्च" इत्यनेन प्रथमपिण्डग्रहणेऽपि संस्थानस्य [5]ग्रहणमस्तीत्युक्तं भवति । अन्यथा द्वितीयपिण्डग्रहणे अनुवृत्तिः न हि[6] बोद्धुं शक्यते । निर्विकल्पकप्रत्यक्षेणाभेदेन[7] गृहीतम् इति चेत्, तदपि प्रत्युक्तम् इति आदिशब्दाभि-प्रायः ॥

अनुवृत्ता जातिः न व्यावृत्तं संस्थानं भवति[8] इति शङ्कायां संस्थानमेव जातिरित्युपपादयति सोऽयमिति इति । प्रकारैक्यात् । एकप्रकारत्वात्; तुल्य-प्रकारत्वात् इत्यर्थः ॥

संस्थानातिरेकेण[9] जातिर्नाम[10] न काचिदुपलभ्यते । अनुवृत्तव्यवहारेण कल्प्यते चेत्, तदयुक्तम्; अनुवृत्तव्यवहारस्य अन्यथासिद्धेः । अश्वगजमहिषगवादिषु

४ ६२—६५ पुटेषु ।

१. सोऽयं देवदत्त इति बुद्धिः—पा०
२. संबन्धवाची—पा०
३. पृथक्स्थित्यनर्हत्वम्—पा०
४. अनेकेषु प्रकारतया—पा०
५. ग्रहणमप्यस्तीति, ग्रहणमुक्तं भवति-पा०
६. हिर्नास्ति क्वचित ।
७. प्रत्यक्षाभेदेन—पा०
८. भवतीति क्वचिन्न दृश्यते ।
९. संस्थानव्यतिरेकेण—पा०
१०. "जातिर्नाम"—क्वचिदेतन्न दृश्यते ।

दण्डी" इति बुद्धिरस्तु । अयमेव च[1] जात्यादिः प्रकारो वस्तुनो भेद [2]इत्युच्यते, तद्योग एव [3]वस्तु भिन्नम्, इति व्यवहारहेतुरित्यर्थः । स च 'इयं जातिरियं जातिः' इति अनुवृत्तव्यवहारोऽस्ति[4] । न हि जातिषु जात्यन्तरं कल्प्यते । 'इयं व्यक्तिरियं व्यक्तिः' इति व्यवहारेण व्यक्तिषु न व्यक्तित्वजातिः कल्प्यते ? स हि व्यवहारः [5]सादृश्यात । तस्मात् [illegible]कस्य अन्यथासिद्धत्वात संस्थानातिरिक्तस्य अदर्शनात , संस्थानमेव जातिः इत्यर्थः ॥ ०

सोऽयमिति बुद्धिः—[6]अनुवृत्तविषयव्यवहारान्विता बुद्धिः, तज्जातीयत्व-बुद्धिः, अयमपि गौः इति [7]बुद्धिरित्यर्थः । दण्डी इति बुद्धिरस्तु इति । अयं दण्डी, अयमपि[8] दण्डीति व्यवहारे दण्डित्वं नाम जातिः न ह्यस्ति इत्यर्थः । गुणक्रियास्वपि[9] [10]अनुवृत्तव्यवहारोऽपि प्राभाकराणां प्रतिबन्दीत्वेन वक्तव्यः । प्रतियोगिबुद्धिनिरपेक्षो जात्यादिः, प्रतियोगिसापेक्षो भेदो भवितुं नार्हति इति शङ्कायां, जात्यादिरेव भेद इति साधयति अयमेव च जात्यादिः इति । जात्यादेः भेद इति किं संज्ञाकरणं[11] देवदत्तादिवत्, इति शङ्कायां विवृणोति तद्योग एव इति । अभेदबुद्धिविरोधी हि भेदः ? जात्यादिग्रहणे अभेदबुद्धि-निवृत्तेः जात्यादिरेव भेदः इत्यर्थः । जात्यादिविषयभेदव्यवहारे हेत्वन्तरापेक्षया अनवस्थाप्रसङ्गः इत्यत आह स च इति । स्वपरनिर्वाहको जात्यादिरित्यर्थः ।

१. चकारः क्वचिन्न दृश्यते ।
२. इतिर्नास्ति क्वचित् ।
३. वस्तुनो भिन्नमि, वस्तुनो भिन्नमिति, वस्तु भिन्नमिति व्यवहारात स च—पा०
४. हिर्नास्ति क्वचित् ।
५. सौसादृश्यात्—पा०
६. वृत्तिविषय—पा०
७. बुद्धिवदित्यर्थः—पा०
८. अपिर्नास्ति क्वचित्
९. गुणक्रियासु—पा०
१०. अनुवृत्तिर्व्यवहारोऽपि—पा०
११. संज्ञाकरणं किं देवदत्तादिवत्—पा०

वस्तुनो भेदव्यवहारहेतुः स्वस्य च[1], संवेदनवत्; यथा संवेदनं [2]वस्तुनो व्यवहारहेतुः, स्वस्य व्यवहारहेतुश्च भवति। अत एव[3] सन्मात्र-ग्राहिप्रत्यक्षं न भेदग्राहि–इत्यादिवादा [4]निरस्ताः, जात्यादिसंस्थितस्यैव वस्तुनः प्रत्यक्षेण गृहीतत्वात्, तस्यैव संस्थानरूपजात्यादेः[5] प्रतियो-

संवेदनवत् इति। संवेदनस्य स्वपरव्यवहारहेतुत्वं हि पराभ्युपगतम्? तदेव विवृणोति यथा इति। उक्तार्थेनैव परोक्तभेदस्य प्रमाणानुपपत्तिः, प्रमेयानुपपत्तिश्च परिहृता इत्याह अत एव इति। आदिशब्देन प्रमेयानुपपत्तिः विवक्षिता। 'अत एव' इत्यभिप्रेतमर्थं विवृणोति जात्यादि इति। प्रत्यक्षज्ञानमेकक्षणवर्त्यपि तस्मिन्नेव क्षणे जात्यादिविशिष्टमेव वस्तु गृह्णाति–इत्यनेन प्रमाणानुपपत्तिः निरस्ता। स्वरूपधर्म-विकल्पेन हि प्रमेयानुपपत्तिः। तत्र स्वरूपव्यवहारवत्, भेदव्यवहारप्रसङ्गः गोत्वादिव्यवहारादेव प्रत्युक्तः। भिन्न इति [6]शब्दव्यवहारविशेषस्य प्रतियोग्य-पेक्षत्वं[7] 'दाराः, कलत्रम्, [8]जलम्, आपः' इत्यादिषु स्त्रीत्वबहुत्वपुंस्त्वादिवत् शब्दस्वभावायत्तम् इति नार्थस्वरूपदोषः, हानादिव्यवहारे, जात्यादिशब्दव्यवहारे च प्रतियोगिनिरपेक्षत्वात् इत्ययमर्थोऽतिस्पष्टत्वा[9]दभिप्रेतः। स्वपरनिर्वाहकत्वाभ्यु-पगमेन अनवस्था च परिहृता, जात्यादेरेव भेदत्वात् अन्योन्याश्रयश्च परिहृतः इत्यर्थः।

१. स्वयं च–पा.
२. अन्यव्यवहारहेतुः, वस्तु भिन्नमिति व्यवहारात् स च–पा.
३. अत एव च–पा.
४. परास्ताः–पा.
५. जात्यादिः–पा.
६. शाब्दव्यवहार–पा.
७. प्रतियोग्यपेक्षत्वात्–पा.
८. जलमिति क्वचिन्न दृश्यते।
९. इत्यभिप्रेतः, इत्यभिप्रेतः–पा.

न्यपेक्षया भेदव्यवहारहेतुत्वाच्च[1] । स्वरूपपरिणामदोषश्च पूर्वमेवोक्तः * ॥

इति यादवप्रकाशमतनिराकरणम्

---

अथ स्वमतस्थापनम्

[1] "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः",

---

एवं जीवब्रह्मस्वरूपैक्ये निर्दोषत्वश्रुतिबाध उक्तः । अचिद्ब्रह्मैक्यप्रयुक्त-दोषोऽपि भास्करमत इव अत्राप्यापतती[2]त्याह स्वरूप इति । दोषश्च अविकारत्व-निरवद्यत्वश्रुतिबाधः पूर्वमुक्तः † । एवं द्वितीयश्लोकार्थो विवृतः ॥

इति यादवप्रकाशमतनिराकरणम्

---

अथ स्वमतस्थापनम्

अथ प्रथमश्लोकार्थं [3]पूर्वमीषद्विवृतम्, महाविस्तरेण वक्तुमारभते । तत्र "तत्त्वमसि" इति सामानाधिकरण्यस्य भेदश्रुति—घटकश्रुत्यविरोधेन अर्थं वक्ष्यन् तदुपयोगिनीः[4]घटकश्रुतीरुदाहरति [5]यः पृथिव्याम् इत्यादिना । "यः पृथिव्याम्" इति काण्वशाखावाक्यम् । "य आत्मनि" इति माध्यन्दिनशाखा-वाक्यम् । अनेन वाक्यद्वयेन अचिज्जीवान्तर्यामित्वं सिद्धम् । [2]"उभयेऽपि [6]हि भेदेनैनमधीयते" इति सूत्रानुसारात् उभयवाक्योपादानम् । तत्र कारणावस्थस्यापि अक्षरस्य[7] अन्तर्यामित्वं वक्तुं, देवताविशेषं[8] ज्ञापयितुं च सुबालोपनिषद्वाक्यमाह

---

* ११९–१२० पुटयोः ॥ † ११९ पुटे (स्वरूपपरिणामाभ्युपगमात्) ।

---

१. हेतुः—पा०
२. आपतेदित्याह—पा०
३. "पूर्वम्" इति क्वचिन्न दृश्यते ।
४. तदुपयोगिघटकश्रुतिः—पा०
५. यः पृथिव्यामित्यादिना—क्वचिदेतन्न ।
६. हिर्नास्ति क्वचित् ।
७. अक्षरस्य—क्वचिदेतन्नास्ति ।
८. देवताविशेषणम्—पा०

1. बृ. उ. ५-७-३.
2. ब्र. सू. १-२-२१.

[1]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः", [2]"यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरम्, यं पृथिवी न वेद" इत्यादि, [3]"योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे संचरन् यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", [4]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति", [5]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा", [6]"तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादि, [7]"सत्यं चानृतं च सत्यमभवत्", [8]"अनेन

---

यः पृथिवीम् इति। योऽक्षरमित्यारभ्य उदाहर्तव्येऽपि "यः पृथिव्याम्" [1]इत्याद्युपादानं प्रकरणज्ञापनार्थम्। "अन्तर्याम्यमृतः" इत्यत्र अमृतशब्दस्य, "एष सर्वभूतान्तरात्माऽपहतपाप्मा" इत्यत्र अपहतपाप्मशब्दस्य च अर्थः—तद्गतदोषासंस्पृष्टत्वमिति[2], तदुक्तेः प्रदर्शनपरत्वं दर्शयितुं "द्वा सुपर्णा" [3]इत्याद्युदाहृतम्, न तु भेदश्रुतित्वात्। भेदश्रुतयो हि उत्तरत्र वक्ष्यन्ते। अन्तः प्रविष्टः इति। [4]इदमपि घटकवाक्यम्। [5]सर्वात्मत्वं तदन्तर्यामित्वात्, न तु स्वरूपैक्यात् इति हि अस्यार्थः[6]। तत्तच्छब्दवाच्यत्वं तत्तदनुप्रवेशकृतम्, न तु स्वरूपैक्यकृतम् इति स्पष्टार्थं वाक्यमाह तत्सृष्ट्वा इति। तत्तदनुप्रवेशोऽपि तद्गतदोषास्पृष्टत्वमाह सत्यं चानृतं च सत्यमभवत् इति वाक्यम्। चिदचिदनुप्रवेशेन तत्तच्छब्दवाच्यमपि ब्रह्म 'सत्यमभवत्'—अप्रच्युतस्वस्वभावम् अभवत् इत्यर्थः। नामरूपव्याकरणश्रुतेरपि घटकत्वात् तामाह अनेन इति। जीवेन इति निर्देशस्य

---

१. इत्याद्युपपादनम्—पा०
२. इति प्रदर्शयितुम्—पा०
३. इत्युदाहृतम्—पा०
४. इयमपि—पा०
५. सर्वात्मकत्वम्—पा०
६. तस्यार्थः—पा०

1. माध्य. शा. बृ. उ. ५-७-२२.
2,3. सु. उ. ७.
4. मु. उ. ३-१-१.
5. आर. ३-प्र. २१.
6,7. तै. उ. आ. ६ अनु.
8. छा. उ. ६-३-२.

जीवेनात्मना[1] " इत्यादि, [1] " पृथगात्मान प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ", [2] " भोक्ता भोग्यं प्रेरितारं च मत्वा[2] सर्वं प्रोक्तं त्रिविधं[3] ब्रह्म एतत् ", [3] " नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ", [4] " प्रधानक्षेत्रज्ञपतिर्गुणेशः ", [5] " ज्ञाज्ञौ द्वा वजावीशनीशौ " इत्यादिश्रुतिशतैः, तदुपबृंहणैः [6] " जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ",

---

अनुप्रवेशकृतत्वं पूर्वोदाहृतवाक्यैः[4] स्पष्टम्। भेदश्रुतिमाह पृथक् इति। तेन जुष्टः – ब्रह्मणा अनुगृहीतः। [5]ततः— पृथक्त्वज्ञानात्, अमृतत्व[6]मेति इत्यर्थः। भोक्ता इति। भोक्तारमित्यर्थः। भोक्तृभोग्यनियन्तॄन् यथावत् ज्ञात्वा, त्रिविधम् एतत् ब्रह्म सर्वं मया तव प्रोक्तम् इत्यर्थः। आत्मनां नित्यत्वं बहुत्वं च दर्शयति नित्य इति। प्रधान इत्यादि। स्पष्टम्। स्थैर्यं ते वसुधातलम् इति। वसुधातलं तव स्थैर्यम्। भूम्याः[7]स्थिरत्वस्वभाववत्त्वं[8] त्वदधीनमित्यर्थः। सामानाधिकरण्यप्रयोगः कार्यकारणभावात् लाक्षणिकः। [7] " अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः " इति प्रकरणस्थवाक्यानामयमेवार्थः। [8] " यस्य प्रसादजो ब्रह्मा, रुद्रश्च क्रोधसंभवः ", [9] " यस्य प्रसादादहमच्युतस्य भूतः प्रजासर्गकरोऽन्तकारी। क्रोधाच्च रुद्रः " [9]इत्यत्र देवताविशेषेषु प्रसादक्रोधहेतुकत्वदर्शनात्। कार्यकारणभावेऽपि सामानाधिकरण्यप्रयोगो दृष्टः, [10] " ब्राह्मणोऽस्य मुखमासीत् " इत्यादिषु [11] " पद्भ्यां भूमिः " इति वाक्यैकार्थ्यात्। तस्मात् " स्थैर्यं ते वसुधातलम् " इत्यादिवाक्येन

---

१. ....आत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इत्यादि–पा०
२. मत्वा जुष्टस्ततस्तेनामृतत्वमेति–पा०
३. ब्रह्ममेतत्–पा०
४. वाक्ये–पा०
५. ततः – एतन्नास्ति क्वचित्।
६. एवेत्यर्थः–पा०
७. स्थिरत्वस्वभाववत्त्वम्–पा०
८. स्वभावत्वं च, स्वभाववत्वं च–पा०
९. इत्यन्यत्र–पा०

1. श्वे. उ. १-१२.
2. श्वे. उ. १-२५.
3. क. उ. २-५-१३.
4. श्वे. उ. ६-२३.
5. श्वे. उ. १-१७.
6, 7. रामा. युद्धका. २०-२६.
8, 9. वि. पु. ४-१-८५.
10. पुरुषसूक्तम् १३.
11. पुरुषसूक्तम् १५.

[1] "यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज । तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः", [2] "अहमात्मा गुडाकेश सर्वभूताशयस्थितः", [3] "सर्वस्य चाऽहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च" इत्यादि-वेदविदग्रेसरवाल्मीकि-पराशर-द्वैपायनवचोभिश्च[1], परस्य ब्रह्मणः सर्वस्य आत्मत्वावगमात्, चिदचिदात्मकस्य[2] वस्तुनः [3]तच्छरीरत्वावगमाच्च, शरीरस्य च शरीरिणं प्रति प्रकारतयैव [4]पदार्थत्वात्, शरीरशरीरिणोश्च धर्मभेदेऽपि[5] तयोरसङ्करात्, सर्वशरीरं ब्रह्मेति ब्रह्मणो वैभवं [6]प्रतिपादयद्भिः

---

सर्वस्य उत्पत्तिस्थितिप्रवृत्तयो भगवदधीना इत्युक्तं भवति । यत्किञ्चित् इति । कृत्स्नकार्यवर्गस्य कारणं [7]तत्तत्कारणान्तर्यामितया [8]तत्तच्छरीरकं ब्रह्मैवेत्यर्थः । अहमात्मा इति । आत्मशब्देन सर्वमपि शरीरमित्यर्थात्सिद्धम् । "सर्वस्य चाहम्" इत्यन्तर्यामित्वपरम् । "हृदि ह्ययमात्मा" इति जीवस्य हृत्स्थत्वात् तदन्तर्यामी च [9]हृदि स्थित[10] एवेत्यर्थः । आत्मशरीरभावावगमोऽस्तु, ततः किम् मत्वर्थीयप्रत्ययनिर-पेक्षसामानाधिकरण्यस्य ? इत्यत्राह शरीरस्य च इति । अनेन आकृत्यधिकरणन्यायः[4] स्मारितः । शरीरशरीरिणोश्च धर्मभेदेऽपि तयोरसङ्करात्[11] इति । महापातकिनः, तत्संसर्गिणश्च, धर्मभेदेऽपि संसर्गप्रयुक्तं पातकित्वमापतति, काष्ठस्य [1] रुमायाश्च धर्मभेदे सत्येव काष्ठस्य संसर्गप्रयुक्तं[12] लवणत्वं दृश्यते ; एवं धर्मभेदेऽपि संसर्ग-

---

[1] "रुमा स्याल्लवणाकरः" इति लवणोत्पत्तिस्थानं 'रुम' उच्यते ।

---

१. द्वैपायनादिभिश्च—पा०
२. चिदचिदात्मकवस्तुनः—पा०
३. तत् – क्वचिदेतन्न ।
४. तत्पदार्थत्वात्—पा०
५. धर्मभेदेन तयोः—पा०
६. प्रकाशयद्भिः—पा०
७. तत्कारणान्तर्यामितया—पा०
८. तच्छरीरकम्—पा०
९. हृत्स्थः—पा०
१०. एव भवतीत्यर्थः—पा०
११. सङ्करत्वात्, संस्कारात्—पा०
१२. संसर्गप्रयुक्ततल्लक्षणत्वम्—पा०

1. वि. पु. १-२२-३८.
2. गीता १०-२०.
3. गीता १५-१५.
4. पू. मी. ३-१-६.

सामानाधिकरण्यादिभिः मुख्यवृत्तैः सर्वचेतनाचेतनप्रकारं ब्रह्मैव अभिधीयते[1] ॥

सामानाधिकरण्यं हि द्वयोः पदयोः प्रकारद्वयमुखेन एकार्थनिष्ठत्वम्। तस्य च एतस्मिन्[2] पक्षे मुख्यता। तथा हि "तत् त्वम्" इति सामानाधिकरण्ये 'तत्' इत्यनेन जगत्कारणं सर्वकल्याणगुणाकरं * निरवद्यं ब्रह्मोच्यते। "त्वम्" [3]इति च चेतनसमानाधिकरणवृत्तेन जीवान्तर्यामि-

---

प्रयुक्तो यस्संकरः, तस्य शरीरशरीरिणोरसंभवादित्यर्थः। "धर्मभेदेन[4] च" इति पाठः। एवम् उक्तहेतुभिः सर्वशरीरं ब्रह्म। आदिशब्देन व्यधिकरणवाक्यविशेषाः[5] शरीर—तनु—अङ्गादि[6]शब्दवन्तो विवक्षिताः। सर्वशरीरत्वात् सर्वचेतनाचेतनप्रकारं ब्रह्मैव सर्वशब्दानां मुख्याभिधेयमित्यर्थः ॥

कथं मुख्यवृत्तत्वमित्यत्राह **सामानाधिकरण्यम्** इति। ततः किम्? इत्यत्राह **तस्य च** इति। कथं स्वपक्षे मुख्यता? इत्यत्राह **तथा हि** इति। कारणत्व[7]शङ्कितदोष-व्यावर्तकशोधकवाक्यार्थमाह **निरवद्यम्** इति। **त्वम् इति च** इति। [8]तच्छब्देन

---

* सर्वः कल्याणगुणाकरः यस्य इति बहुव्रीहिसमाश्रयणेन सर्वकल्याणगुणाकरमिति नपुंसकलिङ्गता। इतरथा तु आकरशब्दस्य अजहत्पुंस्कत्वात् पुंस्त्वमेव स्यात्।

---

१. ब्रह्म चाभिधीयते—पा०

२. एकस्मिन्—पा०

३. इति च पदेन चेतनसमानाधिकरण, इति पदेन च सामानाधिकरण्य, इति च तेन समानाधिकरण, इति च वाक्येन समानाधिकरण, इत्यनेन च समानाधिकरण—पा०

४. धर्मभेदेनेति च पाठः, धर्मभेदेनेत्यपि च पाठः, धर्मभेदेनेति वा पाठः—पा०

५. विशेषतः शरीर—पा०

६. शरीरतन्वादि—पा०

७. कारणत्वदोष—पा०

८. तेनेति तच्छब्देन, तत्त्वमिति तच्छब्देन—पा०

रूपि,[1] तच्छरीरं तदात्मतया अवस्थितम्, तत्प्रकारं ब्रह्मोच्यते। इतरेषु पक्षेषु सामानाधिकरण्यहानिः, ब्रह्मणः सदोषता च स्यात् ॥

---

[2] समानाधिकरणवृत्तेन "[3] त्वम्" इति पदेन इत्यर्थः। "त्वम्" शब्दस्य जीवान्तर्यामिपरत्वे[4] लक्षणा स्यादित्यत्राह तच्छरीरं तदात्मतया अवस्थितम् इति। शरीरतया तादात्म्यमस्तु, ततः किम् अन्तर्यामिपर्यन्तत्वस्य? इत्यत्राह तत्प्रकारम् इति। पक्षान्तरेषु अमुख्यार्थत्व[5]माह इतरेषु इति ॥

[6]ब्रह्माज्ञानपक्षे प्रवृत्तिनिमित्ताभावेन सामानाधिकरण्यलक्षणहानिः, अविद्याश्रयत्वदोषश्च[7] स्यात्। द्वितीयपक्षेऽपि ब्रह्मण एव तच्छब्दावगतकल्याणगुणविरुद्धाज्ञत्वादिप्रसंग इति, [8]सर्वज्ञत्वादिव्याघातादेव "त्वम्" शब्दस्य जीवत्वप्रहाणेन वस्तुमात्रपरत्वे स्वाभिमुखचेतनत्वरूपप्रवृत्तिनिमित्तहानमापतति। स्वाभिमुखचेतनो हि "त्वम्" शब्दवाच्यः। आभिमुख्यं च "श्वेतकेतोः" जीवत्वविशिष्टस्यैव, न तु वस्तुमात्रस्य। अतः सामानाधिकरण्यलक्षणहानिः [9]ब्रह्मणः सदोषत्वं चेत्यर्थः। तृतीयेऽपि पक्षे [10]सार्वज्ञ्यादि[11]गुणकत्वात् [12]तच्छब्दवाच्यतया प्रकृतः ईश्वर इति ब्रह्मांशभूतजीवेश्वरवाचिपदयोः '[13]घटः, शरावः' इतिवत् सामानाधि-

---

१. रूपम्—पा०
२. सामानाधिकरण्यवृत्तेन—पा०
३. 'तत्त्वम्' इति—पा०
४. परत्वेऽपि—पा०
५. अमुख्यत्वम्—पा०
६. ब्रह्माज्ञानभावपक्षे—पा०
७. चकारः क्वचिन्न।
८. सर्वज्ञत्वाज्ञत्वादि—पा०
९. ब्रह्मणः—क्वचिदेतन्न दृश्यते।
१०. सर्वज्ञत्वादि—पा०
११. गुणस्यैव प्रकृतत्वात्, गुणकस्यैव प्रकृतत्वात्—पा०
१२. सच्छब्दवाच्यतया—पा०
१३. घटशरावत्—पा०

एतदुक्तं भवति :- "अत्रैव एवमवस्थितम्" इत्यत्र "एवं" शब्दार्थभूतप्रकारतयैव[1] विचित्रचेतनाचेतनात्मकप्रपञ्चस्य[2] स्थूलस्य सूक्ष्मस्य च[3] सद्भावः ॥

करण्यमयुक्तम् । तच्छब्दः सन्मात्रपरः इति[4] चेत्, सार्वज्ञ्यादिगुणकस्यैव[5] प्रकृतत्वात् घटे प्रकृते, मृण्मात्रस्येव[6] सन्मात्रस्य प्रकृतत्वाभावात्, 'तत्' पदस्य प्रवृत्तिनिमित्तप्रहाणेन[7] सामानाधिकरण्यलक्षणहानिः । सन्मात्रं च प्रकृतमिति चेत्, [1]"सन्" प्रकृतम्, न तु सन्मात्रम्, [8]मात्रजर्थस्य [2]"तदैक्षत[9] बहुस्याम्" इत्याद्युक्तसार्वज्ञ्यादिविरोधात् । तच्छब्दस्य ईश्वरपरत्वे तद्विरोधपरिहाराय त्वंपदस्य वस्तुमात्रपरत्वे स्वाभिमुखचेतनत्वरूपप्रवृत्तिनिमित्तप्रहाणात् सामानाधिकरण्यलक्षणहानिः, सदोषत्वं[10] च स्यात् इत्यर्थः ॥

ननु सृष्टेः प्राक् एकत्वावधारणात्, [3]"यतः प्रधानपुरुषौ" इति प्रधानपुरुषयोरप्युत्पत्तिमत्त्वदर्शनाच्च तदानीं न शरीरशरीरिभावः सिध्यतीति, द्रव्यैकत्वमेवाभ्युपगन्तव्यम् इत्यत्राह[11] एतदुक्तं भवति इति । यद्यद्विशेषणं[12] वेदान्तवाक्येषु श्रुतम्, तत्तद्बाहुल्यात् तदभिप्रेत्य "एवम्" शब्दोऽत्र प्रयुक्तः । यथा निमित्तकारणत्वं निमित्तत्वोपयोगि-सर्वज्ञत्वादिसापेक्षम्, एवम् उपादानत्वमपि निष्कृष्टस्वरूपस्य

१. प्रकारान्तरतयैव —पा०
२. चेतनाचेतनात्मकस्य प्रपञ्चस्य—पा०
३. चकारः क्वचिन्नास्ति ।
४. इति चेन्न—पा०
५. सर्वज्ञत्वादिगुणकस्यैव, सार्वज्ञ्यादिगुणस्यैव—पा०
६. मृण्मात्रस्यैव—पा०
७. सामानाधिकरण्यहानिः—पा०
८. तत्र जडस्य—पा०
९. बहुस्याम्—इति क्वचिन्न दृश्यते ।
१०. दोषवत्त्वम्—पा०
११. एतदुक्तमिति—पा०
१२. यद्यद्विशेषेण—पा०

1. छा. उ. ६-२-१.
2. छा. उ. ६-२-३.
3. वि. पु. १ १७-३०.

[1]तथा च [1]"बहु स्यां प्रजायेय" इति अयमर्थः संपन्नो भवति ।

---

अनुपपन्नत्वात् [2]प्रकृतिपुरुषविशिष्टत्वसापेक्षमिति कारणविषयम् एकत्वावधारणं न कारणत्वोपयुक्तविशेषणविरोधीति तदानीमपि 'चिदचिद्विशिष्टमेव ब्रह्म' इत्यभिप्रायेण[3] परिहार उच्यते ब्रह्मैव इत्यादिना । "[4]एवमवस्थितम्" इत्यत्र एवं-शब्दार्थभूतप्रकारतया इति । [2]"सर्वं खल्विदं ब्रह्म", [3]"व्यक्तं विष्णुस्तथा-ऽव्यक्तम्[5]", [4]"ज्योतींषि विष्णुः" इत्यादिनिर्देशप्रदर्शनार्थः[6] 'एवम्' शब्दः । 'व्यक्तं विष्णुः' इत्यादिनिर्देशेषु 'एवम्' शब्दार्थभूतप्रकारतया—तत्तच्छब्द-प्रवृत्तिनिमित्तभूतप्रकारतया सर्वास्ववस्थास्वपि चेतनाचेतनप्रपञ्चसद्भाव इत्यर्थः । 'स्थूलस्य[7] सूक्ष्मस्य च' इत्यनेन एकत्वावधारणं व्याख्यातम् । नामरूपविभागानर्ह-सूक्ष्मदशापत्तिविवक्षया एकत्वावधारणम्; नामरूपविभागार्हस्थूलदशापत्त्या बहुत्व-निर्देशः—इति भावः ॥

तदेवोपपादयति तथा च इति । न हि "बहु" भवनम्, ब्रह्मणि अद्वारक-मुपपद्यते[8] तथा सति अविकारश्रुतिबाधः । अतः चिदचिद्विशिष्टस्यैव 'बहुत्वम्', तन्नामरूपप्रहाणरूपैकत्वं च अद्वारकं नोपपद्यते । [9]अतः विशिष्टत्वम् अभ्यु-पेत्यम्[10] । अन्यथा प्रकृतिपुरुषयोः अजत्वनित्यत्वश्रुतिविरोधः, अकृताभ्यागम-कृतविप्रणाशप्रसंगश्च । तस्मात् बहुत्वादिकं सद्वारकम् इति यथोक्त एव अर्थः

---

१. तथा चायमर्थस्संपन्नः—पा०
२. प्रकृतिपुरुषत्वविशिष्टसापेक्षम्—पा०
३. इत्यभिप्रायेणात्र परिहारः—पा०
४. एवं स्थितम्—पा०
५. ऽव्यक्तं पुरुषः काल एव च—पा०
६. प्रदर्शनार्थम्—पा०
७. स्थूलसूक्ष्मस्य—पा०
८. ब्रह्मत्वम्—पा०
९. अतोऽपि—पा०
१०. अभ्युपेतम्—पा०

1. छा. उ. ६-२-३.
2. छा. उ. ३-१४-१.
3. वि. पु. १-२-१८.
4. वि. पु. २-१२-३८.

तस्यैव ईश्वरस्य कार्यतया, कारणतया च [1]नानासंस्थानसंस्थितस्य संस्थानतया चिदचिद्वस्तुजातमवस्थितमिति ॥

ननु च संस्थानरूपेण प्रकारतया "एवम्" शब्दार्थत्वं [2]जातिगुणयोरेव [3]दृष्टम्; न द्रव्यस्य । [4]स्वतन्त्रसिद्धियोग्यस्य पदार्थस्य

---

इत्यभिप्रायः । तर्हि कार्यं कारणं च ब्रह्मैव कथं स्यात् इत्यत्राह तस्यैव इति । संस्थानतया । अपृथक्सिद्धधर्मतया । विशिष्टं वस्तु एकमेव अवस्थाद्वयान्वितमिति कार्यकारणयोः एकत्वसिद्धिरित्यर्थः ॥

जातिगुणयोरेव [5]द्रव्यापृथक्सिद्धिरिति, तयोरन्यतरवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्य[6]प्रयोजकम् । द्रव्यस्य तु [7]दण्डकुण्डलादेः अपृथक्सिद्धधभवात्, तद्वाचिशब्दस्य मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यं नोपपद्यते इत्यभिप्रायेण चोदयति ननु च इति । संस्थानरूपेण प्रकारतया । अपृथक्सिद्धविशेषणरूपेण प्रकारतया । "एवम्" शब्दार्थत्वम् इति । धर्ममुखेन [8]धर्मिवाचिशब्दानां प्रदर्शनार्थः—एवंशब्दः । अपृथक्सिद्धविशेषणत्वेन तत्तच्छब्दाभिधेयत्वं जातिगुणयोरेव दृष्टम्, "घटः, पटः, शुक्लः" इत्यादिषु । न [9]द्रव्यस्य इति । अपृथक्सिद्धविशेषणत्वेन तत्तच्छब्दप्रवृत्तिनिमित्तार्थत्वं द्रव्यस्य न दृष्टमित्यर्थः । ततः किम्? इत्यत्राह स्वतन्त्र इति । पृथक्सिद्धयर्हस्य चिदचित्पदार्थस्य

---

१. नानासंस्थानेति क्वचिन्न ।
२. जातमिति गुणयोरेव—पा०
३. द्रष्टव्यम्—पा०
४. स्वतन्त्रस्य सिद्धियोग्यस्य—पा०
५. द्रव्यात् अपृथक्सिद्धिः—पा०
६. सामानाधिकरण्ये प्रयोजकम्—पा०
७. दण्डकुलालादेः, दण्डकुण्डलादिभेदवत् अपृथक्सिद्धधभावात्—पा०
८. धर्मिवाचकशब्दानाम्—पा०
९. द्रव्येति—पा०

एवंशब्दार्थतया ईश्वरस्य प्रकारमात्रत्वमयुक्तम् [1] इति चेत्, उच्यते। [2] द्रव्यस्यापि दण्डकुण्डलादेः द्रव्यान्तरप्रकारत्वं दृष्टमेव ॥

ननु च दण्डादेः [3] स्वतन्त्रस्य द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो [4] दृष्टः, यथा–दण्डी कुण्डली इति। अतः गोत्वादितुल्यतया चेतनाचेतनस्य द्रव्यभूतस्य वस्तुनः ईश्वरप्रकारतया सामानाधिकरण्येन

---

ईश्वरपर्यन्तशब्दाभिधेयतया ईश्वरप्रकारत्वमयुक्तमित्यर्थः। परिहरति उच्यते इति। किं द्रव्यस्य द्रव्यान्तरं प्रति प्रकारत्वम् अयुक्तमित्युच्यते? उत [5] नियतप्रकारत्वम् अयुक्तम्? इति विकल्पमभिप्रेत्य [6] प्रथमं शिरः प्रतिवदति द्रव्यस्यापि इति। द्रव्यान्तरप्रकारत्वं दृष्टमेव इति। दण्डकुण्डलादेः प्रकारत्वे दृष्टेऽपि तस्य पृथक्सिद्ध्यर्हत्वं प्रमाणान्तरसिद्धम्। अत्र तु [7] चिदचितोः ब्रह्मप्रकारत्वं दृष्टम्। पृथक्सिद्ध्यर्हत्वे तु [8] न प्रमाणमिति प्रकारत्वं स्थितमेवेति, नियतप्रकारत्वं [9] सिद्धम् इत्यभिप्रायः ॥

एवमभिप्रायमजानन् [10] दण्डकुण्डलादिशब्दानामिव सामानाधिकरण्यस्य मत्वर्थीयप्रत्ययसापेक्षत्वमापादयंश्चोदयति ननु च इति। द्रव्यस्य द्रव्यान्तरं प्रति प्रकारत्वे सत्यपि नियतप्रकारत्वायोगात् न मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्य-

---

१. अयुक्तमिति उच्यते, अयुक्तम् उच्यते–पा०
२. द्रव्यकुण्डलादेः–पा०
३. स्वतन्त्रस्येति क्वचिन्न दृश्यते।
४. मत्वर्थीयप्रयोगः, मत्वर्थीयप्रत्ययप्रयोगः–पा०
५. नियमप्रकारत्वम्–पा०
६. प्रथमशिरः–पा०
७. तुर्नास्ति क्वचित्।
८. तुर्नास्ति क्वचित्।
९. प्रकारत्वसिद्धिरित्यभिप्रायः–पा०
१०. दण्डकुलालादि–पा०

प्रतिपादनं[1] न युज्यते। अलोच्यते—गौरश्वो मनुष्यो देव इति, भूतसंघात-रूपाणां[2] द्रव्याणामेव 'देवदत्तो मनुष्यो जातः पुण्यविशेषेण', 'यज्ञदत्तो गौर्जातः [3]पापेन कर्मणा', 'अन्यश्चेतनः पुण्यातिरेकेण देवो जातः' इत्यादि देवादिशरीराणां, चेतनप्रकारतया लोकवेदयोः सामानाधिकरण्येन प्रतिपादनं दृष्टम् ॥

मित्यर्थः। परिहरति अलोच्यते इत्यादिना। द्रव्यस्य द्रव्यान्तरं प्रति नियतप्रकारत्वं, प्रमाणमात्रस्तु दृष्टम्—इति हृदि निधाय, द्रव्यस्य द्रव्यान्तरविशेषणत्वे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगं दर्शयति गौरश्वः इति। [4]द्रव्यत्वहेतुतया भूतसंघातरूपाणामित्युक्तम्। देवमनुष्यादिशब्दस्य [5]पिण्डमात्रपर्यन्तत्वशङ्काव्यावृत्त्यर्थं 'पुण्यविशेषेण, पापेन कर्मणा, पुण्यातिरेकेण' इत्युक्तम्। न हि पिण्डस्याचेतनस्य पुण्यपापवत्त्वम्। पूर्वं गौरश्वो मनुष्यः इत्युक्त्वा, पुनः देवादिशरीराणाम् इत्युक्तम्। तत्र न पुनरुक्तिः शङ्कनीया, शब्दपरत्वेन, अर्थपरत्वेन च प्रयुक्तत्वात्। "गौरश्वो मनुष्यो देवः" इति शब्दवाच्यानां देवत्वमनुष्यत्वादिसंस्थानविशिष्टानां शरीराणाम् इत्यर्थः। चेतनप्रकारतया। चेतनस्य नियतप्रकारतया। 'देवो जातः' इत्यादिशब्दः प्रतिपादनविशेषणभूतः। गौरश्वो मनुष्यो देव इति शब्दवाच्यानां [6]भूतसंघातरूपतया द्रव्याणाम्, [7]देवत्वमनुष्यत्वादिसंस्थानविशिष्टानां शरीराणां[8] चेतनप्रकारतया, लोकवेदयोः 'देवदत्तो मनुष्यो जातः पुण्यविशेषेण' इत्यादिकं सामानाधिकरण्येन प्रतिपादनं दृष्टम् इत्यन्वयः। शरीराणां सामानाधिकरण्येन[9] प्रतिपादनम् इत्यनेन, तद्वाचिशब्दानां सामानाधिकरण्यम् उक्तं

१. सामानाधिकरण्यवर्णनम्—पा०
२. भूतसंघातविशेषरूपाणाम्—पा०
३. पापविशेषेण कर्मणा, पापकर्मणा—पा०
४. द्रव्यहेतुतया—पा०
५. पिण्डमात्रशङ्का—पा०
६. भूतरूपतया—पा०
७. देवमनुष्यत्वादि—पा०
८. शरीराणां हि—पा०
९. सामानाधिकरण्यमित्यनेन, सामानाधिकरण्यप्रतिपादनमित्यनेन—पा०

अयमर्थः—जातिर्वा, द्रव्यं वा, गुणो वा, न तत्र आदरः। कश्चन द्रव्यविशेषं प्रति विशेषणतयैव यस्य सद्भावः, तस्य तदपृथक्सिद्धेः [1]तत्प्रकारतया

भवति। अर्थसामानाधिकरण्याद्धि शब्दसामानाधिकरण्यम्? शरीरस्य चेतनसामानाधिकरण्यं नाम, चैतन्यसमानाश्रयत्वम्। शरीरं चैतन्यं च चेतनविशेषणम्। तत्र औपाधिकत्वं, स्वाभाविकत्वं च—इति विशेषः। यद्वा "शरीराणां सामानाधिकरण्येन प्रतिपादनम्" इति शरीराणां, सामानाधिकरण्यप्रवृत्तशब्दैः प्रतिपादनमिति यावत्॥

ननु [2]अद्रव्यत्वे सति विशेषणत्वमेव[3] मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकम्। तस्मात् अत्र सामानाधिकरण्यं लाक्षणिकम् इत्यत्राह अयमर्थः इति। मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकं जातित्वं वा, गुणत्वं वा, [4]अन्यद्वा; तत्र सामानाधिकरण्यं[5] मुख्यमिति किमिति[6] नाभ्युपगतम्? [7]प्रयोगाविशेषे सत्यपि [8]अननुयायिप्रयोजककल्पनेन, क्वचिदमुख्यत्वाश्रयणायोगात् इति चेत्, तर्हि द्रव्यविशेषवाचिशब्दानामपि तथा प्रयोगे अविशिष्टे, [9]तत्र अव्याप्तप्रयोजककल्पनेन अमुख्यत्वाश्रयणमयुक्तम्[10] इत्यर्थः। तर्हि सर्वप्रयोगानुगतं प्रयोजकं किम्? इत्यत्राह कश्चन इति। तदपृथक्सिद्धेः तत्प्रकारतया इति। तत्प्रकारत्वेन

१. प्रकारतया—पा०
२. अनुयायिद्रव्यत्वे—पा०
३. विशेषणमेव—पा०
४. अन्यतरद्वत्र, अन्यत्र, अन्यतरत्र—पा०
५. सामानाधिकरण्यं न मुख्यमिति नाभ्युपगतम्—पा०
६. किमिति—क्वचिदेतन्नास्ति। कथं नाभ्युपगतम्—पा०
७. प्रयोगविशेषे—पा०
८. अनुयायिप्रयोजक, अननुपाधिप्रयोजक—पा०
९. तत्र व्याप्तप्रयोजक, तत्राव्यावृत्तप्रयोजक—पा०
१०. अमुख्यम्—पा०

तत्सामानाधिकरण्येन प्रतिपादनं युक्तम् । [1]यस्य पुनः द्रव्यस्य पृथक्सिद्धस्यैव कदाचित् [2]क्वचित् द्रव्यान्तरप्रकारत्व[3]मिष्यते, तत्र मत्वर्थीयप्रत्ययः[4]—इति विशेषः । एवमेव स्थावरजङ्गमात्मकस्य सर्वस्य[5] वस्तुनः ईश्वरशरीरत्वेन तत्प्रकारतयैव स्वरूपसद्भाव इति, तत्प्रकारी[6] ईश्वर एव [7]तत्तच्छब्देन अभिधीयत इति, [8]तत्सामानाधिकरण्येन प्रतिपादनं युक्तम् । तदेतत् पूर्वमेव नामरूपव्याकरणश्रुतिविवरणे प्रपञ्चितम् ॥

---

तदपृथक्सिद्धेः । द्रव्यवाचिपदानामपि [9]प्रकारिपर्यन्तत्वे, दण्डकुण्डलादेरपि तथा [10]प्रसजेत—इति शङ्कायां तद्वैषम्यमाह **यस्य पुनः** इति । एवं जीवं प्रति शरीरस्य नियतप्रकारत्वेन तद्वाचिपदानां तत्पर्यन्तत्वं विवक्षितम्, ततः किं जगद्वाचिशब्दानामीश्वरपर्यन्तत्वस्य इत्यत्राह **एवमेव** इति । जगद्वाचिशब्दानाम् ईश्वरपर्यन्तत्वे [11]प्रमाणे सति हि तदनुग्राहकन्यायापेक्षा? अतः तत्र किं प्रमाणम्? व्युत्पत्तिभङ्गश्च भवेत् । घटपटादेः स्वनिष्ठत्वविषयप्रत्यक्षविरोधश्च—इत्यादिशङ्कायामाह **तदेतत्** इति । एवं सद्विद्योपसंहारगतं "तत्त्वमसि" [12]इति सामानाधिकरण्यं न द्रव्यैक्यपरम्, अपि तु आत्मशरीरभावपरम् इत्युक्तम् ॥

---

१. यत्र—पा०

२. क्वचिदिति क्वचिन्न ।

३. द्रव्यान्तरविशेषणत्वम्—पा०

४. मत्वर्थीय इति—पा०

५. सर्वस्यैव वस्तुनः—पा०

६. तत्प्रकार ईश्वर एव—पा०

७. तच्छब्देन—पा०

८. तत्तत्सामानाधिकरण्येन—पा०

९. प्रकारपर्यन्तत्वे—पा०

१०. प्रसज्यते—पा०

११. प्रामाणिके सति हि—पा०

१२. इत्यादि—पा०

अतः, प्रकृतिपुरुषमहदहङ्कारतन्मात्रभूतेन्द्रिय[1]—तदारब्धचतुर्दशभुवनात्मकब्रह्माण्ड — तदन्तर्वर्ति — देवतिर्यङ्मनुष्यस्थावरादि[2] सर्वप्रकारसंस्थानसंस्थितं कार्यमपि सर्वं ब्रह्मैव इति, कारणभूतब्रह्मविज्ञानादेव

---

एवम् उपक्रमगतम् एकविज्ञानप्रतिज्ञावाक्यमपि विशिष्टैक्यपरम् इत्याह अतः इति। अतः—'तत्त्वमसि' इति[3] वाक्यस्य विशिष्टैक्यपरत्वोपपादनादित्यर्थः। ब्रह्मणः तेजोऽबन्नमात्रकारणत्वे कृत्स्नकारणत्वमनुपपन्नमिति, तत्परिहाराय सद्विद्यायां तेजोऽबन्नसृष्टिकथनम् अन्येषामपि प्रदर्शनार्थम्—इत्यभिप्रायेणाह प्रकृतिपुरुष इति। देवतिर्यङ्मनुष्यस्थावरादिसर्वप्रकारसंस्थानसंस्थितम्[4] इति। आदिशब्देन "देवतिर्यगादिष्ववान्तरजातिभेदो विवक्षितः।[5] "देवतिर्यङ्मनुष्यस्थावरादि" इति कार्यविशेषणम्। सर्वप्रकारसंस्थानसंस्थितम्—नानाविधसंस्थानविशिष्टम् इत्यर्थः। यद्वा देवमनुष्यादिशब्दः[6] भावप्रधानः[7]। [8] देवत्वमनुष्यत्वादि[9] सर्वप्रकारो यस्य तत् देवमनुष्यतिर्यक्स्थावरादिसर्वप्रकारम्। [10] तदेव संस्थानम् अपृथग्भूतधर्मः। तेन संस्थितं विशिष्टमित्यर्थः। विशिष्टमेव कारणम्; तदेव कार्यम्—इति कार्यकारणयोरनन्यत्वात्, तज्ज्ञानेन तज्ज्ञानम् इत्यर्थः। उपपन्नतरम्। मुख्यतया उपपन्नमित्यर्थः। एवम् उपक्रमोपसंहारवाक्ययोः विशिष्टैक्यपरत्वमुक्तम् *।

---

* छा. उ. ६-२-१६.

---

१. इन्द्रियैस्तदारब्ध, इन्द्रियैरारब्ध—पा०
२. सर्वेति क्वचिन्न दृश्यते।
३. क्वचित् इतिर्नास्ति।
४. प्रकारसंस्थितम्—पा०
५. देवतिर्यङ्मनुष्याद्यवान्तरजातिभेदः—पा०
६. शब्दाः—पा०
७. भावप्रधानाः—पा०
८. देवमनुष्यत्वादि—पा०
९. मनुष्यत्वादिः सर्वः प्रकारः, मनुष्यत्वादि सर्वं प्रकारः—पा०
१०. स एव, एतदेव—पा०

सर्वं विज्ञातं भवतीति, एकविज्ञानेन सर्वविज्ञानम् उपपन्नतरम्[1]। तदेवम्, कार्यकारणभावादिमुखेन कृत्स्नस्य चिदचिद्वस्तुनः [2]परब्रह्मप्रकारतया तदात्मकत्वम् उक्तम् ॥

---

अथ मध्यगतं[3] [1]"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः.... ऐतदात्म्यमिदं सर्वम्" इति वाक्यमपि[4], आत्मशरीरभावेन तादात्म्यपरम्[5] इत्याह तदेवम् इति। कार्यकारणभावशब्देन "सन्मूलाः" "सत्प्रतिष्ठाः" इत्यस्य अर्थो विवक्षितः। आदिशब्देन सदायतनत्वं विवक्षितम्। तच्च धार्यधारकभावः। परब्रह्म[6]प्रकारतया तदात्मकत्वमुक्तम्[7] इति[8]। न तु स्वरूपैक्येन तादात्म्यमित्यर्थः। कार्यकारणभावाच्च, प्रकारप्रकारिभावाच्च तादात्म्यं द्विविधम्। तत्र कार्यकारणभावादेव[9] प्रकारप्रकारिभावोऽपि सिद्धः; विशिष्टस्यैव [10]कार्यत्व[11]कारणत्वयोगात्, अन्तः प्रविश्य धारकत्वेन, नियन्तृत्वेन[12], स्थितिहेतुत्वाच्च। अतः "सन्मूलाः"[13] इत्यादिवाक्ये उभयविधं तादात्म्यमभिप्रेतम् इति ग्रन्थाभिप्रायः। [2]"सर्वं खल्विदं ब्रह्म तज्जलान्" [14]इत्यस्यापि अयमेवार्थः ॥

---

१. उपपन्नतरं भवति—पा०
२. परेति क्वचिन्न लक्ष्यते।
३. मध्यगम्—पा०
४. वाक्यस्यापि—पा०
५. तादात्म्यपरत्वम्—पा०
६. परब्रह्मप्रकारतायाः तादात्म्यम्, परब्रह्मकारणतया तदात्मकत्वम्—पा०
७. 'उक्तम्' इति क्वचिन्न।
८. इति—एतत् क्वचिन्न दृश्यते।
९. भावादेव—पा०
१०. कारणत्वकार्यत्व—पा०
११. कार्यकारणत्व—पा०
१२. नियन्तृत्वेन च—पा०
१३. सन्मूलेत्यादिवाक्ये—पा०
१४. अस्यापि—पा०

1. छा. उ. ६-८-६.
2. छा. उ. ३-१४-१

ननु च परस्य ब्रह्मणः स्वरूपेण परिणामास्पदत्वम्, [1] निर्विकार-निरवद्यश्रुतिव्याकोपप्रसंगेन निवारितम्। [1] "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा [2], [3] मृत्-तत्कार्यदृष्टान्ताभ्याम्, परमपुरुषस्य जगदुपादानकारणत्वं च प्रतिपादितम्; उपादानकारणत्वं च परिणामास्पदत्वमेव; कथमिदमुपपद्यते [4]। अत्रोच्यते—सजीवस्य प्रपञ्चस्य अविशेषेण [5] कारणत्वमुक्तम्। [6] तत्र ईश्वरस्य [7] जीवरूपपरिणामाभ्यु-

जगदुपादानत्वनिर्विकारत्वव्याघातशङ्कया चोदयति ननु च इति। स्वरूपेण परिणामास्पदत्वं निवारितमस्तु, ततः किम्? इत्यत्राह प्रकृतिश्च इति। सूत्रार्थमाह एकविज्ञानेन इति। [8] अनेन श्रुतिश्च स्मारिता। उपादानत्वं प्रतिपादितमस्तु, ततः किम्? इत्यत्राह उपादान इति। सद्वारकम् उपादानत्वमित्यविरोधमभिप्रेत्य परिहरति अत्रोच्यते इत्यादिना। अविशेषेण इति। [2] "यतो वा इमानि भूतानि [9]", [3] "सन्मूलाः सोम्येमाः सर्वाः प्रजाः", [4] "इदं सर्वमसृजत, यदिदं किञ्च, तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्", [5] "निस्सरन्ति यथा लोहपिण्डात् तप्ताः स्फुलिङ्गकाः, सकाशा [10] दात्मनस्तद्वत् आत्मानः प्रभवन्ति हि" इत्यादिश्रुति-स्मृत्यभिप्रायेण एवमुक्तम्। जीवरूपेण परिणामाभ्युपगमे दूषणमाह तत्र इत्यादिना। (१) अजत्वनित्यत्वश्रुतिविरोधः, (२) वैषम्यनैर्घृण्यपरिहारविरोधः, (३) अकृताभ्यागम—कृतविप्रणाशप्रसंगश्च—दूषणानि इत्यर्थः। अकृताभ्यागमः—

१. निर्विकारत्वनिरवद्यत्वश्रुतिकोप—पा०
२. प्रतिज्ञानम्—पा०
३. मृद्घटादिदृष्टान्ताभ्याम्—पा०
४. उपपद्यत इति चेत्—पा०
५. विशेषेण—पा०
६. अत्र—पा०. तत्रेति क्वचिन्न।
७. जीवरूपेण परिणाम—पा०
८. अनेनेति क्वचिन्न दृश्यते।
९. भूतानीति क्वचिन्न दृश्यते।
१०. ब्रह्मणः—पा०

1. ब्र. सू. १-४-२४.
2. तै. उ. भृगु. १.
3. छा. उ. ८-६.
4. तै. उ. आन. ६-२.
5. या. स्मृ. प्रा. का. ६७.

पगमे, [1] "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति विरुध्यते । वैषम्य-नैर्घृण्यपरिहारश्च, जीवानामनादित्वाभ्युपगमेन [1]तत्कर्मनिमित्ततया[2] प्रतिपादितः; [2] "वैषम्यनैर्घृण्ये न सापेक्षत्वात्", [3] "न कर्माविभागादिति चेन्न, अनादित्वादुपपद्यते चाप्युपलभ्यते च" इति, अकृताभ्यागम-कृतविप्रणाशप्रसंगश्च[3] अनित्यत्वे अभिहितः ॥

तथा प्रकृतेरप्यनादिता श्रुतिभिः[4] प्रतिपादिता :—[4] "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति[5] प्रकृतिपुरुषयोरजत्वं दर्शयति[6] । [5] "अस्मान्मायी सृजते विश्वमेतत्[7] तस्मिंश्चान्यो मायया

अहेतुकफलप्राप्तिः; कृतविप्रणाशः--कृतस्य कर्मणो निष्फलत्वम् । [6] "नात्मा श्रुतेः" इत्यादिना श्रुतिविरोध उक्तः । श्रुत्यर्थापत्तिविरोध [8] उक्तः वैषम्य इत्यादिना ।

[9] एवं जीवरूपेण परिणामे दूषणमुक्तम् । अचिद्रूपेण परिणामे दूषणमाह तथा इति । "अजामेकाम्[10]" इति वाक्यस्य अर्थमाह प्रकृति इति । ब्रह्मणः [11] सद्वारके उपादानत्वे विवक्षिते, द्वारभूतस्य परिणामित्वम्[12], द्वारभूतेन द्वारिणः संबन्धश्च अपेक्षितः इति, द्वारभूतप्रकृतेः परिणामित्वे श्रुतिमाह अस्मात् इति । अनेन

---

१. तत्तत्कर्म—पा०
२. निमित्ततया च क्रियते—पा०
३. विप्रणाशश्च—पा०
४. श्रुतिभिरेव—पा०
५. इति गौरनाद्यन्तवती च प्रकृतिपुरुषयोः—पा०
६. दर्शितम्, प्रतिपादयति—पा०
७. एतत्—पा०
८. उक्तः इति क्वचिन्न ।
९. एवं रूपपरिणामे—पा०
१०. एकां लोहितशुक्लकृष्णाम्" इति—पा०
११. सद्वारकोपादानत्वे, सद्वारकत्वोपादाने विवक्षिते—पा०
१२. परिणामित्वात्—पा०

1. ब्र. सू. २-३-१९.
2. ब्र. सू. २-१-३५.
3. ब्र. सू. २-१-३६.
4. तै. उ. ६°प्र. १०-५.
5. श्वे. उ. ४-९.
6. ब्र. सू. २-३-१९.

सन्निरुद्धः, मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्" इति प्रकृतिरेव स्वरूपेण विकारास्पदमिति च[1] दर्शयति । [1]"गौरनाद्यन्तवती सा जनित्री भूतभाविनी" इति [2]च ।

स्मृतिश्च[3] – [2]"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि[4]", [3]"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत्", [4]"प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः", [5]"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" [5]इत्यादिका ।

[6]एवं च प्रकृतेरपि ईश्वरशरीरत्वात्, प्रकृतिशब्दोऽपि तदात्म-

---

मायाशब्दार्थोऽपि स्पष्टः । जनित्री–समष्टिजनित्री; भूतभावनी–व्यष्टिहेतुः, इत्यर्थः । उक्तार्थविषयां स्मृतिं दर्शयति स्मृतिश्च इति । "प्रकृतिं पुरुषं" इत्यादिना प्रकृतिपुरुषयोः अनादित्वम्, "भूमिरापः" इत्यादिना द्वारभूतायाः प्रकृतेः परिणामित्वं च सिद्धम् ॥

एवं जीवरूपेण, अचिद्रूपेण च[7] ब्रह्मणः परिणामे दूषणमुक्तम् । प्रकृतिरेव परिणामिनी चेत्, कथं ब्रह्मण उपादानत्वम्? इत्यत्राह प्रकृतेरपि इति । [6]"गौरनाद्यन्तवती" इत्यादिषु [8]प्रकृतिवाचिशब्दः तच्छरीरकब्रह्मवाची[9] इत्यर्थः ।

---

१. चकारः नास्ति क्वचित् ।
२. चकारः कुत्रचिन्न ।
३. स्मृतिश्च भवति–पा.
४. उभावपि, विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवानिति–पा.
५. इत्यादिना–पा.
६. एवं च सति–पा. क्वचिदेवं चेति न दृश्यते ।
७. चकारः क्वचिन्न ।
८. प्रकृतिवाचकशब्दः–पा.
९. परमात्मवाची–पा.

1. मन्त्रि. उ. १.
2. गीता १३-१९.
3. गीता ७-४.
4. गीता ९-८.
5. गीता ९-१०.
6. मन्त्रि. उ. १

भूतस्य ईश्वरस्य, तत्प्रकारसंस्थितस्य वाचकः। पुरुषशब्दोऽपि तदात्मभूतस्य ईश्वरस्य पुरुषप्रकारसंस्थितस्य वाचकः। अतः तद्विकाराणामपि तथैव ईश्वरः[1]-आत्मा। तदाह-[1]"व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च", [2]"स एव क्षोभको ब्रह्मन् क्षोभ्यश्च परमेश्वरः" इति। अतः [2]प्रकृतिप्रकारसंस्थिते परमात्मनि प्रकारभूतप्रकृत्यंशे विकारः, प्रकार्यंशे च अविकारः। एवमेव जीवप्रकारसंस्थिते परमात्मनि च [3]प्रकारभूतजीवांशे सर्वे च अपुरुषार्थाः[4]; प्रकार्यंशः-नियन्ता, निरवद्यः, सर्वकल्याणगुणाश्रयः[5], सत्यसंकल्प एव॥

तथा च सति[6] कारणाऽवस्थ[7] ईश्वर एवेति[8], तदुपादानकजगत्[9]-

[3]"प्रधानपुरुषौ" इत्यादिषु पुरुषशब्दोऽपि तथैव इत्याह पुरुष इति। प्रधानः कार्यत्वसिद्ध्यर्थमाह अतः तद्विकाराणामपि इति। उक्तार्थे स्मृतिमाह तदाह इति। निर्दोषत्व-[10]निर्विकारत्व-उपादानत्वश्रुत्यविरोध[11]माह अत इति। [12]सत्यसंकल्पत्वपदेन [4]"अपहतपाप्मा" इत्यादिवाक्यं स्मारितम्। उपादानत्वश्रुतिः-विशिष्टविषया, निर्विकारत्वादिश्रुतिः-[13]विशेष्यांशमात्रविषया इत्यर्थः॥

विशिष्ट एवेश्वरः[14] कारणम्, विशिष्टः स एव कार्यमिति, कार्यकारणयोः अनन्यत्वसिद्धिः इत्याह तथा च सति इति। कार्यकारणयोरनन्यत्वं कारणात् कार्यस्य

१. ईश्वर एव आत्मा—पा॰
२. सर्वप्रकार—पा॰
३. प्रकारभूते जीवांशे—पा॰
४. न पुरुषार्थाः, पुरुषार्थाः—पा॰
५. गुणाकरः—पा॰
६. च सति—क्वचिन्न।
७. अवस्थोपीश्वरः—पा॰
८. एव एतदुपादानकजगत्—पा॰
९. तदुपादानं जगत्, तदुपादानजगत्-पा॰
१०. निर्विकारत्वश्रुत्यविरोधम्—पा॰
११. श्रुतिविरोधम्—पा॰
१२. संकल्पत्वपदेन, सत्यसंकल्पपदेन—पा॰
१३. अविशिष्टविषया—पा॰
१४. एवायमीश्वरः—पा॰

1. वि॰ पु॰ १-२-१८.
2. वि॰ पु॰ १-२-३१.
3. वि॰ पु॰ १-१२-३०.
4. छा॰ उ॰ ८-७-१.

कार्यावस्थोऽपि स एवेति कार्यकारणयोरनन्यत्वम्, सर्वश्रुत्यविरोधश्च भवति ॥

तदेवम्, नामरूपविभागानर्ह[1]सूक्ष्मदशापन्नप्रकृतिपुरुषशरीरं ब्रह्म कारणावस्थम्। [2]जगतः तदापत्तिरेव च[3] प्रलयः। [4]नामरूपविभाग-विभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यावस्थम्। ब्रह्मणः तथाविधस्थूल-भाव "एव[5] सृष्टिः–[7]इत्युच्यते ॥

यथोक्तं भगवता पराशरेण—[1]"प्रधानपुंसोरजयोः कारणं कार्य-भूतयोः" इति ॥

तस्मात् ईश्वरप्रकारभूत-सर्वावस्थप्रकृतिपुरुषवाचिनः शब्दाः तत्—

---

द्रव्यान्तरत्वं वारयति; न तु कारणस्य विशिष्टत्वविरोधि[8]; अविशिष्टत्वे कारणत्वायोगात् इत्यर्थः। सर्व इति। उपपादितप्रकारेण निर्दोषत्व-उपादानत्वादिपरश्रुत्यविरोधः इत्यर्थः॥

चिदचिद्विशिष्टस्य ब्रह्मणो नित्यत्वात् सृष्टिप्रलयायोगः, ब्रह्मणः कारणत्वं, कार्यत्वं च अयुक्तम् इत्यत्राह तदेवम् इति। तदापत्तिः। सूक्ष्मदशापत्तिः। द्रव्यनित्यत्वेऽपि अवस्थाभेदेन सर्गाद्युपपत्तिरित्यर्थः। वस्तुस्वरूपनित्यत्वेऽपि, अवस्थाभेदेन कारणत्वाद्युपपत्तौ प्रमाणमाह यथोक्तम् इति ॥

'अजयोः' इत्यनेन कारणत्वावस्थायां सत्त्वं सूचितम्। 'कार्यभूतयोः'इत्यनेन कार्यावस्थां प्रति कारणत्व[9]मित्युक्तम्, तर्हि[10] कार्यत्वकारणत्वे प्रकृतिपुरुषयोरेवेति परमात्मनः कारणत्वादिनिर्देशोऽमुख्यस्स्यात् इत्यत्राह तस्मात् इति। चिद-

---

१. सूक्ष्मावस्थापन्न—पा०
२. जगतस्तदापत्तिरेव—पा०
३. चकारः क्वचिन्न लक्ष्यते।
४. नामरूपविभागानर्हस्थूलचिदचि-द्वस्तु—पा०
५. एवकारः क्वचिन्न दृश्यते।
६. एव जगतः सृष्टिरिति—पा०
७. क्वचिदितिर्न।
८. विशिष्टविरोधि—पा०
९. उक्तम्, इत्युक्तं भवति—पा०
१०. तर्हि—क्वचिदेतन्न दृश्यते।

1. वि. पु. १-९-३७.

प्रकारविशिष्टतया अवस्थिते परमात्मनि मुख्यतया वर्तन्ते, जीवात्मवाचि-देवमनुष्यादिशब्दवत्[1]; [2]यथा [3]देवमनुष्यादिशब्दाः देवमनुष्यादिप्रकृति-परिणामविशेषाणां जीवात्मप्रकारतयैव पदार्थत्वात्, प्रकारिणि जीवात्मनि मुख्यतया वर्तन्ते। तस्मात् सर्वस्य चिदचिद्वस्तुनः परमात्मशरीरतया तत्प्रकारत्वात्, परमात्मनि मुख्यतया वर्तन्ते सर्वे [4]तद्वाचकाः शब्दाः ॥

चिद्द्रव्ययोः परमात्माख्यद्रव्येण सहोपलम्भनियमाभावात्, जातिगुणवत् [5]प्रकारतैक-स्वभावत्व[6]मयुक्तम् इत्यत्राह जीवात्म इति। सहोपलम्भनियमः—अपृथक्सिद्ध-प्रकारत्वे[7] प्रयोजकः। अतः, तदभावात् देवादिशब्दानामपि जीवपर्यन्तत्वममुख्यम्[8] इति शङ्कायामाह यथा इति। सहोपलम्भनियमः एकसामग्रीवेद्यत्वप्रयुक्तः, न तु नियतप्रकारत्वप्रयुक्तः; गन्धादिषु व्यभिचारात्। तस्मात् [9]तदेकाश्रयत्वम्, तदेकप्रयोजनत्व[10] च नियतप्रकारत्वे प्रयोजकम्। किञ्च मत्वर्थीयप्रत्ययनिरपेक्ष-सामानाधिकरण्यप्रयोगो [11]यत्रास्ति, तत्र सर्वत्र अनुगतं प्रयोजकं कल्प्यम्। अन्यथा जातित्वं, गुणत्वं वा प्रयोजकं स्यात्। तस्मात् देवादिशरीरस्य [12]चेतनप्रकारतैक-स्वभावत्वात् तद्वाचिशब्दानां [13]तत्पर्यन्तत्वं मुख्यम् इत्यर्थः। एवं दृष्टान्तोक्तमर्थं[14] दार्ष्टान्तिके अतिदिशति—वक्ष्यमाणशरीरलक्षणसंगत्यर्थं तस्मात् इति ॥

१. जीवात्मवाचिशब्दवत्—पा०
 'शब्दवत्' इति क्वचिन्न।
२. 'यथा' इति क्वचिन्न।
३. देवादिशब्दाः—पा०
४. वाचकाः—पा०
५. प्रकारतयैकस्वभावत्वम्—पा०
६. स्वभावम्—पा०
७. प्रकारत्वप्रयोजकः—पा०
८. मुख्यम्—पा०
९. तदेकाश्रयत्वमिति क्वचिन्न।
१०. प्रयोजनकत्वम्—पा०
११. यत्र यत्रास्ति—पा०
१२. चेतनैकप्रकार—पा०
१३. तावत्पर्यन्तत्वम्—पा०
१४. अर्थमिति क्वचिन्न।

अयमेव च आत्मशरीरभावः—पृथक्सिद्ध्यनर्हाधाराधेयभावः[1], [2]नियन्तृ-नियाम्यभावः, शेषशेषिभावश्च। सर्वात्मना आधारतया[3], नियन्तृतया, शेषितया च आप्नोतीति—आत्मा; सर्वात्मना[4] आधेयतया, नियाम्यतया,

---

चिदचिद्वस्तुनोः[5] शरीरत्वम्, परमात्मनः शरीरित्वं च अनुपपन्नम्, [6]शरीरशरीरिलक्षणाभावात्; 'चेष्टाभोगेन्द्रियाश्रयो हि शरीरम्' इत्यत्राह अयमेव इति। पृथक्सिद्ध्यनर्हशब्दः प्रतिपदमन्वेति। तेन पदेन गृहक्षेत्रघटपटादि-व्यावृत्तिः। अत्र [7]शरीरात्मलक्षणयोः सहोक्त्या, शरीरम्, आत्मा च [8]प्रतिसंबन्धि-निरूप्यपदार्थः इति दर्शितं भवति। तत्र किं शरीरत्वम्? किम् आत्मत्वम्? इति शङ्कायां विभज्य दर्शयति [9]सर्वात्मना इति। सर्वात्मना—यावद्द्रव्यभावितया इत्यर्थः। आत्मशब्दावयवार्थस्य[10] शरीरशरीरिलक्षणौपयिकत्व[11]मभिप्रेत्याह आप्नोति इति। "द्रव्यत्वे सति [12]आधेयतया" इत्यध्याहारेण योजयितव्यम्। आधेयत्वनियाम्यत्व-शेषत्वविशेषणम्[13]—'सर्वात्मना' इति पदम्। 'अपृथक्सिद्धं' इति पदं—

---

१. पृथक्सिध्यनर्हत्वाधाराधेयभावः, पृथक्-स्थित्यनर्हाधाराधेयभावः—पा०

२. विशेषणविशेष्यभावः शेषशेषिभावश्च-पा०

३. आधारतयेति क्वचिन्न दृश्यते।

४. सर्वात्मना च—पा०

५. चिद्वस्तुनः—पा०

६. शरीरलक्षणाभावात्—पा०

७. शरीरात्मभावलक्षणयोः—पा०

८. प्रतिसंबन्धनिरूप्य—पा०

९. परमात्मनेति—पा०

१०. अवयवार्थस्य च—पा०

११. लक्षणौपाधिकत्वम्—पा०

१२. आधाराधेयतया—पा०

१३ विशेषणत्वम्—पा०

शेषतया च अपृथक्सिद्धं [1] प्रकारभूत [2] मिति—आकारः, शरीरम् इति च उच्यते।

---

प्रकारविशेषणम्। सर्वात्मना आधेयत्वादिभिः अपृथक्सिद्धप्रकारत्वादित्यर्थः। आकारः शरीरम् इति च उच्यते इति। "जातिगुणयोरप्याकारत्वम् अपृथक्सिद्धप्रकारत्वात्; शरीरमपि अपृथक्सिद्धप्रकारत्वात् आकारशब्दवाच्यम्—द्रव्यत्वाच्छरीरशब्दवाच्यम्" इत्यर्थः ॥

अयमर्थः—"द्विपात्त्वं शरीरत्वम्,, [3] चतुष्पात्त्वं शरीरत्वमिति शरीरलक्षणं [4] किमिति न स्यात्? द्विपात्त्वचतुष्पात्त्वादिविभागाभावेन सर्वत्र शरीरशब्दप्रयोगाविशेषात् इति चेत्, तर्हि लोके वेदे च यत्र यत्र शरीरशब्दप्रयोगः, [5] तत्र सर्वत्र अनुगते [6] लक्षणे वाच्ये, कतिपय [7] प्रयोगविषयाऽननुगतत्वात् अव्याप्तं लक्षणमुक्त्वा, प्रयोगविशेषेषु अमुख्यत्वाश्रयणमयुक्तम्। तस्मात् [8] चेष्टेन्द्रियार्थाश्रयत्वमव्याप्तमिति सर्वप्रयोगानुगतं लक्षणमिदमेव साधीयः" [9] इति ॥

यत्तु भाष्योक्तशरीरलक्षणग्रन्थे [10] अर्थजातमुक्तं तत्र [11] अपेक्षितांश इह अनुसन्धेयः * ॥

---

* ब्र. सू. २-१-९ श्रीभाष्यम्।

---

१. अपृथक्सिद्धप्रकार—पा०

२. प्रकारमिति—पा०

३. चतुष्पादत्वम्—पा०

४. किमिति—क्वचिन्न।

५. तत्र तत्र—पा०

६. अनुगतलक्षणे—पा०

७. प्रयोगविशेषानुगतत्वात्, प्रयोगविवक्षयाऽननुगतत्वात्—पा०

८. चेष्टेन्द्रियाश्रयत्वम्, चेष्टेन्द्रियार्थाश्रयत्वम्—पा०

९. इति—एतत् क्वचिन्न।

१०. लक्षणेऽप्यर्थजातम्—पा०

११. तदत्रापेक्षितांशः—पा०

**एवमेव** [1]**हि जीवात्मनः, स्वशरीरसम्बन्धः? एवमेव परमात्मनः** [2]**सर्वशरीरत्वेन सर्वशब्दवाच्यत्वम्**[3] ॥

---

व्याप्यत्वे सति सर्वात्मना स्वार्थे धारयितुं शक्यं—शरीरम्, इति शरीरलक्षणम्। [4]व्यापत्वे सति यावद्द्रव्यभावितया स्वार्थे धारयितुं शक्तः—आत्मा, इति शरीरिलक्षणम्[5]।

स्वार्थ–शक्यपदाभ्याम् उत्पतनादिव्यापाराणां रुग्णदेहनियमनस्य[6] च अभावात् असंभव—अव्याप्तिशङ्कापरिहारः[7]। घटपटादिव्यावृत्त्यर्थं 'व्याप्यत्वे सति' इत्युक्तम्। परकायप्रविष्टं प्रति परकायस्य देहत्वव्यावृत्त्यर्थं 'सर्वात्मना' इति पदम्। आत्मनो धर्मभूतज्ञानम्, रत्नदीपादेः प्रभा च शरीरं स्यादिति तद्व्यावृत्त्यर्थं च 'व्याप्यत्वे सति' इत्युक्तम्! [8]अत एव शरीरलक्षणेऽपि [9]व्यावर्त्यं स्पष्टतरम्। एवम् [10]अन्यदप्यनुसन्धेयम्। शेषशेषिभावस्य शरीरशरीरिलक्षणत्वे तु, "स्वार्थे" "शक्यम्" इति पदानपेक्षैव ॥

उक्तलक्षणस्य व्याप्तिं दर्शयति **एवमेव हि** इति। उक्तं [11]शरीरात्मलक्षणं जगद्ब्रह्मणोः अस्तीति, तद्वाचिशब्दानां ब्रह्मपर्यन्तत्वं मुख्यम् इत्याह **एवम्** इति। एवं न्यायेन सर्वशब्दवाच्यत्वमुपपन्नम् – इत्युक्तम् ॥

---

१. हिर्नास्ति कुत्रचित्।
२. स्वशरीरत्वेन—पा०
३. शरीरवाच्यत्वम्—पा०
४. व्याप्तृत्वे सति, व्यापकत्वे सति—पा०
५. शरीरलक्षणम्—पा०
६. नियमस्य—पा०
७. असंभवाव्याप्तिपरिहारः—पा०
८. अतः शरीरलक्षणे—पा०
९. व्यावृत्तिः स्फुटतरम्, व्यावृत्त्यर्थः स्फुटतरम्—पा०
१०. अन्यत्रापि—पा०
११. शरीरात्मभावलक्षणम्—पा०

तदाह श्रुतिगणः — [1]"सर्वे वेदा यत्पदमामनन्ति", [2]"सर्वे वेदा यत्रैकं भवन्ति" इति। तस्य एकस्य[1] वाच्यत्वा[2]देकार्थवाचिनो भवन्ति—इत्यर्थः। [3]"एको देवो बहुधा सन्निविष्टः", [4]"सहैव सन्तं न विजानन्ति देवाः" [3]इत्यादि। देवाः — इन्द्रियाणि। देवमनुष्यादीनामन्तर्यामितया आत्मत्वेन[4] निविश्य, 'सहैव सन्तं' [5]तेषामिन्द्रियाणि मनःपर्यन्तानि न '[6]विजानन्ति' — इत्यर्थः॥

तथा च पौराणिकानि वचांसि — [5]"नताः स्म सर्ववचसां प्रतिष्ठा यत्र [7]शाश्वती"—वाच्ये हि वचसः प्रतिष्ठा,

---

तत्र प्रमाणमाह तदाह इति। सर्वे वेदाः इति। पदम् — "पद्यते" इति व्युत्पत्त्या प्राप्यमित्यर्थः। "यत्रैकं भवन्ति" [8]इत्येतत् व्याचष्टे तस्य इति। [6]"अर्थैकत्वादेकं वाक्यम्" इति न्यायेन ब्रह्मण एकस्यैव प्रधानतया वाच्यत्वात् सर्वे वेदाः एकवाक्यं भवन्ति इत्यर्थः। सर्वशब्दवाच्यत्वे हेतुप्रतिपादिकां श्रुतिमाह एको देवः इति। सर्वशरीरतया सर्वप्रकारत्वाद्धि सर्वशब्दवाच्यत्वम्[9]? सहैव इत्यादिवाक्यस्थं[10] देवशब्दं व्याचष्टे देवाः इति। उदाहृतवाक्यद्वयस्य अर्थमाह देव इति॥

स्मृतिवचनं दर्शयति तथा च इति। 'वचसां प्रतिष्ठा' इत्युक्ते शब्दगुणाश्रय—आकाशशङ्का स्यात् इति, तद्व्यावृत्त्यर्थं व्याचष्टे वाच्ये हि इति। प्रतिष्ठा—

---

१. तस्यैकस्यैव वाच्यत्वात्, तस्यैकस्य वाचकत्वात्—पा०
२. ऐकात्म्यवाचिनो—पा०
३. 'इत्यादि' इति क्वचिन्न।
४. आत्मनः—पा०
५. 'तेषाम्' इति क्वचिन्न।
६. जानन्ति—पा०
७. शाश्वतीति—पा०
८. इति – एतत् क्वचिन्न।
९. वाच्यत्वे—पा०
१०. वाक्यस्य देवशब्दम्—पा०

1. कठ. उ. २-१५.
2. आर. ३ प्र. ११ अनु.
3. आर. ३ प्र. १४. अनु.
4. आर. ३ प्र. ११. अनु.
5. वि. पु. १-१४-२.
6. पू. मी. ३-१-६.

[1] "कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्", [2] "वेदैश्च सर्वैरहमेव वेद्यः" [1]इत्यादीनि सर्वाणि हि वचांसि [2]सशरीरात्मविशिष्टमन्तर्यामिणमेव आचक्षते । [3] "तिस्रो[3] देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति हि श्रुतिः ॥

तथा च मानवं वचः— [4] "प्रशासितारं सर्वेषामणीयांसमणीयसाम् । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्" ।

[4]अन्तः प्रविश्य—अन्तर्यामितया, सर्वेषां प्रशासितारं—नियन्तारम्[5],

---

पर्यवसानम् । [6]उक्तार्थवैशद्यार्थमाह कार्याणाम् इति । वचसां वाच्यत्वे हेतुः, कार्याणां कारणत्वम्; [5] "सर्वं खल्विदं ब्रह्म तज्जलान्" इति हि श्रुतिः ? वेदैश्च इत्यादि । स्पष्टम् ॥

मनुवचनमाह तथा च इति । "प्रशासितारम्" इत्यादिश्लोकेन[7] सर्वशब्दवाच्यत्वे हेतुरुच्यते ।

इमं श्लोकं व्याचष्टे अन्तः इति । "अन्तः प्रविष्टः शास्ता जनानाम्" [8]इति श्रुत्यनुसारेण 'अन्तः प्रविश्य' इत्युक्तम् । अन्तः प्रविश्य [9]नियन्तारं इत्यन्वयः । कुतः ? [10]अन्तर्यामितया "योऽन्तरो यमयति" इत्यन्तर्यामिब्राह्मणप्रतिपादितत्वात् इत्यर्थः । अन्तः प्रविश्य । प्रशासितृत्वे हेतुः । "अणीयांसमणीयसाम्" इति

---

१. इत्यादीनि हि सर्वाणि वचांसि—पा०
२. सर्वशरीरात्मविशिष्ट—पा०
३. अहमिमास्तिस्रो देवताः, हन्ताहमिमाः तिस्रो देवताः—पा०
४. अन्तः प्रविश्य सर्वेषां नियन्तारम्—पा०
५. नियन्तारम् — इति क्वचिन्न ।
६. उक्तार्थे वैशद्यमाह, उक्तार्थपर्यवसानार्थमाह, उक्तार्थे वैशद्यार्थमाह—पा०
७. इत्यादिवाक्येन—पा०
८. इति हि—पा०
९. प्रशासितारमित्यन्वयः, शास्तारमित्यन्वयः—पा०
१०. अन्तर्यामित्वम्—पा०

1. जि. स्तो. ७.
2. गीता १५-१५.
3. छा. उ. ६-३-२.
4. मनुस्मृ. १२-१२२.
5. छा. उ. ३-१४-१.

अणीयांसः— आत्मानः[1], कृत्स्नस्याचेतनस्य[2] व्यापकतया सूक्ष्मभूताः[3], तेषामपि व्यापकत्वात्[4] तेभ्योऽपि सूक्ष्मतरः—इत्यर्थः। [5]रुक्माभः—आदित्य-

पष्ठ्यन्तं व्याख्येयं पदं व्याख्यानसौकर्यार्थं[6] प्रथमान्तत्वेनोपादत्ते अणीयांसः इति। 'रुक्माभम्' इति व्याख्येयं पदम्, [7]तद्व्याचष्टे आदित्यवर्णः[8] इति। [1]"यदा पश्यः पश्यते रुक्मवर्णम्", [2]"आदित्यवर्णं तमसः परस्तात्" इति वाक्ययोः दुराधर्षत्व-भोग्यताभिप्रायेण आदित्यवर्णत्वं रुक्मवर्णत्वं चोक्तम् इत्यभिप्रायेण [9]"आदित्यवर्णः" इति[10] व्याचष्टे। [11]तथा [3]"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति।

तत्र हिरण्यशब्दः औज्ज्वल्यपरत्वेन व्याख्यातो[12] वाक्यकारेण— [4]"हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्[13]" इति। [5]"नीलतोयदमध्यस्था" इत्यादिश्रुत्यनुसारेण हिरण्मयशब्दः एवं व्याख्यातः॥

नीलतोयदसाम्यम् उपासनविशेषोपास्यस्य[14] भगवतः उपासनान्तरोपास्यस्य[15] स्वरूपं हिरण्यवर्णमिति, हिरण्मयशब्दः न औज्ज्वल्यपरः—इति चेन्न। हृदयगुहायामेव

१. आत्मानः—एतत क्वचिन्न दृश्यते। आत्मन.—पा०
२. चेतनस्य—पा०
३. सूक्ष्मभूतानां तेषामपि, सूक्ष्मभूतास्ते तेषामपि—पा०
४. तेषामपि—पा०
५. रुक्माभं आदित्यवर्णम्—पा०
६. सौकुमार्यार्थम्—पा०
७. व्याचष्टे—पा०
८. आदित्यवर्णम्—पा०
९. आदित्यवर्णम—पा०
१०. इतिः क्वचिन्न।
११. तथेति क्वचिन्न। यथा—पा०
१२. व्याख्याकारेण—पा०
१३. चन्द्रमण्डलमुखवत्, चन्द्रमुख इति वत्—पा०
१४. उपास्यभगवतः—पा०
१५. उपास्यरूपम्—पा०

1. मु. उ. ३-१-३.
2. पुरुषसूक्तम् २०.
3. छा. उ. १-६-६.
4. बोधायनवृत्तिः।
5. तै. उ. ६-११.

वर्णः । स्वप्नधीगम्यः—स्वप्नकल्पबुद्धिप्राप्यः । विशदतमप्रत्यक्षतापन्न-अनुध्यानैकलभ्यः[1] इत्यर्थः ।

---

नीलतोयदसाम्य—हिरण्मयत्वश्रवणात् । [1] " पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् " इति प्रकृत्य[2], " नीलतोयदमध्यस्था " इति श्रूयते । [2] " स य एषोऽन्तर्हृदय आकाशः । [3] तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । " इति हृदयगुहायामेव हिरण्मयत्वं च[4] श्रूयते । तस्मात्[5] नीलतोयदसाम्यश्रुत्यानुगुण्यात्[6], हिरण्मय-शब्दः औज्ज्वल्यपरत्वेन व्याख्यातो वाक्यकारेण ॥

एवं वर्णयन्ति केचिदाचार्याः—" आदित्यवर्णम्, स्वप्नवर्णम्—इति वर्ण-शब्दस्वारस्यात् न केवलं हिरण्मयशब्दः औज्ज्वल्यमात्रपरः, अपि तु वर्णपर एव । तर्हि नीलतोयदसाम्यश्रुत्यविरोधः कथम् ? इति चेत्, उच्यते । नीलतोयदवर्णस्यैव हेतुविशेषेण स्वर्णवर्णत्वमुपपद्यते । तथा सति भगवद्विग्रहः बालातपानुलिप्तमरकत-गिरिनिभो विभाति । [7] तथा च श्रीरामायणे—[3] " कच्चिच्च तद्धेमसमानवर्णं तस्याऽऽननं पद्मसमानगन्धि " इति । नीलतोयदवर्णस्यैव[8] भगवतो हिरण्यवर्णत्वे हेतुः संप्रदायैकाधिगम्यः— इति नात्र लिख्यते * ॥

स्वप्नधीगम्यम् इत्येतद्व्याचष्टे स्वप्न इति ॥

---

* गुह्यार्थानां सहसा अवचनीयत्वात् ।

---

१. अनुध्यानैकगम्यः इत्यर्थः, अनुध्यानैक-लभ्यमित्यर्थः—पा०

२. प्रकृत्या—पा०

३. " तस्मिन्नयं पुरुषो मनोमयः " इति क्वचिन्न दृश्यते ।

४. चकारः क्वचिन्न

५. नीलतोयदसादृश्य—पा०

६. श्रुत्यनुगुणात्—पा०

७. तथाऽऽह श्रीरामायणे—पा०

८. एवकारः क्वचिन्न दृश्यते ।

1. तै. उ. ना. १२-२.

2. तै. उ. शीक्षा. ६-१.

3. रामा. सु. का. ३६-२८.

[1]"एतमेके[1] वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् । इन्द्रमेके परे प्राणम् अपरे ब्रह्म शाश्वतम् ॥ " इति । एके—वेदाः इत्यर्थः ॥

उक्तरीत्या परस्यैव ब्रह्मणः सर्वस्य प्रशासितृत्वेन सर्वान्तरात्मतया प्रविश्य अवस्थितत्वात् अग्न्यादयोऽपि[2] शब्दाः, शाश्वतब्रह्मशब्दवत्, तस्यैव वाचका [3]भवन्ति इत्यर्थः ।

---

एवं "प्रशासितारम्" इत्यादिश्लोकेन सर्वशब्दवाच्यत्वे[4] हेतुरुक्तः । अथ सर्वशब्दवाच्यत्वपरं श्लोकमाह एतम् इति । एकशब्देन, [5]वादिविप्रतिपत्तिशङ्का मा भूदिति, तं [6]व्याचष्टे [7]वेदा इत्यर्थः इति । वेदाः—वेदभागाः ॥

उक्तरीत्या[8]—पूर्वोक्तश्लोकरीत्या[9] । [10]सर्वस्य प्रशासितृत्वेन सर्वान्तरात्मतया प्रविश्य अवस्थितत्वात् इति । सर्वान्तरात्मत्वं नाम [11]सर्वस्य अनुप्रविश्य प्रशासितृत्वमित्यर्थः । "अपरे ब्रह्म शाश्वतम्" इति दृष्टान्ततया उक्तमित्यभिप्रायेणाह शाश्वतब्रह्मशब्दवत् इति । यथा अद्वारकब्रह्मशब्दादयः तस्यैव निरतिशय-[12]बृहत्त्वादिगुणविशिष्टस्य वाचकाः, तथा सद्वारकशब्दा अपि अग्न्यादिमुखेन ब्रह्मण एव वाचकाः इत्यर्थः ।

---

१. एवमन्ये—पा०
२. अग्न्यादयश्शब्दा अपि—पा०
३. भवन्ति—क्वचिदेतन्न दृश्यते ।
४. वाच्यत्वहेतुः, वाच्यत्वेन हेतुः—पा०
५. वादिप्रतिपत्तिशङ्का—पा०
६. ताव्याचष्टे—पा०
७. एक इति—पा०
८. उक्तनीत्या—पा०
९. पूर्वश्लोकोक्तनीत्या—पा०
१०. सर्वप्रशासितृत्वेन—पा०
११. सर्वानुप्रशासितृत्वम्—पा०
१२. ब्रह्मत्वादि—पा०

1. मनुस्मृतौ, १२-१२३.

तथा च स्मृत्यन्तरम् —[1] "ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान्। सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते" इति। "पितृ–देव–ब्राह्मण–हुताशनादिशब्दाः, [1]तन्मुखेन तदन्तरात्मभूतस्य विष्णोरेव वाचकाः" इत्युक्तं [2]भवति॥

दक्षवचनमाह तथा च इति। तद्व्याचष्टे [3]पितृदेव इति। "[4]पितृदेवादिशब्दवाच्यकर्मकं यजनं [5] विष्णुकर्मकम्" इत्युक्ते [6] पितृदेवादिशब्दानां विष्णुवाचित्व[7]मर्थसिद्धम्। तत्र को हेतुः? इति चेत्, "सर्वभूतान्तरात्मानम्" इति उच्यते। पितृदेवादिशरीरकत्वेन [8]तदन्तरात्मत्वात् तत्तच्छब्दाः परमात्मपर्यन्ताः— इत्यर्थः॥

एवम्, सिद्धवस्तुपराणां भेद–अभेद–घटकश्रुतीनामर्थः उपपादितः; तथाऽपि उपायपरवाक्य –निवर्त्यपरवाक्यपर्यालोचनया ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं प्रतीयते; [2]"ब्रह्मविदाप्नोति परम्", [3]"ब्रह्मवेद ब्रह्मैव भवति" इत्यादिषु ज्ञानस्य उपायत्वमुच्यते; ज्ञाननिवर्त्यं च मिथ्या, रज्जुसर्पादिवत्; निवर्त्यं च अज्ञानकृतम्; [4]"विभेदजनके ज्ञाने नाशमात्यन्तिकं गते", [5]"चतुर्विधो विभेदोऽयं[9] मिथ्याज्ञाननिबन्धनः", [6]"भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्" इत्यादिभिः[10]। एवम्, निवर्तकनिवर्त्यपरवाक्यैः ब्रह्मव्यतिरिक्तस्य मिथ्यात्वात्, तदनुगुणं श्रुत्यन्त-

१. तत्तन्मुखेन–पा०
२. भवतीति क्वचिन्न दृश्यते।
३. पितृदेवेति क्वचिन्न दृश्यते।
४. पितृदेवेत्यादिशब्दवाच्य–पा०
५. यजमानम्–पा०
६. "पितृदेवादिशब्दवाच्यकर्मकं यजनं विष्णुकर्मकम्" इत्युक्ते–इत्ययं ग्रन्थः क्वचिन्न दृश्यते।
७. विष्णुवाचकत्वम्–पा०
८. तदन्तरात्मतया–पा०
९. चतुर्विधोऽपि भेदोऽयम्–पा०
१०. इत्यादि, इत्यादि हि–पा०

1. दक्षस्मृतिः।
2. तै. उ. आन. १-१.
3. मु. उ. ३-२-९.
4. वि. पु. ६-७-९६.
5. विष्णुधर्मे–१०० अ. २१.
6. वि. पु. ६-७-९५.

अत्रेदं[१] सर्वशास्त्रहृदयम् :—

राणामपि अर्थो वर्णनीय इत्यत्राह अत्रेदं सर्वशास्त्रहृदयम् इति। जीवाद्वैतनिर्वाहार्थश्च अयमारम्भः। सर्वशब्देन उपायपरवाक्यानां, निवर्त्यपरवाक्यानां च कार्त्स्न्येन पर्यालोचनं, भेदश्रुति—भेदनिषेधश्रुतिपर्यालोचनं च विवक्षितम्। न हि कतिपयवाक्यैः अर्थनिष्कर्षः सुशकः। तस्मात् उपायपरवाक्येषु उपासननिदिध्यासनादिशब्दैः उपायं वदन्ति वाक्यानि; निवर्त्यपरेषु[२] च [1] "अविद्या कर्मसंज्ञाऽन्या" इत्यादिवाक्यानि [३] च निरूपणीयानि; भेदश्रुतयोऽपि निरूपणीयाः; [४] तदविरोधेन अर्थस्य वाच्यत्वात्॥

न च "निषेधार्थं भेदानुवादः" इति वाच्यम्, ईश्वर—ईशितव्यादिभेदानां प्रमाणान्तराप्राप्तत्वेन अनुवादासम्भवात्; तन्निषेधे[५] अभेदविधानस्य अप्रामाण्यं स्यात्।

[६] प्रमाणान्तराप्राप्तोऽपि भेदः फलविशेषार्थं [७] गरुडभावनादिवदारोप्यते इति चेत्, असतो[८] भेदस्य आरोपणम् इति कथमवगतम्? अभेदश्रुतिविरोधात् इति चेत्, भेदश्रुतिविरोधात् अभेदश्रुतिः फलविशेषार्थं [९] तदारोपणपरा स्यात्; गरुडाभेदो हि आरोप्यते? भेद एव हि तत्र परमार्थः? तत्त्वज्ञानस्यैव मोक्षोपायत्वात्।

१. तत्रेदम्—पा०
२. च वा—पा०
३. चकारः क्वचिन्न।
४. तथाविधेनान्यस्य, तदविरोधेनान्यस्य-पा०
५. तन्निषेधभेदविधानस्य, तन्निषेधे अभेद एव हि तत्र परमार्थः तत्त्वज्ञानस्यैव मोक्षोपायविधानस्याप्रामाण्यम्—पा०
६. प्रमाणान्तरप्राप्तोऽपि—पा०
७. गरुडभावनावत्—पा०
८. असतोऽपि—पा०
९. अभेदारोपणपरा—पा०

1. वि. पु. ६-७ ६१.

मुमुक्षून् प्रति अतत्त्वारोपणं[1] न संभवति इति चेत्, तत् भेदश्रुतेरपि समानम् । किञ्च[2] प्रमाणान्तराप्रज्ञातभेदभ्रमं जनयित्वा, तन्निषेधे प्रयोजनाभावात्, शास्त्रस्य प्रयोजनपर्यवसायित्वं न स्यात्; न हि शास्त्रस्य प्रयोजनपर्यवसायित्वेन[3] नियमः, अभिचारादिप्रतिपादनात्? इति चेन्न[4]। [5]तत्रापि तदर्थिनं प्रति प्रयोजनवत्त्वमस्त्येव; अभिचारस्तु देवब्राह्मण[6]विद्वेषिप्रभृतिपापकर्मपरेषु नरेषु[7] क्रियमाणः पुण्याय भवति; अभिचारादिकर्माराध्यत्व—तदपेक्षितफलप्रदत्वरूपम्, ईश्वरस्य वैभवं च ज्ञातव्यम्; यज्ञादीनामपि विद्याङ्गत्वस्य [8]तत्तदाराध्यत्व—फलप्रदत्वरूपवैभवस्य च[9] ज्ञातव्यत्वेन सर्वाः श्रुतयः प्रयोजनपर्यवसायिन्यः ॥

तस्मात् प्रयोजनपर्यवसायित्वमवश्यंभावि; तत्तु प्रमाणान्तरानवगतभेदज्ञापन-[10]तन्निषेधपरत्वे नोपपद्यते; तस्मात् भेदश्रुतयः उपायपराः; निवर्त्यपराश्च श्रुतयः कात्स्न्र्येन पर्यालोचनीया इति, तत्कृत्स्नपर्यालोचने[11] अस्मदुक्त एव अर्थः उपपन्नः स्यात्—इत्यभिप्रायेण "अत्रेदं सर्वशास्त्रहृदयम्" इत्युक्तम् ॥

१. मुमुक्षून्प्रत्यारोपणम्—पा०
२. प्रमाणान्तराप्राप्तभेद—पा०
३. पर्यवसायित्वनियमः—पा०
४. नेति क्वचिन्न ।
५. तदत्रापि—पा०
६. विद्वेष्टृप्रभृति—पा०
७. नरेष्विति क्वाचिन्न दृश्यते ।
८. तदाराध्यत्व, तत्तदाराध्य—पा०
९. वैभवस्यैव ज्ञातव्यत्वेन, वैभवस्याज्ञातव्यत्वेन—पा०
१०. भेदज्ञापनम्—पा०
११. पर्यालोचने भेदनिषेधस्य अस्मदुक्त एव—पा०

जीवात्मानः, स्वयम् असङ्कुचितापरिच्छिन्ननिर्मलज्ञानस्वरूपाः सन्तः, कर्मरूपाविद्यावेष्टिताः, [1]तत्तत्कर्मानुरूपज्ञानसङ्कोचमापन्नाः [2]ब्रह्मादिस्तम्बपर्यन्तविविधविचित्रदेहेषु प्रविष्टाः, तत्तद्देहोचितलब्धज्ञानप्रसराः,

तत्र निवर्त्यस्वरूपमाह जीव इत्यादिना । स्वयम् । स्वत इत्यर्थः । स्वभावत एव असङ्कुचितं ज्ञानम्, [3]रत्नादिप्रभायाः, [4]संकोचकाभावेऽपि कतिपयप्रदेशवर्तित्वं दृष्टमिति, तद्व्यावृत्त्यर्थम् "अपरिच्छिन्न" शब्दः । ज्ञानस्य निर्मलत्वं — [5]रागद्वेषादिरूपत्वाभावः, सर्वस्य भगवदात्मकत्वेन ग्रहणात् [6] न रागद्वेषादिभावः [7]। [8]स हि अयथावद्ग्रहणात् भवति । तस्मात् अयथार्थविषयत्वाभावः [9] नैर्मल्यं विवक्षितम् । स्वरूपशब्दः धर्मवाची [10] । कर्मरूपाविद्यावेष्टिताः इति । [1] "अविद्याकर्मसंज्ञाऽन्या" इति वचनात् [11] कर्मतारतम्यानुरूपस्संकोचः इत्याह तत्तत् इति । "विविध" शब्दः देवादिभेदपरः । "विचित्र" शब्दः अवान्तरवैविध्यपरः । तत्तद्देहोचितलब्धज्ञानप्रसराः इति । [2] "अप्राणिमत्सु [12] स्वल्पा सा स्थावरेषु" [13] इत्यादि वचनादिति भावः । पूर्वं कर्मतारतम्येन [14] ज्ञानसंकोचः उक्तः,

१. तत्कर्मानुरूप—पा०
२. ब्रह्मादिस्तम्बपर्यन्तेषु विचित्रदेहेषु—पा०
३. रत्नप्रभायाः—पा०
४. संकोचनाभावेऽपि—पा०
५. रागद्वेषरूपत्वाभावः, रागद्वेषत्वादिरूपाभावः—पा०
६. ग्रहणम्—पा०
७. द्वेषादिति भावः, द्वेषादिरिति विभागः, द्वेषाविर्भावः—पा०
८. स हि यथार्थ—पा० स हीति क्वचिन्न ।
९. विषयत्वाभावे, अविषयत्वात्—पा०
१०. धर्मिवाची—पा०
११. कर्मतारतम्यान्न स्वरूपसंकोचः, कर्मतारतम्यं न स्वानुरूपसंकोचः—पा०
१२. अप्राणवत्सु—पा०
१३. इति वचनात्—पा०
१४. कर्मतारतम्ये—पा०

1. वि. पु. ६-७-६१.
2. वि. पु. ६-७-६४.

तत्तद्देहात्माभिमानिनः, तदुचितकर्माणि कुर्वाणाः, तदनुगुणसुखदुःखोपभोगरूपसंसारप्रवाहं[1] प्रतिपद्यन्ते ॥

[2]एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यत इति, तदर्थं प्रथममेषां[3] देवादिभेदरहितज्ञानैकाकारतया[4] सर्वेषां साम्यं प्रतिपाद्य, तस्यापि स्वरूपस्य भगवच्छेषतैकस्वरूपैकरसतया भगवदात्मकतामपि प्रतिपाद्य, भगवत्स्वरूपं च, हेयप्रत्यनीककल्याणैकतानतया सकलेतरविसजातीयम्[5], अनवधिकातिशय – असंख्येयकल्याणगुणगणाश्रयम्[6], स्वसंकल्पप्रवृत्त-

---

कर्माधीनं[7] तारतम्यं देहविशेषद्वारकमिति अत्रोक्तम्। "तत्तद्देहात्माभिमानिनः" इत्यनेन, सुखदुःखविभागहेतुरुक्तः। आत्माभिमानानुकूलं हि सुखम्! तत्प्रतिकूलं हि दुःखम्? "तदुचितकर्माणि कुर्वाणाः" इत्यनेन बीजाङ्कुरन्यायात्[8] अनादित्वमुक्तं भवति ॥

अथ उपायमाह [9]एतेषाम् इति। प्रपत्तिमन्तरेण नोपपद्यते इति। भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं तदङ्गत्वेन प्रपत्तेरपेक्षितत्वात्, प्रपत्तिनिष्ठस्य स्वतन्त्रतया उपायत्वाच्च "प्रपत्तिमन्तरेण नोपपद्यते" इत्युक्तम्। तदर्थम् इत्यादि। प्राथम्यमर्थक्रमेण। न हि देहस्यैव आत्मत्वे मोक्षोपायापेक्षा? देहातिरिक्तत्वेऽपि भगवच्छेषतैकरसत्वे सिद्धे हि तत्प्राप्त्यपेक्षा? तस्मात् प्रथमज्ञाप्यं देहातिरिक्तज्ञानैकाकारत्वम्, भगवच्छेषतैकरसत्वं च आत्मनः इत्यर्थः। भगवत्स्वरूपं च इति। दिव्यात्मस्वरूपस्य हेयप्रत्यनीकत्वं कल्याणरूपत्वं चोच्यते हेय इति। मङ्गलगुणाश्रयत्वमुच्यते अनवधिक इति। [10]कल्याणैकताकतया—आनन्दरूपत्वम्। शरीरात्मभावमाह

---

१. प्रवाहरूपम्—पा०
२. एषाम्, तेषाम्, येषाम्—पा०
३. तदर्थमेतेषाम्—पा०
४. ज्ञानाकारतया—पा०
५. विसजातीयासंख्येयकल्याणगुणगण—पा०
६. गुणगणालयम्—पा०
७. कर्माधीनानां तारतम्यम्—पा०
८. बीजाङ्कुरनयात्, बीजाङ्कुरादिन्यायात्—पा०
९. एषामिति—पा०
१०. कल्याणैकतानत्वम्—पा०

समस्तचिदचिद्वस्तुजाततया सर्वस्य आत्मभूतं प्रतिपाद्य, [1]तदुपासनं साङ्गं, तत्प्रापकं प्रतिपादयन्ति शास्त्राणीति [2] ॥

यथोक्तम् — [1] "निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः ॥", "प्रकृतिसंसर्गकृतकर्ममूलत्वात् [3] न आत्मस्वरूपप्रयुक्ताः धर्माः" इत्यर्थः [4] । प्राप्ताप्राप्तविवेकेन "प्रकृतेरेव धर्माः" इत्युक्तम् ॥

---

स्वसंकल्प इति । उपायश्च उपासनमित्याह [5] तदुपासनम् [6] इति ॥

यथोक्तमित्यादिना [7] उक्तक्रमेण प्रमाणान्युपन्यस्यन् आत्मनो ज्ञानैकाकारत्वे [8] प्रमाणमाह **निर्वाण** इति । कथं अचेतनप्रकृतेः दुःखाद्यास्पदत्वमिति शङ्कायां तद्व्याचष्टे **प्रकृति** इति । दुःखादीनामौपाधिकत्वमस्तु, तथाऽपि प्रकृतेरेव धर्माः इति निर्देशः कथम्? इत्यत्राह **प्राप्त** इति । **प्राप्ताप्राप्तविवेकेन** । अन्वयव्यतिरेकाभ्यामित्यर्थः । "प्रकृतेरेव धर्माः" इति व्याख्येयग्रन्थभङ्ग्यनुकारः [9] । "दुःखादीनां प्रकृतिधर्मत्वे यत्फलम्, तत्फलं प्रकृतिधर्मत्वाभावे दृष्टम् इत्यभिप्रायेण "प्रकृतेरेव धर्माः" इति निर्देशः इत्यर्थः । प्रकृतिसंबन्धे सति दुःखादिसद्भावः, [10] प्रकृतिविरहे दुःखादिनिवृत्तिश्च इति [11], दुःखादीनां प्रकृतिधर्मत्वे यत्फलं, तदिदानीं दृष्टम् इत्यभिप्रायेण "प्रकृतेरेव धर्माः" इति वचनभङ्गिः इति यावत् ॥

---

१. तदुपासनसाङ्गतत्प्रापकम्—पा०
२. क्वचिदितिः नास्ति ।
३. कर्ममूलात्—पा०
४. "इत्यर्थः" इति क्वचिन्न दृश्यते ।
५. "आह तदुपासनमिति" — इत्येतत् क्वचिन्न ।
६. आह उपासनमिति—पा०
७. यथोक्तमित्यादि—पा०
८. ज्ञानैकाकारत्वप्रमाणम्—पा०
९. ग्रन्थभङ्ग्याकारः—पा०
१०. प्रकृतिसंबन्धविरहे—पा०
११. इति हि—पा०

1. वि. पु. ६-७-२२

[1]"विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥" इति, "देव–तिर्यङ्–मनुष्य–स्थावररूप[1]–प्रकृतिसंसृष्टस्य[2] आत्मनः, स्वरूपविवेचनी बुद्धिः[3] येषां ते पण्डिताः", तत्तत्प्रकृतिविशेष[4]विविक्त–आत्मयाथात्म्यज्ञानवन्तः; [5]तत्र तत्र अत्यन्त-विषमाकारे वर्तमानं आत्मानं समानाकारं[6] पश्यन्तीति "समदर्शिनः" इत्युक्तम् ॥

तदिदमाह[7] – [2]"इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः ।

---

देवादिभेदस्यौपाधिकत्वात् उपाधिवियुक्तस्वरूपसाम्ये[8] प्रमाणमाह विद्या इति । ब्राह्मणादेरुत्कर्षं, इतरेषामप्यपकर्षं च शास्त्रसिद्धेऽपि, समदर्शित्वमपाण्डित्यमेव इति शङ्कायां पण्डितशब्दं व्याचष्टे देव इति । उत्कर्षापकर्षशास्त्रम् उपाधिसंसृष्टविषयम्, [9]तद्वियुक्तस्वरूपस्य साम्यमेव इत्यर्थः । पण्डितशब्दार्थमनुवदन् वाक्यार्थं योजयति तत्तद् इति । [3]"विद्या विनयसंपन्न" इति श्लोकेन तत्तद्वैषम्यं विद्यमानमपि, न आत्मस्वरूपस्पर्शि–इति दर्शयितुं ब्राह्मणत्वादिविशिष्टे समदर्शित्वमुक्तम् ॥

साम्यम्–उपाधिवियुक्तस्वरूपविषयम् इति स्पष्टयितुमाह तदिदमाह इति । दोषशब्दस्य अभक्ष्यभक्षणादिमात्रविषयत्वशङ्काव्युदासाय निर्दोषशब्दं व्याचष्टे

---

१. स्थावरात्मक–पा०
२. प्रकृतिसंसर्गस्य–पा०
३. विवेचनबुद्धिः–पा०
४. विमुक्तात्मतया, वियुक्तात्मयाथात्म्य–पा०
५. तत्रेति क्वचिन्न दृश्यते ।
६. सामानाधिकरण्यम्–पा०
७. तदिदमाह निर्दोषम्–पा०
८. उपाधिवियुक्तसाम्ये, उपाधिवियुक्तरूपसाम्ये–पा०
९. तद्वियुक्तरूपस्य–पा०

1. गीता ५-१८.
2. गीता ५-१९.
3. गीता ५-१८.

निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥" इति। निर्दोषम्—[1] देवादिप्रकृतिविशेषसंसर्गरूपदोषरहितम्। "स्वरूपेणावस्थितं[2] सर्वम् आत्मवस्तु निर्वाणरूपज्ञानैकाकारतया 'समम्'" इत्यर्थः ॥

"तस्यैवम्भूतस्य आत्मनः भगवच्छेषतैकरसता[3], तन्नियाम्यता, तदेकाधारता च, तत्तच्छरीर–तत्तनुप्रभृतिभिश्शब्दैः, तत्सामानाधिकरण्येन च श्रुतिस्मृतीतिहासपुराणादिषु प्रतिपाद्यते[4]" इति पूर्वमेवोक्तम् ॥

[1]"दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥"[5] इति, "तस्यैतस्य आमनः, [6]कर्मकृतविचित्र-गुणमयप्रकृतिसंसर्गरूपात् संसारात् मोक्षः, भगवत्प्रपत्तिमन्तरेण नोपपद्यते" इत्युक्तं भवति; [2]"नान्यः पन्था अयनाय विद्यते" इत्यादिभिः[7] श्रुतिभिश्च ॥

---

निर्दोषम् इति। वाक्यार्थमाह स्वरूपेण इति ॥

उक्तक्रमेण उपपाद्यत्वेन प्राप्तस्य भगवदात्मकत्वस्य[8] प्रागेवोपपादितत्वमाह तस्यैवम् इत्यादिना[9]। प्रपत्तिमन्तरेण मोक्षासिद्धौ प्रमाणमाह दैवी इति। 'गुणमयी' इत्यनेन मायाशब्दः प्रकृतिवाची इति गम्यते। तद्व्याचष्टे तस्य इति। तस्यैतस्य स्वतः शुद्धस्यापि[10] उपाधितो मलिनस्येति भावः। श्रुतिमाह नान्यः इति। इत्यादिभिः श्रुतिभिश्च भगवत्प्रपत्तिमन्तरेण नोपपद्यते इत्युक्तं भवति इत्यन्वयः ॥

---

१. देवादिरूपप्रकृतिविशेष, देवादिप्रकृतिसंसर्गविशेषरूप—पा०
२. सर्वात्मवस्तु—पा०
३. रसतया—पा०
४. प्रतिपाद्यन्ते—पा०
५. इति – क्वचिदेतन्न।
६. कर्मकृतेति क्वचिन्न।
७. इति श्रुतिभिश्च, इत्यादिश्रुतिभिश्च—पा०
८. भगवदात्मकत्वेनोपपाद्यत्वस्य—पा०
९. इत्यादि—पा०
१०. सिद्धस्यापि—पा०

1. गीता ७-१४.
2. पुरुषसूक्तम् १७.

[1] "मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥"

[1] इति, [2] सर्वशक्तियोगात् स्वैश्वर्यवैचित्र्यमुक्तम् ॥

---

कथं [2] "तमेवं विद्वान् [3]" इत्यादिवाक्यानां प्रपत्तिमन्तरेण मोक्षानुपपत्तिपरत्वम्? उच्यते; "तमेवं विद्वान्" इत्यादिवाक्यानाम् उपासनविधिपरत्वात्, उपासनस्य च [4] स्वनिष्पत्त्यर्थं प्रपत्तिसापेक्षत्वाच्च उक्तार्थः फलितः। वाक्यार्थज्ञानमात्रस्य उपायताव्यावृत्तिरेवाभिप्रेता। यद्वा, "विद्वान्" इति वेदनवाचिशब्दः उपासनप्रपदनसाधारणः इति भावः ॥

पूर्वोक्तस्य भगवदेकनियाम्यत्व [5] तदेकधार्यत्वादेः प्रमाणं च वदन्, "न च मत्स्थानि भूतानि" इत्यत्र सर्वात्मकत्वं मिथ्येत्युच्यते [6] इति शङ्कान्तरं च परिहरति **मया** इति। तद्व्याचष्टे **स्वैश्वर्य** इति। "मया ततम्" इत्यादिना व्याप्तिरुक्ता [7]। व्याप्तिश्च [8] धारकत्वेन इत्युक्तम्। "मत्स्थानि" इति भगवतः तदायत्तस्थितित्वं व्यावर्तितम्। **न चाहं तेष्ववस्थितः** इति। एवं स्वायत्तस्थितित्वविधानात्, न तदेव निषिध्यते "न च मत्स्थानि" इति, अपि तु लोके धार्यधारकभावः यथा भवति, तथात्वं निषिध्यते; अनायासेन स्वसंकल्पमात्रेण धारकत्वादित्यर्थः। धारकत्वे सत्यपि लोकसिद्धधार्यधारकभाववैलक्षण्यमेव उपपादयति **पश्य मे योगमैश्वरम्** इति। तस्मात्, स्वैश्वर्यवैचित्र्यमुक्तम् [9] इत्यर्थः ॥

---

१. इतीति क्वचिन्न ।
२. 'सर्वशक्तियोगात्' इति क्वचिन्न ।
३. तमेवं विद्वानमृत—पा०
४. चकारः क्वचिन्न दृश्यते ।
५. नियाम्यत्वम्—पा०
६. "उच्यते" इति कुत्रचिन्न दृश्यते ।
७. "व्याप्तिरुक्ता" इति क्वचिन्नोपलभ्यते ।
८. धारकत्वेनेत्युक्तम्—पा०
९. उक्तमिति कुत्रचिन्न दृश्यते ।

1. गीता ९-४.
2. पुरुषसूक्तम् १७.

[1] तदाह [1] "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।" इति । अनन्तविचित्रमहाश्चर्यरूपं[2] जगत्, मम [3] अयुतायुतांशांशेन आत्मतया प्रविश्य, सर्वं मत्संकल्पेन विष्टभ्य, अनेन रूपेण, अनन्तमहाविभूतिः[4] अपरिमितोदारगुणसागरः, निरतिशयाश्चर्यभूतः, स्थितः अहम्— इत्यर्थः ॥

---

एवम्, सर्वशक्तियोगात् [5] स्वसंकल्पैकदेशेन धारकत्वे स्पष्टं प्रमाणमाह— तदाह इति । तद्व्याचष्टे अनन्त इति । अनन्तविचित्रमहाश्चर्यम्[6] — अनन्त-वैचित्र्यात्[7] विस्मयनीयमित्यर्थः । "अयुतायुतांशांशेन[8]" इत्यनेन [2] "यस्या-युतायुतांशांशे विश्वशक्तिरियं स्थिता" इति वचनं स्मारितम् । प्रशासनेन सर्व-धारणश्रुत्यनुरोधादुक्तम् "मत्संकल्पेन" इति; न तु [9] एकांशेन इति अंशशब्द-व्याख्यानम् । अंशशब्दः स्वरूपैकदेशपरः, निरंशे प्रतिपदार्थं पूर्णवर्तिन्यपि स्वरूपे अंशशब्दव्यवहारः, एकस्मिन्नेव वस्तुनि स्वरूपस्य पूर्णवृत्तितया[10] अन्यत्र वृत्त्य-योग्यत्वशङ्काव्युदासार्थः । एकांशेन इत्यनेन फलितमर्थमाह अनेन रूपेण इति । एवम्, मायावादपक्षानुगुण्यशङ्कावहः "न च मत्स्थानि" इति ग्रन्थो व्याख्यातः ॥

---

१. तदाहेति क्वचिन्न । तथा हि, तथाऽऽह—पा०
२. "रूपम्" इति क्वचिन्न दृश्यते ।
३. अयुतायुतांशेन, अयुतांशांशेन—पा०
४. महाविभूत्यपरिमितोदारगुण—पा०
५. संकल्पैकदेशेन—पा०
६. अनन्तविचित्रमहाश्चर्यम्—कुत्रचिदेतन्न ।
७. वैचित्र्यविस्मयनीयम्—पा०
८. अयुतांशांशेन, अयुतायुतांशेन—पा०
९. एकांशशब्दव्याख्यानम्, एकांशशब्दस्य व्याख्यानम्—पा०
१०. पूर्ववर्तितया—पा०

1. गीता १०-४२.
2. वि. पु. १-९-५३.

तदिदमाह—"एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति॥"[1] इति, "प्रशासितृत्वेन एक[2] एव सन् विचित्रचिदचिद्वस्तुषु[3] अन्तरात्मतया प्रविश्य, [4]तद्रूपेण [5]विचित्रप्रकारः, [6]विचित्रकर्म कारयन्, नानारूपतां भजते॥

अथ [7]भेदाभेदानुगुण [8]इव [9]यः श्लोकः, स व्याख्यायते तदिदमाह इति। तदिदम्—आश्चर्यरूपत्वम्। एकत्वे सति नानात्वम् इत्येतद्व्याचष्टे प्रशासितृत्वेन इति। एकशब्दः प्रकार्यैक्यपरः। शरीरितया प्रकारित्वोपपादकम् 'प्रशासितृत्वेन' इति पदम्। [10]तद्रूपेण विचित्रप्रकारः—[11]तत्तच्छरीरतया विचित्रप्रकारः। विचित्रकर्म कारयन् इति। अनेन तदधीनप्रवृत्तित्व[12]मुक्तम्। तच्च तन्नियाम्यत्वमिति शरीरित्वमुपपादितं भवति। नानारूपतां भजते इति। तत्तच्छरीरकतया[13] विचित्रप्रकारत्वं[14] नानारूपत्व[15]मित्यर्थः॥

१. इतिः कुत्रचिन्नास्ति।
२. एवकारः क्वचिन्न दृश्यते।
३. वस्त्वन्तरात्मतया, वस्तुषु आत्मतया, वस्तुषु अनन्तात्मतया—पा०
४. तद्रूपेण—पा०
५. विचित्राकारः—पा०
६. विचित्रं कर्म—पा०
७. भेदानुगुण—पा०
८. इव—क्वचिन्न दृश्यते।
९. यः—कुत्रचिन्न दृश्यते।
१०. तद्रूपेण—पा०
११. तच्छरीरतया—पा० "तत्तच्छरीरतया विचित्रप्रकारः" इति क्वचिन्न दृश्यते।
१२. प्रवृत्तिकत्वम्—पा०
१३. तच्छरीरतया—पा०
१४. विचित्रप्रकारत्वान्नानारूपत्वम्—पा०
१५. नानाप्रकारत्वम्—पा०

एवम्, '[1]स्वकल्पांशेन तु सर्वैश्वर्यमयं, नानारूपं जगत्, [2]तदन्तरात्मतया [3]प्रविश्य, [4]विष्टभ्य, नानात्वेनावस्थितोऽपि सन्[5]', अनवधिकातिशय—असंख्येयकल्याणगुणगणः, सर्वेश्वरेश्वरः, परब्रह्मभूतः,

ननु [6]कारणावस्थया एकत्वं, कार्यरूपेण नानात्वं च किमिति नोक्तं स्यात्? उच्यते; तदानीम् एकत्वशब्दः कारणावस्थापरः स्यात्, भावप्रत्ययान्तत्वात्, [7]कारणावस्थत्वं च अविभक्तनामरूपत्वम्, तच्च, विभक्तनामरूपदशायां विरोधादेव नास्ति; तस्मात् एकत्वे सति नानात्वाभिधानम् अयुक्तम्—इत्यभिप्रायेण एवं व्याख्यातम् ॥

'नानात्वे सति चैकता' इत्येतद्व्याचष्टे एवम् इति। 'अवस्थितोऽपि सन्' इत्यन्तेन 'नानात्वे सति' इत्येतद्व्याख्यातम्। [8]लीलाविभूतिविशिष्टवैचित्र्यानुभापण-परः नानात्वशब्दः सप्तम्यन्तः—इत्यर्थः। एकतापदं व्याचष्टे अनवधिक इति। नित्यविभूतिमत्तया समाभ्यधिकराहित्यम् एकताशब्दार्थः। 'अनवधिक' इत्यादिना तदुपयोगिविशेषणानि [9]उच्यन्ते। तत्र विभूतिद्वयनियमन[10] धारणाद्यनुगुण-गुणकत्वम्[11] 'अनवधिक'[12] इत्यादिपदेन उक्तम्। ईश्वरातिरिक्तब्रह्मव्यावृत्त्यर्थं

१. स्वसंकल्पान्नानारूपं जगत्—पा०
२. अन्तरात्मतया—पा०
३. प्रविश्य—पा०
४. विष्टभ्येति क्वचिन्न।
५. सन्निति कुत्रचिन्न दृश्यते।
६. कारणावस्थतया—पा०
७. कारणावस्था च, कारणावस्थात्वं हि—पा०
८. लीलाविभूतिवैचित्र्य—पा०
९. विशेषणान्यपि—पा०
१०. नियमनधारणाद्यनुगुण—पा०
११. धारणाद्यनुगुणत्वम्—पा०
१२. इत्यादिनोक्तम्—पा०

[1] "यो वेद निहितं गुहायां परमे व्योमन्", [2] "तदक्षरे परमे व्योमन्" इत्यादिश्रुतिसिद्धे[1] एक[2] एव अवतिष्ठते ॥

ब्रह्मव्यतिरिक्तस्य [3] कस्यचिदपि[4] वस्तुनः, एकस्वभावस्य,

---

मक्षिणी" इत्युक्ते [5] पङ्कजदोषाः अक्षिणि मा भूवन्नित्यभिप्रायेण 'अमल' शब्दः। [6] पङ्कजादधिकगुणनिवृत्तिशङ्काव्यावृत्त्यर्थस्तु 'आयत' शब्दः। 'नित्यविभूतियोगोऽपि [7] समाभ्यधिकराहित्यहेतुः' इत्यभिप्रायेण 'परमे[8] व्योम्नि' इत्याद्युक्तम्।

[3] "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्", [4] "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रुत्यनुरोधेन एवं व्याख्यातम्। अत्र [9] हि "एष सर्वभूतान्तरात्मा", "तेनेदं पूर्णम्" इति लीलाविभूतिविशिष्टत्वम्। "दिवि तिष्ठत्येकः", "दिव्यो देव एकः" इति द्युशब्दादिवाच्यनित्यविभूतिसम्बन्धित्वेन एकत्वं च अवगम्यते; अन्यथा "नानात्वे सति चैकता" इत्यस्य, प्रथमपादोक्तनानात्व-एकत्वमात्रपरत्वे[10], पौनरुक्त्यं स्यात्, प्रयोजनाभावात्, [11] सकृदुक्त्याऽपि हि [12] अचिन्त्यत्वं सिध्यति ॥

अथ "अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति" इत्येतद्व्याचष्टे ब्रह्म इत्यादिना। एकस्वभावस्य। न हि [1] एकौष्ण्यस्वभावः अग्निः, शैत्यस्वभावो

---

१. श्रुतिसिद्धः—पा०
२. एकः इति क्वचिन्न।
३. कस्यचिदचिद्वस्तुनः—पा०
४. अपिः क्वचिन्न।
५. पङ्कजत्वादिदोषाः, पङ्कजत्वदोषाः—पा०
६. पङ्कजाधिकगुण—पा०
७. अपिः क्वचिन्न।
८. परमव्योम्नि—पा०
९. हिर्नास्ति क्वचित्।
१०. एकमात्रपरत्वे—पा०
११. सकृदप्यचिन्त्यत्वम्—पा०
१२. अविचिन्त्यत्वम्—पा०
१३. औष्ण्यस्वभावः—पा०

1. तै. उ. आ. १-४.
2. तै. उ. ना. १-४.
3. तै. उ. ना. १२-३.
4. सु. उ. ७.

एककार्यशक्तियुक्तस्य, एकरूपस्य — [1]रूपान्तरयोगः, [2]स्वभावान्तरयोगः, शक्त्यन्तरयोगश्च न घटते; [3]तस्य एकस्य [4]परस्य ब्रह्मणः, सर्ववस्तुविसजातीयतया सर्वस्वभावत्वं, सर्वशक्तियोगश्चेति, एकस्यैव [5]विचित्र-अनन्तनानारूपता च, पुनरपि, अनन्तापरिमिताश्चर्ययोगेन एकरूपता च

भवति। [6]एककार्यशक्तियुक्तस्य। न हि [7]दाहशक्तः अग्निः [8]जाड्यजनन-शक्तः। एकरूपस्य। एकाकारस्य; न हि ऊर्ध्वज्वलनवतो रूपवतः अग्नेः गन्धादि-मत्त्वं, तिर्यग्गमनादिकं [9] वा? इत्यभिप्रायः। सर्ववस्तुविसजातीयतया इति। विसजातीयधर्मिणः विसजातीयधर्मयोगः उपपद्यते इत्यर्थः। विचित्र इति। [10]विस्मयनीयमित्यर्थः। पुनरपि इति। अनन्तशब्दः असङ्ख्येयवाची। अपरि-मिताश्चर्यशब्देन अत्यन्ताश्चर्यत्वं विवक्षितम्। अनन्तापरिमिताश्चर्ययोगेन एक-रूपता च इति। [11]असंख्येयात्यन्ताश्चर्यभूतपदार्थयोगेन समाभ्यधिकराहित्यम् इत्यर्थः। [12]अत्यन्ताश्चर्यभूतपदार्थयोगो नाम [13]दिव्यायुधभूषणादियोगः।

१. रूपयोगः—पा०
२. स्वभावान्तरयोगः—क्वचिदेतन्न दृश्यते।
३. तस्यैतस्य—पा०
४. परब्रह्मणः—पा०
५. विचित्रनानारूपता—पा०
६. एकैककार्य—पा०
७. दहनशक्तः—पा०
८. जाड्यच्छेदनशक्तः—पा०
९. पवनादिमत्त्वम्, पवनादिकम्—पा०
१०. विविधमित्यर्थः—पा०
११. असंख्येयात्यन्ताश्चर्यभूतमित्यर्थः—पा०
१२. अनन्ताश्चर्यभूत—पा०
१३. दिव्यादिभूषण—पा०

न विरुद्धा इति वस्तुमात्रसाम्यात् विरोधचिन्ता न युक्ता इत्यर्थः ॥

यथोक्तम् :—

[1] "शक्तयः सर्वभावानाम् अचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।
भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णता ॥" [ इति ]

एतदुक्तं भवति :—"सर्वेषाम् अग्निजलादीनां भावानां एकस्मि-
[illegible]
वस्तुमात्रसाम्यात् इति । 'वस्तुत्वात् चेतनोऽपि अचित् स्यात्' इत्यादिवत् अयुक्तमिति भावः । अस्य वचनस्य ब्रह्मणो [1] भिन्नाभिन्नतापरत्वमपि [2] अयुक्तम् ; "अचिन्त्यं ब्रह्मणो रूपं कस्तद्वादनुमर्हति" इत्युक्तत्वात् । न हि मृद्घटादिष्वपि [3] दृष्टत्वेन पराभिमतस्य भिन्नाभिन्नत्वस्य [4] अचिन्त्यत्वम् ? [5] पदार्थादिष्वपि तस्य [6] तर्कानवधेयत्व-मुच्यते इति चेत् , न ; 'ब्रह्मणो रूपम्' इत्युक्तेः ॥

एवं यथाकथञ्चित् , सामान्यमात्रेण विजातीयधर्मिणः विजातीयधर्मासंभवा-पादनस्य अयुक्तत्वे प्रमाणमाह यथोक्तम् इति । पावकस्य सर्गादिशक्तिः नास्ति ; तस्मात् दृष्टान्तदार्ष्टान्तिकयोः विवक्षितांशः कः ? इत्यपेक्षायां तद्व्याचष्टे एतदुक्तं भवति इति । नानुमातुं युक्तमिति एतदुक्तं भवति इत्यन्वयः । सर्गाद्या भावशक्तयः इति । भावः—पदार्थः [7] , सर्गादिगोचराः पदार्थशक्तयः ब्रह्मणः संभवन्ति इत्यन्वयः । एतत्प्रतिपादनपरं वाक्यमिति वक्तव्ये [8] प्रतिपादन-तत्परमितिवत् , पदार्थशक्तयः

१. भिन्नाभिन्नपरत्वम् , भिन्नतापरत्वम् , भिन्नाभिन्नत्वज्ञापनपरत्वम्—पा०
२. अपि: क्वचिन्न ।
३. मृत्त्वेन—पा०
४. भिन्नाभिन्नस्य—पा०
५. घटपटादेरपि—पा०
६. तर्कबाध्यत्वम् , तर्कचोद्यत्वम्—पा०
७. पदार्थाः, पदार्थः गोचराः सर्गाद्या इति वक्तव्ये सर्गादिगोचराः—पा०
८. एतत्प्रतिपादनतत्परम्—पा०

1. वि. पु. १-६-२.

क्वापि[1] भावे दृष्टौ[2] शक्तिः, [3]तद्विसजातीयभावान्तरेऽपि इति[4] न चिन्तयितुं युक्ताः; जलादौ अदृष्टाऽपि, [5]तद्विसजातीये पावके [6]भास्वरत्वोष्णत्वादि-[7]शक्तिः यथा दृश्यते, एवमेव सर्वेभ्यः विजातीये ब्रह्मणि सर्वसाम्यं[8] नानुमातुं युक्तम् इति। अतः विचित्रानन्तशक्त्युपेतं ब्रह्म इत्यर्थः। तदाह :

[1]“जगदेतन्महाश्चर्यं[9] रूपं यस्य महात्मनः।
तेनाश्चर्यवरेणाहं भवता कृष्ण! सङ्गतः॥” इति[10]।

तदेतत् नानाविधानन्तश्रुतिनिकर- शिष्टपरिगृहीततद्व्याख्यानपरि-श्रमात् अवधारितम् ॥

इति निर्देशः। फलितार्थमाह अतः विचित्र इति। ब्रह्मणः सकलेतर[11]विसजातीयत्वात् आश्चर्यशक्तियोगे प्रमाणमाह तदाह इति। अक्रूरवचनमिदम्[12] ‘जगदेतत्’ इत्यादि।[1] स्वविरचितग्रन्थस्य[14] आपातप्रतीतार्थमात्रेण न केवलं विवक्षितम्[15], अपि तु अतिगम्भीरत्वात् अर्थगौरवमस्ति इत्यभिप्रायेणाह तदेतत् इति। तदेतत्—अभेद—भेद—घटकश्रुत्यादिविषय[16]मुक्तमर्थजातम् इत्यर्थः। अधीयमानानामेव

१. क्वचिदपि न दृश्यते।
२. एवकारः क्वचिन्नास्ति। दृष्टैव हि—पा०
३. तद्विसजातीये भावान्तरे—पा०
४. इतिः क्वचिन्न।
५. तद्विजातीये, तद्विसजातीयपावके—पा०
६. अवभासकत्वौष्ण्यत्वादि, भास्वरत्वोष्ण-तादि—पा०
७. उष्णताशक्तिः—पा०
८. सर्वसाम्यात्—पा०
९. महाश्चर्यरूपम्—पा०
१०. इतिर्न दृश्यते क्वचित्।
११. सकलेतरेति विसजातीय—पा०
१२. इदमिति कुत्रचिन्न।
१३. स्वनिबद्धग्रन्थस्य—पा०
१४. आपातप्रतीतिस्वमात्रम्—पा०
१५. विवक्षितमित्यर्थं अपि तु—पा०
१६. विषयमर्थजातम्—पा०

१. वि. पु. ५-१९-७.

तथा हि :—[1]प्रमाणान्तरापरिदृष्ट—अपरिमितपरिणाम—अनेकतत्त्व-[2]नियतक्रमविशिष्टौ सृष्टिप्रलयौ, ब्रह्मणः अनेकविधाः श्रुतयो वदन्ति ॥

श्रुतीनां नानाविधत्वं दृश्यते । अर्थवैविध्यात्[3] नानाविधत्वम् । अनन्तशब्देन [4]अनधीयमानाः इतिहासपुराणोपबृंहिताः शाखाभेदाः विवक्षिताः । सोपबृंहणश्रुति-निकरेषु, [5]तद्व्याख्यानेषु च परिश्रमात् अवधारितमित्यर्थः ॥

श्रुतीनां नानाविधत्वं कथम्? तासां त्वदुक्तार्थपरत्वं वा कथम्? इत्यत्राह तथा हि इति । तत्र प्रथमं सृष्टिप्रलय—[6]श्रुतिवैविध्यमाह प्रमाण इति । अनेकतत्त्वानि[7] — महदादीनि । तानि च अपरिमितपरिणामानि[8] । 'प्रकृतेः महान्, महतोऽहङ्कारः' इति [9]पारम्पर्यनियतः क्रमः[10] । अनेकतत्त्वानि, नियतक्रमाश्च[11] प्रमाणान्तराविषयाः[12]; तैः विशिष्टौ सृष्टिप्रलयौ इत्यर्थः । अनेक-विधाः श्रुतयः इति । क्वचित् तेजोऽबन्नमात्रसृष्टिः, क्वचित् पञ्चभूतमात्रसृष्टिः, क्वचित् महदादिसृष्टिश्च इति [13]सृष्टिवैविध्यं श्रूयते; [14]तत्र, सृष्टिप्रलयपरकृत्स्न-वाक्यपर्यालोचनया हि सृष्टिप्रलयक्रमनिष्कर्षः क्रियते? एवम् अर्थान्तरेष्वपि कृत्स्न-

१. प्रमाणान्तरादृष्ट—पा०
२. अनेकत्वनियत—पा०
३. अर्थवैविध्यम्—पा०
४. अधीयमानाः—पा०
५. "तद्व्याख्यानेषु"—क्वचिदेतन्न ।
६. स्थितिवैविध्यम्—पा०
७. अनेन तत्त्वानि—पा०
८. प्रमाणानि—पा०
९. पारम्पर्यान्नियतक्रमः, पारम्पर्यं नियतक्रमः—पा०
१०. क्रमानेकतत्त्वानि—पा०
११. नियमतः क्रमश्च—पा०
१२. प्रमाणान्तरविषयाः, प्रमाणान्तराविषयः—पा०
१३. सृष्टि—इति क्वचिन्न ।
१४. अत्र—पा०

[1] "निरवद्यम्, निरञ्जनम्", [2] "विज्ञानम्", [3] "आनन्दम्", [4] "निर्विकारम्", [5] "निष्कलम्, निष्क्रियम्, शान्तम्", [6] "निर्गुणम्" इत्यादिकाः, निर्गुणं [१] ज्ञानस्वरूपं ब्रह्मेति काश्चन श्रुतयो अभिदधति ॥

[7] "नेह नानास्ति किञ्चन, मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति", [8] "यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं [२] पश्येत्, तत्केन कं विजानीयात्" इत्यादिकाः नानात्वनिषेधनादिन्यः सन्ति काश्चन श्रुतयः ॥

[9] "यस्सर्वज्ञस्सर्ववित्, यस्य ज्ञानमयं तपः", [10] "सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाऽभिवदन् यदास्ते", [11] "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि", [12] "अपहतपाप्मा विजरो विमृत्युः

---

वाक्यपर्यालोचनयैव अर्थो निर्णेतव्य इति भावः । सृष्टिप्रलयपरवाक्यानां [३] मुहुरुदाहृतत्वात् तान्यत्र अनुक्त्वा, तदर्थमात्रमुक्तम् ॥

अथ निर्गुणश्रुतीराह निरवद्यम् इति ॥

भेदनिषेधश्रुती [४] राह नेह इति ॥

सगुणश्रुतीराह यस्सर्वज्ञ इति ॥

---

१. निर्गुणज्ञानस्वरूपम्, निर्गुणं ज्ञानम्—पा०
२. कं पश्येदित्यादिकाः—पा०
३. प्रलयवाक्यानाम्—पा०
४. निषेधिनीः श्रुतीः—पा०

1. श्वे. उ. ६-१९.
2. तै. उ. भृ. ५-१.
3. तै. उ. आ. ४-१.
4. यो. शि. उ. ३-२१.
5. श्वे. उ. ६-१९.
6. मन्त्रि. उ. २; आत्मा उ. १.
7. बृ. उ. ४-४-१४.
8. बृ. उ. ४-४-१४.
9. मु. उ. १-१-१०.
10. पुरुषसूक्तम् १६.
11. तै. उ. ना. २-५.
12. छा. उ. ८-७-१.

विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः " इति, सर्वस्मिन् जगति हेयतया अवगतं [1]सर्वं गुणं प्रतिषिध्य, निरतिशयकल्याणगुणानन्त्यम्, सर्वज्ञताम्, सर्वशक्तियोगम्[2], सर्वनामरूपव्याकरणम्, सर्वस्य आधारतां च काश्चन श्रुतयः [3]ब्रुवते ॥

[1]"सर्वं खल्विदं ब्रह्म तज्जलानिति", [2]"ऐतदात्म्यमिदं सर्वम्", [3]"एकस्सन् बहुधा विचारः" इत्यादिकाः ब्रह्मसृष्टं जगत् नानाकारं प्रतिपाद्य, तदैक्यं च प्रतिपादयन्ति काश्चन [4]श्रुतयः ॥

[4]"पृथगात्मानं प्रेरितारं च मत्वा", [5]"भोक्ता भोग्यं प्रेरितारं च मत्वा", [6]"प्रजापतिरकामयत प्रजाः सृजेयेति", [7]"पतिं विश्वस्यात्मेश्वरं [5]शाश्वतं शिवमच्युतम्", [8]"तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्", [9]"सर्वस्य वशी सर्वस्येशानः" इत्यादिकाः, ब्रह्मणः सर्वस्मादन्यत्वम्, सर्वस्य ईशितव्यत्वम्[6], ईश्वरत्वं च ब्रह्मणः, सर्वस्य शेषताम्[7], पतित्वं च ईश्वरस्य काश्चन ॥

---

ऐक्यश्रुतीराह [8]सर्वं खलु इति ॥

भेदश्रुतीराह पृथक्[9] इति ॥

---

१. सर्वगुणम्—पा०

२. सर्वशक्तिरूपताम्—पा०

३. काश्चन ब्रुवते, काश्चन श्रुतयो ब्रुवन्ति—पा०

४. 'श्रुतयः' इति क्वचिन्न ।

५. "शाश्वतं शिवमच्युतम"—क्वचिन्नेदम् ।

६. ईशितृत्वम्—पा०

७. सर्वशेषिताम्—पा०

८. सर्वं खल्विदं ब्रह्मेति—पा०

९. पृथगात्मानमिति—पा०

1. छा. उ ३-१४-१.
2. छा. उ ६-८-७.
3. आर. ३ ग.
4. श्वे. उ. १-१२.
5. श्वे. उ. १ २५.
6. ३-का. १-१.
7. तै. उ. ना. ११.
8. श्वे. उ. ६-१३.
9. बृ. उ. ६-४-२२.

[1] "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा", [2] "एष त आत्मा अन्तर्याम्यमृतः", [3] "यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य तेजश्शरीरम्" इत्यादि, [4] "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरं यस्यात्मा शरीरम्" इति, ब्रह्मव्यतिरिक्तस्य सर्वस्य वस्तुनः, ब्रह्मणश्च शरीरात्मभावं दर्शयन्ति काश्चन, इति, नानारूपाणां वाक्यानाम् अविरोधः, मुख्यार्थापरित्यागश्च यथा संभवति, तथैव[1] वर्णनीयम् ।

वर्णितं च :—अविकारश्रुतयः स्वरूपपरिणामपरिहारादेव मुख्यार्थाः;

---

शरीरात्मभावश्रुतीराह अन्तः प्रविष्टः इति ॥

एवम्, नानाविधत्वं दर्शितम्, आसां श्रुतीनां स्वोक्तार्थपरत्वमेव उपपन्नम् इति वक्ष्यन्नाह इति इति । अविरोधः, मुख्यार्थापरित्यागश्च यथा सम्भवति इति । परपक्षेषु अन्योन्यविरोधः, मुख्यार्थपरित्यागश्च भवतः; सगुणभेदश्रुतीनां बाध्यत्वाभ्युपगमात् विरोधः संप्रतिपन्नः; ऐक्यश्रुतिष्वपि "तत् त्वम्" आदिपदानां लक्षणाश्रयणात् अमुख्यत्वम् । एवम् भेदाभेदपक्षेऽपि, निर्दोषत्व-अविकारत्वादिपरश्रुतिविरोधः, "तत् त्वम्" आदिपदेष्वपि निर्दोषत्वसदोषत्वादिव्याघातात् अन्यतरपदामुख्यत्वप्रसंगः इति भावः । तस्मात्, अविरोधेन, मुख्यत्वेन च वर्णनीयम् — वर्णयितुं युक्तमित्यर्थः ॥

कः पुनः अविरुद्धः, [2] मुख्यश्च अर्थः? इत्यत्राह वर्णितं च[3] इति । नास्माभिः स्वबुद्ध्या अर्थस्थितिः उत्प्रेक्ष्यते; पूर्वाचार्यैरेव उपदिष्टः, ग्रन्थनिबद्धश्चार्थः उच्यते इति भावः । तत्र सर्वश्रुतीनां परस्पराविरोधं[4], मुख्यार्थत्वं च दर्शयन्, अविकारश्रुतिमुख्यार्थत्वं दर्शयति अविकार इति । निर्गुणश्रुतिमुख्यार्थत्व[5]-

---

१. एवकारः क्वचिन्न ।
२. मुख्यार्थः—पा०
३. चकारः कुत्रचिन्न ।
४. परस्पराबाधम्—पा०
५. मुख्यत्वम्—पा०

1. आर. ३ प्र. २१.
2. बृ. उ. ५-७-३.
3, 4. सु. उ. ७.

निर्गुणवादाश्च [1] प्राकृतहेयगुणनिषेधविषयतया [2] व्यवस्थिताः [3]; नानात्वनिषेधवादाश्च, एकस्यैव [4] ब्रह्मणः शरीरतया प्रकारभूतं [5] सर्वं चेतनाचेतनं वस्त्विति [6], सर्वस्यात्मतया सर्वप्रकारं ब्रह्मैव अवस्थितमिति सुरक्षिताः; सर्वविलक्षणत्व–पतित्व – ईश्वरत्व – कल्याणगुणाकरत्व – सत्यकामत्व – सत्यसङ्कल्पत्वादिवाक्यम्, तदभ्युपगमादेव सुरक्षितम्; ज्ञानानन्दमात्रवादि [7] च – सर्वस्मादन्यस्य, सर्वकल्याणगुणाश्रयस्य [8], सर्वेश्वरस्य, सर्वशेषिणः, सर्वाधारस्य, [9] सर्वोत्पत्ति-

---

माह निर्गुण इति। व्यवस्थिताः – विशेषेण अवस्थिताः। भेदनिषेधवाक्यं च प्रकारिनानात्वानभ्युपगमात् मुख्यार्थमित्याह नानात्व इति। भेदश्रुतिमुख्यार्थत्व [10] माह सर्वं इति। कल्याणगुणाकरत्वशब्देन अनुक्तसकलगुणास्पदत्वं [11] विवक्षितम्। ज्ञानानन्दमात्रवादिवाक्यम् अपृथक्सिद्धधर्मवाचिपदानां धर्मिपर्यन्तत्वात्, धर्मिस्वरूपस्य ज्ञानवत् स्वयंप्रकाशत्वाच्च मुख्यार्थमित्याह ज्ञानानन्द इति। ज्ञानानन्दमात्रवादि च वाक्यम् इत्यन्वयः। सर्वस्मादन्यत्वम् – विलक्षणत्वम्। तदुपपादकम् [12] [13] सर्वकल्याणगुणत्वादिना उच्यते॥

---

१. निर्गुणवादश्च–पा०
२. निषेधपरतया–पा०
३. व्यवस्थितः–पा०
४. एवकारः क्वचिन्न।
५. "सर्वम्"–क्वचिन्न।
६. वदन्तीति–पा०
७. वाचि–पा०
८. गुणाकरस्य–पा०
९. सर्वस्योत्पत्तिस्थिति, सर्वोद्भवस्थिति–पा०
१०. मुख्यार्थमाह–पा०
११. गुणात्मकत्वम्–पा०
१२. तदुपपादकसर्वकल्याण–पा०
१३. सर्वकल्याणगुणादिनोच्यते, सर्वकल्याणेत्यादिनोच्यते–पा०

स्थितिप्रलयहेतुभूतस्य, निरवद्यस्य, निर्विकारस्य, सर्वात्मभूतस्य, परस्य ब्रह्मणः, स्वरूपनिरूपकधर्मः[1] — मलप्रत्यनीकानन्दरूपज्ञानमेवेति, [2]स्वप्रकाशतया [3]स्वरूपमपि ज्ञानमेवेति च प्रतिपादनात्, अनुपालितम्[4]; ऐक्यवादाश्च, शरीरात्मभावेन सामानाधिकरण्य[5]—[6]मुख्यार्थतोपपादनादेव सुस्थिताः ॥

---

एषां विशेषणानाम् अयमभिप्रायः— "सत्यं ज्ञानम्" इत्यादिश्रुतिः आर्थभेदनिषेधपरा—इति हि पराभ्युपगतिः? तत्रेदं विवक्षितम्। ज्ञानस्य ज्ञानादिगुणाश्रयत्वानुपपत्तिः कथम्? अदर्शनात् इति चेत्, तर्हि ज्ञानं कस्यचिद्धर्मभूतं दृष्टमिति, ब्रह्म कस्यचिद्धर्मभूतं स्यात्; श्रुतिबलात् न धर्मभूतमिति चेत्, तर्हि श्रुतिबलात् ज्ञानाद्याश्रयत्वमपि स्वीकार्यम्; व्याप्तिविरुद्धस्याऽपि श्रुतिप्रतिपन्नस्य अङ्गीकारात्। किञ्च, व्याप्तिविरोधोऽपि नास्ति, धर्मभूतज्ञानस्यैव हि ज्ञानाद्यनाश्रयत्वं दृष्टम्, अत्र तु धर्मत्वाभावात् ज्ञानाद्याश्रयत्वं युक्तमिति [7]व्याप्त्यविरोधः। व्याप्तिविरोधेऽपि श्रुतिबलात् [8]धर्मान्तराश्रयत्वसिद्धिरित्यभिप्रेत्य, सर्वविलक्षणत्वादिगुणाश्च श्रुतिसिद्धा इति प्रतिबन्दीदर्शनार्थम्, अनेकविशेषणोक्तिः इति ॥

स्वरूपनिरूपकधर्मवाचकपदस्य धर्मिपर्यन्तत्वम् [1]"तद्गुणसारत्वात्" इति सूत्रोक्तमिह दर्शितम्। स्वरूप इति। ज्ञानशब्दः धर्मभूतज्ञानपरः; मलप्रत्यनीकशब्दविशेषितत्वात् धर्मभूतं ज्ञानं चिदचिद्व्यावर्तकम्; विशेषणभूतचिदचिद्रूपजगदपेक्षया विशेष्यांशस्य व्यावर्तकतया धर्मभूतज्ञानस्य स्वरूपनिरूपणधर्मत्वम्। ऐक्यश्रुतिमुख्यार्थत्वमाह ऐक्य इति।

---

१. निरूपणो धर्मः, निरूपणधर्मः—पा०
२. स्वरूपप्रकाशतया—पा०
३. स्वरूपं विज्ञानम्—पा०
४. उपपादितम्—पा०
५. सामानाधिकरण्येन—पा०
६. मुख्यार्थोपपादनादेव—पा०
७. एवं व्याप्त्यविरोधः—पा०
८. धर्माश्रयत्वसिद्धिः—पा०

1. ब्र. सू. २-३-३०.

एवं च सति, अभेदो वा[1], भेदो वा, द्व्यात्मकता वा, वेदान्तवेद्यः कोऽयमर्थः समर्थितो भवति? सर्वस्य वेदवेद्यत्वात् सर्वं समर्थितम्। सर्वशरीरतया सर्वप्रकारं ब्रह्मैव अवस्थितमिति, अभेदः समर्थितः; एकमेव ब्रह्म नानाभूतचिदचिद्वस्तुप्रकारं[2] नानात्वेन अवस्थितम् इति, भेदाभेदौ; [3]अचिद्वस्तुनश्च, चिद्वस्तुन[4]श्च, ईश्वरस्य च स्वरूपस्वभाववैलक्षण्यात्, असंकराच्च भेदः समर्थितः॥

ननु च [1]"तत्त्वमसि श्वेतकेतो", [2]"तस्य तावदेव चिरम्" इति ऐक्यज्ञानमेव, परमपुरुषार्थलक्षणमोक्षसाधनमिति [5]गम्यते।

---

[6]एवं सर्वश्रुत्यनुरोधेन चोदयति एवं च इति। उत्तरमाह सर्वस्य इति। कथं सर्वं समर्थितमित्यत्राह सर्व इति। परैरुक्तः अभेदः, भेदाभेदौ [7]च – भेदश्रुतिविरोधात्, अमुख्यत्वाच्च, न प्रामाणिकाः; भेदश्रुत्यविरुद्धौ भेदाभेदौ, अभेदश्च अस्मदभिमता इति, अस्माकं [8]भेदपक्ष एव इत्यभिप्रायः।

सर्वस्य वेदवेद्यत्वात् सर्वं समर्थितम् इति हि पूर्वमुक्तम्? तदयुक्तम्; ऐक्यज्ञानस्य अपवर्गोपायत्वेन परमार्थविषयत्वात्[9] तत्रैव तात्पर्यमिति तदानुगुण्येन श्रुत्यन्तरं नेयम्[10] इत्यभिप्रायेण चोदयति ननु च इति। परमपुरुषार्थलक्षणमोक्षसाधनम् इति। उपासनादयः सगुणप्राप्तिरूपार्वाचीनमोक्षफलाः इति, तद्व्यावृत्तिः परमपुरुषार्थशब्देन अभिप्रेता। गम्यते इति। [3]"तत्त्वमसि" इत्येतावदेव अत्र श्रूयते, ऐक्यज्ञानं मोक्षसाधनमित्ययमर्थो न कण्ठोक्तः, अपि तु गम्यते

---

१. वाकारः क्वचिन्न।
२. चिदचित्प्रकारम्, चिदचिद्वस्तुप्रकारतया, चिदचिद्ब्रह्मप्रकारम्—पा०
३. चिदचिद्वस्तुनश्च ईश्वरस्य—पा०
४. चिद्वस्तुनः—इति क्वचिन्न दृश्यते।
५. अवगम्यते—पा०
६. एवमिति क्वचिन्न दृश्यते।
७. चकारः क्वचिन्न दृश्यते।
८. अभेदपक्ष एव—पा०
९. परमार्थविषयत्वम्—पा०
१०. उन्नेयम्—पा०

1. छा. उ. ६-८-७.
2. छा. उ. ६-१४-२.
3. छा. उ. ६-८-१०.

नैतदेवम् ; [1] "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इति, आत्मानं प्रेरितारं [1] च अन्तर्यामिणं पृथक् मत्वा [2], ततः पृथक्-ज्ञानाद्धेतोः, तेन परमात्मना जुष्टः अमृतत्वमेति इति, साक्षात् अमृतत्वप्राप्तिसाधनम्—आत्मनः, नियन्तुश्च पृथग्भावज्ञान [3] मित्यवगम्यते । ऐक्यवाक्यविरोधात् [4] एतत् [5] अपरमार्थसगुणब्रह्मप्राप्तिविषयमिति अभ्युप-गन्तव्यम् इति चेत्, पृथक्त्वज्ञानस्यैव साक्षात् अमृतत्व [6] प्राप्तिसाधनत्व-श्रवणात्, विपरीतं कस्मात् न भवति ?

---

इति भावः । परिहरति नैतदेवम् इति । 'ततः' इति व्याख्येयं पदम् । अस्य [7] प्रकृत्यर्थं व्याचष्टे पृथक्त्वज्ञानात् इति । प्रत्ययार्थं व्याचष्टे हेतोः इति । 'तेन' इति व्याख्येयं पदम् । तद्व्याचष्टे परमात्मना इति । जुष्टः — [2] 'जुषी — प्रीतिसेवनयोः' — अनुगृहीत इत्यर्थः । साक्षाच्छब्देन कण्ठोक्तिः विवक्षिता । अनेन ऐक्यज्ञानस्य [8] मोक्षसाधनत्वगम्यताव्यावृत्तिः । पुनः शङ्कते ऐक्य इति । परिहरति पृथक्त्व इति । "पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुतिविरोधात् ऐक्यज्ञानम् अपरमार्थविषयं स्यात्" इत्यर्थः ॥

---

१. प्रेरकम्—पा०

२. ज्ञात्वा—पा०

३. पृथग्ज्ञानम्, पृथक्त्वज्ञानम्, पृथक् भावज्ञानमेवेत्यवगम्यते—पा०

४. ऐक्यवाक्यज्ञानविरोधात्—पा०

५. अपरमार्थं सगुणब्रह्म—पा०

६. प्राप्तिश्रवणात्—पा०

७. तस्य—पा०

८. ऐक्यज्ञानस्यैव—पा०

1. श्वे. उ. १-१२.

2. सि. कौ. ति. तुदादि ।

एतदुक्तं भवति :—"द्वयोः तुल्ययोः विरोधे सति, अविरोधेन तयोः विषयः विवेचनीयः" इति । कथमविरोधः इति चेत्, "अन्तर्यामिरूपेण अवस्थितस्य परस्य ब्रह्मणः, शरीरतया प्रकारत्वात् जीवात्मनः,

---

अन्यतरस्य [1] अपरमार्थविषयत्वमस्तु तत्र ऐक्यज्ञानस्य परमार्थविषयत्वं विमर्थं नाभ्युपेतं [2] [3] भवति ? इति शङ्कायाम्, ऐक्यज्ञानस्य [4] अपरमार्थ-विषयत्वं [5] न अस्मन्मते [6], अपि तु [7] अन्यतरस्य परमार्थविषयत्वे [8] अन्यस्य अपरमार्थविषयत्वं प्रसजेदिति, त्वन्मते अनिष्टप्रसंगः [9] कृतः इत्यभिप्रायेण आह एतदुक्तम् इति । तुल्यप्रमाणभूतयोः [10] द्वयोः [11] विरोधे अन्यतरस्य [12] बाधे अन्यस्यापि बाधप्रसंगात्, द्वयोरप्यविरोधेन विषयो [13] विवेचनीयः इत्यर्थः । विषयभेदेन अविरोधं पृच्छति कथम् इति । विषयविभागं दर्शयति अन्तर्यामि इति । ऐक्यज्ञानस्य मोक्षोपायत्वश्रुतेः विषयो दर्शितः 'अन्तर्यामि' इति । पृथक्त्व-

---

१. परमार्थ—पा०

२. अभ्युपगतम्—पा०

३. भवता—पा०

४. परमार्थ—पा०

५. विषयत्वात्—पा०

६. मतम्—पा०

७. अन्यतरस्यापरमार्थ, अन्यस्या-परमार्थ—पा०

८. अन्यस्याप्यपरमार्थ, अन्यतरस्य परमार्थ—पा०

९. प्रसंगात्कृतम्—पा०

१०. प्रमाणगतयोः—पा०

११. द्वयोरिति क्वचिन्न दृश्यते ।

१२. अन्यतरबाधे—पा०

१३. वर्णनीयः—पा०

तत्प्रकारं ब्रह्मैव " स्वयम् " इति शब्देन [1] अभिधीयते ; तथैव ज्ञातव्यम् ; इति तस्य वाक्यस्य अर्थः [2] । एवंभूतात् जीवात्, तदात्मतया अव-स्थितस्य परमात्मनो निखिलदोषरहिततया, सत्यसंकल्पत्वाद्यनवधिकाति-शयासंख्येयकल्याणगुणाकरत्वेन [3] च [4] यः पृथग्भावः [5], सोऽनुसन्धेय [6] इति, अस्य वाक्यस्य [7] विषयः " इत्ययं [8] मर्थः पूर्वमेव असकृत् उक्तः [9] ॥

[1] " भोक्ता भोग्यं प्रेरितारं च मत्वा " इति, भोग्यभूतस्य वस्तुनः,

---

ज्ञानस्य मोक्षोपायत्वश्रुतेः विषयो दर्शितः एवम् इति [10] । एवम् अभेदतात्पर्य-शङ्का निराकृता ॥

अथ भेदाभेदज्ञानस्य मोक्षोपायतया तत्र तात्पर्यम् इति शङ्कां व्युदस्यति भोक्ता इति । सद्वारकम् [11], अद्वारकं च [12] आकारद्वय [13] मस्तीति [2] " त्रिविधं ब्रह्म " इत्यस्याः श्रुतेः अर्थं विवक्षुः, द्वारभूतयोः चिदचितोः स्वभावं दर्शयन्, अचित्स्वभावं दर्शयति भोग्य इति । [3] " अचेतना परार्था च नित्या सतत-

---

१. व्यवह्रियते—पा०

२. वाक्यस्य विषयः—पा०

३. कल्याणगुणगणाकरत्वेन—पा०

४. चकारः क्वचिन्न दृश्यते ।

५. पृथक्स्वभावः—पा०

६. अनुसन्धीयते इति, अनुसन्धेय इत्यर्थः पूर्वमेवासकृदुक्तः—पा०

७. वाक्यस्य च—पा०

८. अयमिति क्वचिन्न दृश्यते ।

९ अभिहितः—पा०

१०. इत्यनेनाभेदतात्पर्यशङ्का—पा०

११. सद्वारमद्वारकम्—पा०

१२. चकारः क्वचिन्न दृश्यते ।

१३. आकारद्वयम्—पा०

1, 2. श्वे. उ. १-१२.

3. परमसंहिता.

अचेतनत्वम्, परमार्थत्वम्, [१]सततविकारास्पदत्वम् — इत्यादयः स्वभावाः; भोक्तुः, जीवात्मनश्च [२]अमलापरिच्छिन्नज्ञानानन्दस्वभावस्यैव [३], अनादिकर्मरूपाविद्याकृतनानाविधज्ञानसंकोचविकासौ, भोग्यभूताचिद्वस्तुसंसर्गश्च, परमात्मोपासनात् मोक्षश्च — इत्यादयः स्वभावाः; एवंभूतभोक्तृभोग्ययोः अन्तर्यामिरूपेण [४] अवस्थानम्, स्वरूपेण च [५] अपरिमितगुणौघाश्रयत्वेन [६] अवस्थानमिति, परस्य ब्रह्मणः [७] त्रिविधावस्थानं ज्ञातव्यमित्यर्थः ॥

[1] "तत्त्वमसि" इति सद्विद्यायाम् [८] उपास्यं ब्रह्म सगुणम्, सगुण-

विक्रिया, त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते" इत्यस्य अर्थः अत्र अभिप्रेतः [९] । जीवस्वभावमाह भोक्तुः इति । [१०] सद्वारकमाकारद्वयम्, अद्वारकः एक आकारश्चेति ब्रह्म त्रिविधम्; जीवान्तर्यामितया अवस्थानम्, अचिदन्तर्यामितया अवस्थानम्, [११] स्वरूपेण अवस्थानञ्चेति त्रिविधं ब्रह्म [१२] इत्यर्थः ॥

[१३] ऐक्यज्ञानोपायत्वश्रुतिविरोधेन हि, पृथक्त्वज्ञानस्य [१४] अपरमार्थविषयत्वं शङ्कितम्, तत्र ऐक्यज्ञानपरत्वेन परोक्तम् [2] "तत्त्वमसि" [१५] इति वाक्यं सगुणपरम् इत्याह "तत्त्वम्" इति । पूर्वाचार्येषु वाक्यकारग्रन्थं दर्शयति

१. सततं विकारास्पदत्वम्—पा०
२. अमलेति क्वचिन्न ।
३. स्वभावानादिकर्म—पा०
४. रूपेण च—पा०
५. चकारः कुत्रचिन्न दृश्यते ।
६. आश्रयत्वेन च—पा०
७. ब्रह्मणः इति—पा०
८. सद्विद्यायामपि—पा०
९. इत्यस्यार्थोऽभिप्रेतः—पा०
१०. सद्वारकमद्वारकद्वयम्—पा०
११. स्वस्वरूपेण—पा०
१२. ब्रह्मैवेत्यर्थः—पा०
१३. ऐक्यज्ञानोपायत्वपरश्रुति—पा०
१४. परमार्थविषयत्वम्—पा०
१५. इतिर्न दृश्यते क्वचित् ।

1, 2. छा. उ. ६ ८-१०.

ब्रह्मप्राप्तिश्च फलम् — इत्यभियुक्तैः [१] पूर्वाचार्यैः व्याख्यातम्।

[२]यथोक्तं वाक्यकारेण [1]"युक्तं तद्गुणकोपासनात्" इति। व्याख्यातं च द्रमिडाचार्येण विद्याविकल्पं वदता — [2]"यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसा अनुधावेत्, तथाऽपि अन्तर्गुणामेव देवतां भजते इति, [३]तत्रापि[४] सगुणैव देवता प्राप्यते[५]" इति। सच्चित्तः—सद्विद्यानिष्ठः। "न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत्" — अपहतपाप्मत्वादिकल्याण[६]-गुणगणं[७] दैवतात् विभक्तम्, यद्यपि दहरविद्यानिष्ठ इव, सच्चित्तो न स्मरेत्, तथाऽपि अन्तर्गुणामेव देवतां भजते। देवस्वरूपानुबन्धित्वात्

---

[८]यथा इति। युक्तम् इति। सगुणस्यैव [९]ब्रह्मणः उपासनेन सगुणमेव प्राप्यं युक्तमित्यर्थः। एतत्स्पष्टीकरणाय [१०]आचार्यग्रन्थं दर्शयति व्याख्यातं च इति। "यद्यपि" इत्यादि द्रमिडाचार्यग्रन्थः। तद्व्याचष्टे [११]सच्चित्त इति। "अन्तर्गुणाम्" इति पदस्य हेतुगर्भतां दर्शयन्, वाक्यस्यार्थमाह देवतास्वरूप इति। प्रकृतसद्विद्याया असाधारणत्वात् निखिलजगत्कारणत्वमुक्तम्, [१२]प्रतिविद्यं[१३] व्यवस्थितानां गुणानां प्रदर्शनार्थम्। आदिशब्देन सर्वविद्यासाधारणा[१४] आनन्दत्वादयो

---

१. अभियुक्तैरिति क्वचिन्न दृश्यते।
२. तथोक्तम्—पा०
३. इतिः क्वचिन्न।
४. तथाऽपि—पा०
५. प्राप्तिरिति, प्राप्येति—पा०
६. कल्याणेति क्वचिन्न दृश्यते।
७. कल्याणगुणम्—पा०
८. यथोक्तमिति—पा०
९. ब्रह्मणः प्राप्यत्वं युक्तम्—पा०
१०. द्रमिडाचार्यग्रन्थम्—पा० आचार्यग्रन्थमित्येतत् क्वचिन्न।
११. सद्विद्यात इति—पा०
१२. प्रकृतविद्याव्यवस्थितानाम्—पा०
१३. "विद्यम्" इति क्वचिन्न।
१४. साधारणानन्दत्वादयः—पा०

1. छा. उ. ६-८-१०.
2. द्रमिडभाष्यम्.

[1]सकलकल्याणगुणगणस्य[2], केनचित्, परदेवताऽसाधारणेन निखिल-जगत्कारणत्वादिना[3] गुणेन उपास्यमानापि देवता, वस्तुतः स्वरूपानुबन्धि[4] सर्वकल्याणगुणगण[5]विशिष्टैव उपास्यते; अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोः निष्कर्षः—इत्यर्थः ॥

---

विवक्षिताः। सर्वकल्याणगुणशब्देन निरूपितस्वरूपस्य गुणा विवक्षिताः। दहर-विद्यायां [1]"य इहात्मानमनुविद्य व्रजन्त्येतांश्च[6] सत्यान् कामान्" इति दैवतात् पृथक् अपहतपाप्मत्वादिगुणजातं विभक्तमुपास्यं विहितम् ॥

एवम्, सद्विद्यायां देवतायाः पृथग्गुणजातम् उपास्यत्वेन न विहितम्, तथाऽपि जगत्कारणत्वादिकतिपयगुणविशिष्टत्वेन उपास्यमानं ब्रह्म स्वतः अपरिमित-[7]कल्याणगुणमिति, सामान्येन अपरिमित[8]गुणत्वेन उपास्यमानत्वात्, तस्यापि प्राप्यं सगुणमेव ब्रह्म इत्यर्थः। आनन्त्यस्य सर्वविद्यासाधारणत्वात्, गुणतोऽप्यानन्त्यस्य[9]तदन्तर्गतत्वात्, सामान्येन अपरिमितगुणत्वं हि सर्वविद्यानुयायि। [10]न चैतावता सर्वगुणानां निरूपकत्वम्, अपरिमितानां गुणानां स्वसंबन्धेन [2]"मङ्गलानां च मङ्गलम्" इति प्रकारेण [11]मङ्गलत्वापादनक्षमत्वस्य निरूपकत्वात्। एवं, स्वोक्तार्थस्य स्वबुद्धिविलसितोत्प्रेक्षितत्वं व्यावर्तितम्।

---

१. सकलस्य कल्याण—पा०
२. गुणस्य—पा०
३. जगत्कारणत्वादिगुणेन, जगत्कारण-त्वादिगुणगणेन—पा०
४. सकलगुण—पा०
५. गणेति क्वचिन्न।
६. चकारः क्वचिन्न।
७. कल्याणगुणगणमिति—पा०
८. अपरिमितत्वेन उपास्यमानत्वात्—पा०
९. तदनन्तर्गतत्वात्—पा०
१०. नचैतावता—पा०
११. मङ्गलापादन—पा०

1. छा. उ. ८-१-६.
2. विष्णुसहस्रनामम् ९.

ननु च "सर्वस्य जन्तोः परमात्मा अन्तर्यामी, तन्नियाम्यं च सर्वम्[1] " इत्युक्तम्; एवं च सति, विधिनिषेधशास्त्राणाम् अधिकारी न दृश्यते; यः, स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिशक्तः, स एवं कुर्यात्, न कुर्यादिति विधिनिषेधयोग्यः; न[2] चैष दृश्यते; सर्वस्मिन् प्रवृत्तिजाते[3] सर्वस्य प्रेरकः

---

अथ परमात्मनियाम्यत्वे, विधिनिषेधशास्त्रानर्थक्यं प्रसञ्जयंश्चोदयति ननु च इति। परमात्मनियाम्यत्वं[4] मस्तु, ततः किम्? इत्यत्राह एवं च सति इति। कथ[5]मधिकार्यभावः इत्यत्राह [6]स्वबुद्ध्यैव इति। न च इति। एषः — अधिकारी। राजादिनियाम्यत्वे सत्यपि, प्रजानां विधिनिषेधयोग्यत्वं दृश्यते; तद्वदत्रापि स्यात् इत्यत्राह सर्वस्मिन् इति। स्वाधीनप्रवृत्तय एव प्रजाः अपराधादिकं कुर्वन्ति; तत्फलदुःखानुभवादिष्वेव, [7]राजनियाम्यत्वं तासाम्; अत्र तु साधनानुष्ठानदशायामपि परमात्मपराधीनप्रवृत्तय इति, अस्वाधीनानां[8] अचेतनवत् न [9]विधिनिषेधयोग्यत्वम् इत्यभिप्रायेण सर्वस्मिन् प्रवृत्तिजाते इत्युक्तम्। प्रेरितारम् इत्यादिभिः सर्वप्रेरकतया प्रतिपाद्यमानस्य परमात्मनः सर्वनियमनम्, सर्वत्र प्रवृत्तिजाते कारयितृत्व-

---

१. सर्वं शरीरमित्युक्तम्, सर्वमेवेत्युक्तम्—पा०

२. तथा चैषः—पा०

३. प्रवृत्तिजाले—पा०

४. नियाम्यमस्तु—पा०

५. अधिकाराभावः—पा०

६. यस्स्वबुद्ध्यैव—पा०

७. राजादिनियाम्यत्वम्—पा०

८. अस्वाधीनानामेव चेतनानां न विधिनिषेध—पा०

९. प्रतिषेधयोग्यत्वम्, विधिकृतनिषेधयोग्यत्वम्—पा०

परमात्मा कारयिता" इति तस्य सर्वनियमनं प्रतिपादितम् । श्रूयते च [1]"एष एव साधुकर्म[1] कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषति, एष एव असाधुकर्म[2] कारयति, तं यमधो निनीषति" इति[3] । साध्वसाधुकर्मकारयितृत्वात्[4] नैर्घृण्यं च ॥

अत्रोच्यते; सर्वेषामेव चेतनानां चिच्छक्तियोगः, प्रवृत्तिशक्तियोगः—इत्यादि,[5] सर्वं प्रवृत्तिनिवृत्तिपरिकरं[6] सामान्येन संविधाय,

---

पर्यन्तम्[7] इत्यर्थः । कारयितृत्ववैशद्यार्थं श्रुतिं वदन्, नैर्घृण्यं च प्रसञ्जयति श्रूयते च इति । साध्वसाधुकर्मकारयितृत्वात्[8] नैर्घृण्यं च इति । अत्र 'च' शब्दः अनुक्तसमुच्चयपरः । असाधुकर्मकारयितृत्वात् — नैर्घृण्यम्, साधुकर्मकारयितृत्वात् — वैषम्यं च इत्यर्थः ॥

परिहरति अत्रोच्यते इति । इह चिच्छक्तियोगस्य भगवन्नित्येच्छाधीनत्वात् तन्नित्यत्वाविरोधः इति भावः[9] । [10]आदिशब्देन निवृत्तिशक्तियोगः इच्छाप्रयत्नौ च गृह्येते[11] । इत्यादि इति[12] । क्रियाविशेषणम् । प्रवृत्तिनिवृत्तिपरिकरम् । करणकलेबरम्, बाह्यप्रवृत्तिनिवृत्तिशक्तिम्, ज्ञानचिकीर्षाप्रयत्नशक्तिं च सर्वचेतनानां

---

१. कर्मेति न दृश्यते क्वचित् ।
२. कर्मेति क्वचिन्न दृश्यते ।
३. इतिः क्वचिन्न लभ्यते ।
४. कारयितृत्वम्—पा०
५. इत्यादिकम्—पा०
६. प्रवृत्तिपरिकरम्—पा०
७. पर्यवसन्नम्—पा०
८. कारयितृत्वाच्च—पा०
९. इति भावः—क्वचिदेतन्न लभ्यते ।
१०. आप्रवृत्तिशक्तशब्देन—पा०
११. गृह्यन्ते—पा०
१२. इतिः कुत्रचिन्नोपलभ्यते ।

1. कौषी. उ. ३-९.

तन्निर्वहणाय[1] तदाधारो भूत्वा अन्तः प्रविश्य, अनुमन्तृतया च[2] नियमनं कुर्वन्, शेषित्वेन अवस्थितः परमात्मा । एतदाहितशक्तिस्सन्[3]

सामान्येन तत्स्वातन्त्र्यार्हं प्रदाय इत्यर्थः । एवम्, ज्ञानचिकीर्षाप्रयत्नेषु [4]प्रवृत्तेषु प्रकृत्यारम्भे न परमात्मापेक्षाऽस्ति, अपि तु स्वयमेव प्रवर्तते । तदानीं परमात्मा उपेक्षकः । न चैतावता नियन्तृत्ववैकल्यम्, परस्य उपेक्षाया अपि [5]स्वस्वातन्त्र्याधीनत्वात् । देहसम्बन्ध[6]सुखदुःखाद्यन्वयदानादिना मुखान्तरेण नियमनस्य विद्यमानत्वात्, जीवस्य नियमनार्हत्वानपगमाच्च[7] । एवम्, उपेक्षकस्सन् प्रथमप्रवृत्तौ सत्याम्, पश्चादनुमन्ता परमात्मा । अत एव हि 'अनुमन्तृतया च नियमनं कुर्वन्' इत्युक्तम्[8] ? अनुमन्तृत्वं नाम — प्रवृत्तिशैथिल्यपरिहारात्मकः, तत्फलपर्यन्तत्वहेतुः व्यापारः, [9]न तु अप्रवृत्तस्य प्रवर्तकत्वम् । एवम् ज्ञानचिकीर्षादौ स्वातन्त्र्यात् विधिनिषेधयोग्यत्वम् । नियमनवैकल्यशङ्कापरिहारार्थम् 'अनुमन्तृतया नियमनं कुर्वन्' इत्युक्तम् । सर्वप्रकारनियमनशक्तोऽपि सन्, [10]सङ्कल्पादेव अनुमन्तृतया नियच्छति ; अनुमन्तृत्वमपि नियमनमेव, तेन विना प्रवृत्तेः फलपर्यन्तत्वायोगात् । एवम्, नियमनप्रकारविशेषस्याभावे[11]ऽपि धारकत्वं, शेषित्वं च सुस्थितमिति आत्मशरीर-

---

१. तन्निर्हरणाय—पा०
२. चकारः क्वचिन्न लभ्यते ।
३. जीवात्मा प्रवृत्तिनिवृत्त्यादि, जीवः प्रवृत्तिनिवृत्त्यादि—पा०
४. प्रथमप्रवृत्त्यारम्भे—पा०
५. स्वातन्त्र्याधीनत्वात्, स्वस्वातन्त्र्याधिकत्वात्—पा०
६. दुःखसुखाद्यन्वय—पा०
७. अवगमात्, अनभ्युपगमात्—पा०
८ इत्युक्तं भवति—पा०
९. तत्प्रयुक्तस्य प्रवर्तकत्वम्, न तत्प्रवृत्तस्य प्रवर्तकत्वम्—पा०
१०. स्वसङ्कल्पादेव, ससङ्कल्पादेव, स्वसंकल्पादेव कर्ता अनुमन्तृतया—पा०
११. विशेषाभावे—पा०

प्रवृत्तिनिवृत्त्यादि स्वयमेव कुरुते; एवं कुर्वाणमीक्षमाणः परमात्मा, उदासीन आस्ते, अतः सर्वमुपपन्नम् ॥

साध्वसाधुकर्म[1] कारयितृत्वं तु[2] व्यवस्थितविषयम्, न सर्वसाधा-

भावस्य च न हानिः[3] इत्यभिप्रायेण 'आधारो[4] भूत्वा शेषित्वेनावस्थितः' इति चोक्तम्। पश्चादनुमन्तृत्वमपि प्रथमप्रवृत्तेः निग्रहरूपमेव, निग्रहश्चेन्न दोषः, अनिग्रहश्चेन्न गुणः, लोके निग्राह्यनिग्रहस्य गुणत्वदर्शनात्, निग्राह्यानिग्रहस्य दोषत्वदर्शनाच्च।

[5]प्रथमनिवर्तनशक्तस्यापि उपेक्षकत्वे को हेतुः? स्वातन्त्र्यमेवेति ब्रूमः; तर्हि तत्स्वातन्त्र्यं दोषरूपं कथम्? लोके तथा दर्शनात्; एवं [6]व्याप्तिबलात् दोषमापादयन् भवान् किं परमात्मधर्मिणमभ्युपगम्य दोषमापादयति? [7]उत अनभ्युपगम्य? अनभ्युपगम्य चेत्, आश्रयासिद्धिः। अभ्युपगम्य चेत् धर्मिग्राहकप्रमाणबाधः। शास्त्रप्रवर्तनमुखेन, सामान्येन अहितनिवारणं[8] च कृतमीश्वरेण, तदतिलङ्घ्य [9]प्रवर्तमानानां प्रथमप्रवृत्तौ उपेक्षक[10] इति च न दोषः — इत्यभिप्रायः ॥

कारयितृत्वश्रुतेः निर्वाह[11]माह साधु इति। कारयितृत्वश्रुतेः व्यवस्थितविषयत्वात् न विधिनिषेधशास्त्रानर्थक्यम् — इति भावः। दयायास्तु प्राचीनासंख्येयजन्मसु

१. कर्मणोः कारयितृत्वम्—पा०
२. तुः न दृश्यते क्वचित्।
३. न च्युतिः—पा०
४. आधारको भूत्वा—पा०
५. प्रथमं निवर्तन—पा०
६. व्याप्तिवादे दोषम्—पा०
७. उत न—पा०
८. अभिमतानिवारणम्—पा०
९. वर्तमानानाम्—पा०
१०. इति नास्त्येव दोषः—पा०
११. निर्वाहकम्—पा०

रणम् । यस्तु पूर्वं [1]'स्वयमेव अतिमात्रम् आनुकूल्ये'[2] प्रवृत्तः, तं प्रति[3] प्रीतः स्वयमेव भगवान् कल्याणबुद्धियोगदानं कुर्वन्[4], कल्याणे प्रवर्तयति[5] । यः पुनः [6]'अतिमात्रं प्रातिकूल्ये प्रवृत्तः, तस्य तु[7] क्रूरां बुद्धिं ददन्[8]', स्वयमेव [9]'क्रूरेष्वेव कर्मसु प्रेरयति भगवान् ॥

यथोक्तं भगवता :— [1]"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥", [2]"तेषामेवानुकम्पार्थं[10] अहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥", [3]"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥" इति ॥

---

महापराधकारिणि, पश्चात्तनप्रातिकूल्यव्यवसायनिवृत्तिमात्रेण तदपराधान् अनन्तान्[11] अनादृत्य, तस्य[12] निरतिशय[13]संपत्प्रदानाय, स्वयमेव भगवान् प्रवर्तते इति सावकाशत्वम् ॥

---

१. स्वयमेवोक्तमात्रानुकूल्ये—पा०
२. अतिमात्रानुकूल्ये—पा०
३. तं प्रति भगवान्, तं प्रति स्वयमेव भगवान्—पा०
४. कुर्वन्नेव—पा०
५. प्रवर्तयते—पा०
६. अतिमात्रप्रातिकूल्ये—पा०
७. तुर्न दृश्यते क्वचित् ।
८. ददत्—पा०
९. क्रूरेष्वेव—एतन्न दृश्यते क्वचित् ।
१०. अनुकूलार्थम्—पा०
११. अनन्तानिति क्वचिन्न दृश्यते ।
१२. तस्येति न दृश्यते क्वचित् ।
१३. सुखप्रदानाय, ज्ञानप्रदानाय—पा०

1. गीता १०-१०.
2. गीता १०-११.
3. गीता १६-१९.

सोऽयं, [1]परब्रह्मभूतः पुरुषोत्तमः, निरतिशयपुण्यसञ्चय[2]क्षीण-अशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्द – शरणागतिजनित – तदाभिमुख्यस्य[3], सदाचार्योपदेशोपबृंहितशास्त्राधिगत[4]तत्वयाथात्म्याव-बोधपूर्वक[5]–अहरहरुपचीयमान – शम – दम – तपः – शौच – क्षमाऽऽर्जव–

---

अथ उपायस्वरूपं विशदयति सोऽयम् इति। पूर्वम् उपायस्वरूपम् 'अत्रेदम्' इत्यादौ नातिविस्तृतम्; अतः, अत्र स्फुटमुच्यते। ईश्वरविषया भक्तिः, न तु ब्रह्मविषया–इति शङ्काव्यावृत्त्यर्थं 'परब्रह्मभूतः पुरुषोत्तमः' इत्युक्तम्। [1]"जन्मान्तरसहस्रेषु तपो[6]ज्ञानसमाधिभिः, नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" इत्यस्यार्थं हृदि निधायाह निरतिशय इति। [2]"मामेव ये प्रपद्यन्ते" इत्युक्ताङ्गप्रपत्तिसापेक्षत्वमाह परमपुरुष इति। सदाचार्योपदेशोपबृंहित इति। उपबृंहितम्–पुष्कलीकृतम्। अनेन [3]"पाण्डित्यं च निर्विद्य" इति श्रुत्यर्थ उक्तः। तत्वयाथात्म्य इति। धर्मिविपर्यास – प्रकारविपर्यासव्यावृत्त्यर्थौ तत्व-याथात्म्यशब्दौ। प्रकारविपर्यासो रजःकार्यः; धर्मिविपर्यासः तमःकार्यः; तदुभय-राहित्यं विवक्षितम्। शमदमौ – अन्तःकरणबाह्येन्द्रियजयौ। तपः – कृच्छ्रादि। शौचम्—मानस – वाचिक – कायिकरूपेण त्रिविधम्। क्षमा—दुःखसहिष्णु-त्वम्। भगवदपचार[7]भीरुत्वम् — भयस्थानविवेकः। तद्रक्षकत्वाध्यवसायादिना

---

१. ब्रह्मभूतः–पा०
२. प्रक्षीणाशेष–पा०
३. आभिमुख्यस्य च–पा०
४. शास्त्रादवगत–पा०
५. पूर्वस्याहरह–पा०
६. तपोध्यानसमाधिभिः–पा०
७. अपचारादिभीरुत्वम्, अपचारादिना भीरुत्वम्–पा०

1. लघ्वत्रिस्मृतिः; विष्णुधर्मे ६२.
2. गीता ७-१५.
3. बृ. उ. ५-५.

भयाभयस्थानविवेक—दया—अहिंसाद्यात्मगुणोपेतस्य, वर्णाश्रमोचितपरम-पुरुषाराधनवेष — नित्यनैमित्तिककर्मोपसंहृतिनिषिद्धपरिहारनिष्ठस्य, परम-पुरुष[1]चरणारविन्दयुगलन्यस्तात्मात्मीयस्य[2], तद्भक्तिकारितानवरत — स्तुति — स्मृति — नमस्कृति[3] — यतन — कीर्तन — गुणश्रवण — वचन — ध्यान — अर्चनप्रणामादिप्रीत — परमकारुणिकपुरुषोत्तम — प्रसादविध्वस्तस्वान्त -

निर्भयत्वम्—अभयस्थानविवेकः । दया — परदुःखासहिष्णुत्वम् । अहिंसा — पर-दुःखाहेतुत्वम् । [1]"वर्णाश्रमाचारवता" इत्यादिवचनाभिप्रायेण 'परमपुरुषाराधनवेष' इत्युक्तम् । उपसंहृतिः — अनुष्ठानम् । भगवति न्यस्तभरत्वमाह परम इति । [2]"शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इत्यादिवचनानुगुण्येन [4]शास्त्र-ज्ञानात्प्रभृति भक्तिसापेक्षत्वात् "तद्भक्तिकारिता" इत्युक्तम् । स्तुतिः — गुणकथनम्, वन्दिकृत्यं वा । यतनम् — भगवदुद्यानादिकरणम् । कीर्तनम् — भगवन्नामो-च्चारणम् । वचनम्—परेभ्यो भगवद्गुणानां प्रतिपादनम् । ध्यानशब्देन—आरम्भण-संशीलनं[5] विवक्षितम्; न तु अङ्गि, [6]अनुध्यानोपायत्वस्य उच्यमानत्वात् । ननु अर्चनप्रणामादेः अङ्गिकोटिनिवेशः प्रागुक्तः, 'वर्णाश्रमधर्मेतिकर्तव्यताक — परम-पुरुषचरणयुगलध्यानार्चनप्रणामादिः' इति, इह कथम् अर्चनप्रणामादेः अङ्गत्व-मुच्यते? [7]उच्यते; यावद्धारणासिद्धि क्रियमाणम् अर्चनादिकम् अङ्गम्, ततः पश्चादनुष्ठीयमानम् अङ्गि—इति विभागः इति । स्वान्तध्वान्तम् — पापमूलरज-

१. चरणयुगल—पा०
२. आत्मीयभारस्य—पा०
३. नमस्कृतिवन्दनयतन—पा०
४. शास्त्रज्ञानप्रभृति—पा०
५. आरम्भणशीलनम्—पा०
६. अनुध्यानोपायस्य—पा०
७. "उच्यते" — क्वचिदेतन्न ।

1. वि. पु. ३-८-९.
2. भार. उ. प. ६८-५.

धान्तस्य, अनन्यप्रयोजनानवरतनिरतिशयप्रिय[1]–विशदतमप्रत्यक्षतापन्न-अनुध्यानरूपभक्त्येकलभ्यः[2] ॥

स्तमसी। विषयस्य[3] प्रियत्वात्, अस्य निरतिशयप्रियत्वम्। अनुध्यानरूपभक्त्येक-लभ्यः इति। एवंविधानुध्यानं[4]— भक्तिः; तयैव लभ्य इत्यर्थः ॥

यद्वा, पूर्वमपि ध्यानशब्देन अविच्छिन्नस्मृतिसन्ततिरूपध्यानमेवोच्यते; न तु आरम्भणसंशीलनम्। पश्चात् अनुध्यानशब्देन दिव्यात्मस्वरूपानुसन्धानरूपः समाधिः उच्यते। स हि ध्यानसाध्यः? [1]"तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्, मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते" इति वचनात्; उपेय-विरोधिनिरासकत्वं समाधेरेव; ध्यानमपि समाधिविरोधिनिरासकम्, [2]"यथाग्निरुद्धत-शिखः कक्षं दहति सानिलः, तथा चित्तस्थितो विष्णुः योगिनां सर्वकिल्बिषम्", [3]"मनसा ध्याननिष्पाद्य" मित्युक्तेः। [4]"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा, तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप!" इति। [5]"सेवेत योगी निष्कामो योग्यतां[5] स्वमनो नयन्", [6]"यमनियमविधूतकल्मषाणाम्[6]", [7]"सदा तद्भाव-भावितः" इति धारणापर्यन्तानामङ्गानां[7] ध्याननिष्पादकत्ववत्, ध्यानस्य समाधि-निष्पादकत्वमेवेति समाधेरेव अङ्गित्वम्। ध्यानस्यैव प्राधान्यं यत्रोच्यते, तत्र ध्यानशब्देन समाधिपर्यन्तध्यानं विवक्षितम्। समाधिनिष्ठेनापि[8] व्युत्थानकाले क्रिय-माणमर्चनादिकम्[9] अङ्गिकोटिनिविष्टम्, [8]"मन्मना भव मद्भक्तो मद्याजी मां

१. प्रियशब्दः क्वचिन्नोपलभ्यते।
२. लभ्य इति—पा०
३. विषयप्रियत्वात्—पा०
४. एवंविधध्यानम्—पा०
५. योग्यता स्वमनो, योग्यतां स्वमनो, योग्यतां स्वन्मनो—पा०
६. किल्बिषाणाम्—पा०
७. अङ्गानामिति क्वचिन्न दृश्यते।
८. निष्ठेन व्युत्थानकाले—पा० अपिर्न दृश्यते क्वचित्।
९. अर्चनादिकर्म—पा०

1. वि. पु. ६-७-९२.
2. वि. पु. ६-७-७४.
3. वि. पु. ६-७-९२.
4. वि. पु. ६-७-९१.
5. वि. पु. ६-७-३६.
6. वि. पु. ३-७-२६.
7. गीता ८-६.
8. गीता १८-६५.

तदुक्तम् परमगुरुभिः भगवद्यामुनाचार्यपादैः[1]:— [1]"उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिकभक्तियोगलभ्यः" इति । [2]ज्ञानयोगकर्मयोगसंस्कृतान्तःकरणस्य—इत्यर्थः ॥

तथा च श्रुतिः :— [2]"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्यया अमृतमश्नुते ॥" इति ॥

अत्र अविद्याशब्देन विद्येतरत्[3] वर्णाश्रमाचारादिपूर्वोक्तं[4] कर्म उच्यते ; विद्याशब्देन[5] भक्तिरूपापन्नध्यानम्[6] उच्यते ॥

---

नमस्कुरु, मामेवैष्यसि" इत्युक्त्या[7] प्राप्तेः अव्यवहितोपायत्वप्रतीतेः, तेन अनुष्ठीयमानो वर्णाश्रमादिधर्मस्तु अङ्गमेव ; अतः यथोक्त एवार्थः ॥

अस्यार्थस्य सांप्रदायिकत्वमाह **तदुक्तम्** इति । उभयपरिकर्मितशब्दं व्याचष्टे **ज्ञान** इति । उक्तार्थे प्रमाणानि दर्शयन्, प्रथमं कर्मानुगृहीतत्वे प्रमाणमाह **तथा च** इति । अत्र कर्मवाचिपदं किम्? इत्यत्राह **अत्र** इति । अविद्याशब्दस्य कर्मवाचित्वे प्रयोगं दर्शयति **यथोक्तम्** इति । ज्ञानव्यपाश्रयः— शास्त्रजन्यज्ञानवान् । ब्रह्मविद्यामधिष्ठाय— विवेकजं ज्ञानम् अवलम्ब्य— उद्दिश्येत्यर्थः । न हि [8]विवेकजन्यज्ञानस्य [9]उपायत्वमुपपद्यते? भक्तेरुपायत्वं कथमिति शङ्कायाम्

---

१. यामुनाचार्यैः—पा०
२. ज्ञानकर्मयोग—पा०
३. विद्येतरत्वात्—पा०
४. पूर्वोक्तकर्म—पा०
५. विद्याशब्देन च—पा०
६. भक्तिरूपं ध्यानम्, भक्तिरूपापन्नं ज्ञानम्—पा०
७. इत्युक्तप्राप्तेः, इत्युक्त्या प्राप्तेः, इत्युक्त्या प्रपत्तेः—पा०
८. विवेकजज्ञानस्य—पा०
९. प्रेर्यत्वम्—पा०

1. सिद्धित्रयम् ।
2. ईशा. उ. ११.

यथोक्तम् :—

[1]"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥" इति,

[2]"तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते[1]", [3]"य एनं विदुरमृतास्ते भवन्ति", [4]"ब्रह्मविदाप्नोति परम्", [5]"[2]ब्रह्मवेद ब्रह्मैव भवति" इत्यादि ॥

वेदनशब्देन ध्यानमेवाभिहितम्[3]; [6]"निदिध्यासितव्यः" [4]इत्यादिना ऐकार्थ्यात् ।

तदेव ध्यानं पुनरपि विशिनष्टि—

[7]"नायमात्मा प्रवचनेन लभ्यः, न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः, तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥"

इति ॥

भक्तिरूपापन्न – अनुध्यानेनैव लभ्यते, न केवलवेदनमात्रेण; 'न मेधया' इति केवलस्य निषिद्धत्वात् ॥

---

उपायविधायिवाक्यानि ऐककण्ठ्येन योजयति तमेवम् इति । ध्यानं विधेयमस्तु, [5]तत्कथं भक्तेरुपायत्वम्? इत्यत्राह तदेव इति । "नायमात्मा" [6]इत्यादिवाक्येन [7]फलितमर्थमाह भक्ति इति । केवलस्य निषेधकशब्दः कः इत्यत्राह न मेधया इति ॥

---

१. विद्यते इति–पा०
२. स यो हवै तत्परं ब्रह्म, स यो हवै तत्परं वेद ब्रह्म, स यो हवै तत्परमं ब्रह्म वेद, तपो हवै तत्परं वेद–पा०
३. अभिधीयते–पा०
४. इत्यनेनैकार्थ्यात्–पा०
५. ततः किं भक्तेरूपायत्वे–पा०
६. इति वाक्येन–पा०
७. फलितार्थम्–पा०

1. वि. पु. ६-६-१२.
2. पुरुषसूक्तम् १७.
3. तै. उ. ना. १-१०.
4. तै. उ. आ. १-१.
5. मु. उ. ३-२-९.
6. बृ. उ. ६-५-६.
7. मु. उ. ३-२-३; कठ. उ. १-२. २२.

एतदुक्तं भवति :—"[1] योऽयं मुमुक्षुः वेदान्तविहितवेदनरूप-ध्यानादिनिष्ठः[2], यदा तस्य तस्मिन्नेव अनुध्याने [3]निरवधिकातिशया प्रीतिः जायते, तदैव तेन लभ्यते [4]परः पुरुषः" इति ॥

यथोक्तं भगवता :—

[1]"पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ॥"

[2]"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप ! ॥"

[3]"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः ।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥" इति ॥

तदनन्तरं मां, तत एव भक्तेः,[5] विशते इत्यर्थः ।

---

न मेधया इत्युक्ते केवलस्य निषेध इति कथमवगम्यते? भक्तिवाचिशब्दश्च न प्रतीयते, भक्तेः ध्यानविशेषत्वं वा कथम्? इति शङ्कायामाह एतदुक्तम् इति । उपासनादिविधायिवाक्याविरोधाय केवलश्रवणादिनिषेध इत्यवगम्यते इत्यभिप्रायेण 'वेदान्तविहित' इत्युक्तम् । यदा तस्य इति । ध्येयस्य निरतिशयप्रियत्वात् ध्याने प्रीतिः, ध्यानदशायां प्रीतिः, ध्यानस्य प्रीतिरूपत्वमुक्तं भवति । एवं वरणीयत्व-हेतुर्गुण उक्तः । तत्र प्रमाणमाह यथोक्तम् इति । "भक्त्या मामभिजानाति" इत्यादिश्लोके भक्तिसाध्यं ज्ञानान्तरम् अपवर्गोपायः इति शङ्का मा भूदिति तद्व्या-चष्टे तदनन्तरम् इति । 'भक्त्या' इति परभक्तिरुच्यते, "मद्भक्तिं लभते पराम्" इति [6] प्रकृतत्वात् । 'अभिजानाति' इति परज्ञानमुच्यते । 'यः' इति धर्मिस्वरूपम् । 'यावान्' इति गुणविभूत्यादि विवक्षितम् । 'ततः' इति परमभक्तिरुच्यते । साक्षात्काराभिनिवेशः — परभक्तिः, साक्षात्कारः — परज्ञानम्,

---

१. यो मुमुक्षुः—पा०
२. ध्यानादिविशिष्टः—पा०
३. अनवधिकातिशया—पा०
४. परमपुरुषः—पा०
५. भक्तितः—पा०
६. स्मृतत्वात्—पा०

1. गीता ८-२२.
2. गीता ११-५४.
3. गीता १८-५३.

भक्तिरपि—निरतिशयप्रियानन्यप्रयोजन[1] सकलेतरवैतृष्ण्यावहज्ञानविशेष एवेति, तद्युक्त एव, '[2] तेन परेण आत्मना वरणीयो भवतीति[3], तेन लभ्यते[4]—इति श्रुत्यर्थः ॥

एवंविधपरभक्तिरूपज्ञानविशेषस्य उत्पादकः, पूर्वोक्त—अहरहरुपचीयमानज्ञानपूर्वक—कर्मानुगृहीत—भक्तियोग एव ॥

---

पश्चादनुभवाभिनिवेशः—परमभक्तिः । न च "ततः" इति साक्षात्कारपरामर्शः, "प्रवेष्टुं[5] शक्य ॥ त्वनन्यया शक्यः" इति पूर्वोदाहृतवचनैकार्थ्यात् । 'विशते' इति प्रकृतिबन्धविनिर्मुक्तस्य अनुभव उच्यते । भक्तिरपि इति । निरतिशयप्रियत्वात् अनन्यप्रयोजनत्वम् । अनेन ऐश्वर्यार्थभक्तियोगो व्यावृत्तः । सकलेतरवैतृष्ण्यावह इति । भक्तेः प्रियतमत्वातिशयात् भगवत्प्राप्तावपि नैरपेक्ष्यं भवति इत्यर्थः । उदाहृतश्रुत्यर्थमुपसंहरति[6] तद्युक्त एव इति । एवंविध इति । परभक्तिरूपज्ञानविशेषस्य इति । परज्ञानात्पूर्वभाविनी परभक्तिः[7] न विवक्षिता, परमभक्तिरेव अभिप्रेता । ज्ञानपूर्वककर्मानुगृहीतः अहरहरभ्यस्यमानो भक्तियोगः परमभक्तेः उत्पादकः इत्यर्थः । अहरहरभ्यस्यमान[8] एव भक्तियोगः परमभक्तिदशापन्नः स्यादित्यर्थः । प्रीतिरूपध्यानेन निरतिशयानन्दरूपदिव्यात्मस्वरूपानुसन्धानं निरतिशयप्रियं सिद्ध्यति । तदेव साक्षात्काररूपम्[9] अनुभवाभिनिवेशं जनयति सोऽभिनिवेशः परमभक्तिरिति यावत् ॥

---

१, सकलेतर—पा०
२, तेनेति क्वचिन्न दृश्यते ।
तेन परमात्मना-पा०
३, इतिः कुत्रचिन्नोपलभ्यते ।
४, लभ्यः—पा०
५ भक्त्या शक्यः—पा०
६, उपसंहरतीति—पा०
७, परभक्तिरविवक्षिता—पा०
८, अहरहरारभ्यमाण एव—पा०
९, साक्षात्कारानुरूपम् , साक्षात्काररूपानुभवाभिनिवेशम्—पा०

यथोक्तं भगवता पराशरेण :—

[1] "वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्थाः नान्यः तत्तोषकारकः ॥" इति ॥

निखिलजगदुद्धारणाय अवनितले अवतीर्णः, परब्रह्मभूतः, पुरुषोत्तमः — स्वयमेव प्रत्युक्तवान् :—

[2] "स्वकर्मनिरतः[1] सिद्धिं यथा विन्दति तच्छृणु[2] ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥" इति[3] ॥

यथोदित[4]क्रमपरिणतभक्त्येकलभ्य[5] एव[6] ॥

---

कर्मानुगृहीतत्वे प्रमाणमाह यथोक्तम् इति । 'तत्तोषकारकः' इत्यनेन भगवत्तोषहेतुभूतज्ञानाङ्गत्वं सिद्धम् ॥

भगवद्वचनं दर्शयन्, तदाप्त्यतिशयमाह निखिल इति । "स्वकर्मणा .... सिद्धिं विन्दति" चेत् कथं भक्तेः उपायत्वम् ? इत्यत्राह यथोदित इति । यथोक्तकर्मानुगृहीतक्रमपरिणतभक्त्येकलभ्यः इत्यर्थः ॥

* पूर्वम्, उपेयस्वरूपनिष्कर्षे स्वोक्तप्रकारस्य [7]शिष्टपरिगृहीत[8]व्याख्यानमूलत्वमुक्तम्; इदानीं तदपि विशदयन्, [9]उपासनस्वरूपस्य यथोदितप्रकारस्य

---

* १७५ पुटे.

१. स्वधर्मनिरतः—पा०
२. तत्क्षणम्—पा०
३. इतिः क्वचिन्न दृश्यते ।
४. कर्मपरिणत—पा०
५. भक्तिलभ्यः—पा०
६. एवेति—पा०
७. विशिष्टपरिगृहीत—पा०
८. तद्व्याख्यानमूलत्वम्—पा०
९. उपायस्वरूपस्य—पा०

1. वि. पु. ३-८-९.
2. गीता १८-४५, ४६.

[1]भगवद्बोधायन – टङ्क – द्रमिड – गुहदेव – कपर्दि – भारुचि– [2]प्रभृति – अविगीत – शिष्टपरिगृहीत – पुरातन [3]वेदवेदान्तव्याख्यान – सुव्यक्तार्थ[4] – श्रुतिनिकरनिदर्शितोऽयं पन्थाः ॥

अनेन, चार्वाक – शाक्य – औलूक्य – अक्षपाद – [5]क्षपणक – कपिल– पतञ्जलिमतानुसारिणो वेदबाह्याः वेदावलम्बिकुदृष्टिभिस्सह निरस्ताः ॥

वेदावलम्बिनामपि [6]यथावस्थितवस्तुविपर्ययस्तदृशां बाह्यसाम्यं[7]

---

तन्मूलत्वमाह भगवद्बोधायन इति । टङ्कः — ब्रह्मनन्दी । शिष्टपरिगृहीतशब्दः [8]अर्थविशेषणम् ॥

उक्तार्थविरुद्धम् उपायोपेयस्वरूपं वर्णयन्तो वादिनः तर्कानुगृहीतश्रुतिविरोधादेव निरस्ताः—इत्याह अनेन इति । औलूक्यः—कणादः । पतञ्जलिमतम्—हैरण्यगर्भम् । अक्षपादादीनां वेदप्रामाण्याभ्युपगमेऽपि, वेदविरुद्धार्थानां कुतर्कमूलानाम् अभ्युपगमात्, वेदस्य पौरुषेयत्वाभ्युपगमाच्च, तन्मतानुसारिणां बाह्यसाम्यात्, बाह्यत्वोक्तिः ॥

[9]वेदावलम्बिनां कुदृष्टीनां निरासो बाह्यानामिव नोपपद्यते, वेदावलम्बिनां [10]वेदैकरुचित्वमूलसत्त्वगुणोद्रेकात् इत्यत्राह वेदावलम्बिनामपि इति । [1]"उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्, तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च" इति श्लोकेन बाह्या निरस्ताः । "अर्वाक्कालिकतया" इत्यनेन दोषमूलत्वं

---

१. बोधायन—पा०
२. प्रभृत्युदितशिष्ट, प्रभृत्यविगानशिष्ट—पा०
३. वेदशब्दः क्वचिन्नोपलभ्यते ।
४. सुव्यक्तश्रुति, स्पष्टार्थश्रुति—पा०
५. क्षपण—पा०
६. यथोपस्थितवस्तु—पा०
७. बाह्यसमत्वम् मनुनैवोक्तम्, बाह्यसाम्यम् महर्षिणोक्तम्—पा०
८. व्याख्यानविशेषणम्—पा०
९. वेदावलम्बि कुदृष्टीनाम्—पा०
१०. वैदिकरुचित्व—पा०

1. मनुस्मृ. १२-९५.

मनुनैव उक्तम्:—

[1] "या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः ।

सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ " इति ॥

"रजस्तमोभ्यामस्पृष्टम् उत्तमं सत्त्वमेव येषां[1] स्वाभाविको गुणः, तेषामेव वैदिकी[2] रुचिः, वेदार्थयाथात्म्यावबोधश्च " इत्यर्थः ॥

---

सूचितम् । "निष्फलानि"— [3]तदर्थानुष्ठानेषु नैष्फल्यम् । "अनृतानि"— तत्त्वस्थितेः अनृतत्वम् । एवं, पूर्वश्लोके[4] बाह्यानां निरस्तत्वात् "या वेदबाह्याः" इत्यादिश्लोके कुदृष्टीनां बाह्यसाम्यमेव विवक्षितम् — इत्यभिप्रायः । कुदृष्टीनामपि वेदैकरुचित्वमूल—सत्त्वगुणोद्रेकात् तन्निरासानुपपत्तिशङ्कां परिहरन्, फलितार्थमाह रज इति । "रजस्तमोभ्यामस्पृष्टम्", "तमोनिष्ठा हि ताः स्मृताः" इत्यत्र तमश्शब्दः रजसोऽप्युपलक्षणार्थः, शुद्धसत्त्वव्यतिरिक्तत्वात्; इत्यभिप्रायेण रजस्तमोभ्याम् इत्युक्तम् । 'स्वाभाविक' इत्यनेन सत्त्वगुणस्य स्थायित्वं विवक्षितम् । अनेन क्वचित्प्रमाद्यतो[5] व्यावृत्तिः । तेषामेव [6]वैदिकी रुचिः वेदार्थयाथात्म्यावबोधश्च इति । वेदावलम्बिकुदृष्टीनां वेदैकरुचित्वमूलसत्त्वगुणसद्भावेऽपि, तदर्थयाथात्म्यानवबोधहेतुभूतरजस्तमस्संभवात्, ते निरसनीयाः—इत्यर्थः । [7]बाह्यानामपि मन्त्रजपध्यानादिषु दृष्टफलत्वात् तदनुष्ठानस्य न नैष्फल्यम् — इति शङ्काव्यावृत्त्यर्थं "प्रेत्य" [8]इति पदम् । शुद्धसत्त्वव्यतिरिक्तानाम् अप्रामाण्यहेतुत्वमभिप्रेत्य मात्स्य-

---

१. एषाम्—पा०

२. वेदैकरुचिः—पा०

३. धर्मानुष्ठानेषु, तदर्थानुष्ठाने—पा०

४. पूर्वश्लोकेन—पा०

५. प्रमाद्यतां व्यावृत्तिः, प्रामादिकताव्यावृत्तिः, तत्प्रामादिकताव्यावृत्तिः—पा०

६. वेदैकरुचिः—पा०

७. बाह्यादीनामपि—पा०

८. इतिर्न दृश्यते क्वचित् ।

1. मनुस्मृ. १२-९६.

यथोक्तं मात्स्ये :—

[1]"सङ्कीर्णाः सात्त्विकाश्चैव राजसाः तामसास्तथा ॥" इति ॥

[1]केचिद्ब्रह्मकल्पाः सङ्कीर्णाः, केचित् सत्त्वप्रायाः, केचित् रजः-प्रायाः, केचित् तमःप्रायाः — इति कल्पविभाग[2]मुक्त्वा, सत्त्वरजस्तमोमयानां तत्त्वानां माहात्म्यवर्णनञ्च[3], तत्तत्कल्पप्रोक्त[4] पुराणेषु सत्त्वादि-गुणमयेन ब्रह्मणा क्रियते, इति च उक्तम् :—

[2]"यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥" इति ॥

---

वचनं दर्शयति यथोक्तम् इति । "सङ्कीर्णाः"इत्यादिवचने[5] प्रमाणाप्रमाणविभागकथना-भावेऽपि, सात्त्विकादिविभागकथनस्य प्रयोजनान्तराभावात्, प्रामाण्याप्रामाण्यनिर्णय एव प्रयोजनम् — इत्यभिप्रायः । उदाहृतश्लोकं व्याचष्टे केचित् इति । सङ्कीर्णादि-शब्दानां विशेष्याः—ब्रह्मकल्पाः, "यस्मिन् कल्पे तु" इत्युक्तेरिति भावः । कल्पानां रजःप्रभृतिगुणप्राचुर्यम्, तस्मिन् कल्पे ब्रह्मणः तद्गुणप्राचुर्यात् । "यस्मिन् कल्पे"इत्यादेः उदाहरिष्यमाणस्य अर्थमाह सत्त्वरजस्तमोमयानां तत्त्वानाम् इति । [6]दैवताना-मित्यर्थः । यस्मिन् इति । यस्मिन् कल्पे यत् पुराणं ब्रह्मणा उक्तम्, तस्मिन् कल्पे तत् पुराणम्—इत्यध्याहारः । 'तस्य तस्य' इति न कल्पपरः शब्दः; न हि ब्रह्मणो दिवसानां माहात्म्यं पुराणेषु वर्ण्यते, "अग्नेः [7]शिवस्य" इति देवताविशेषवर्णन-परत्वस्य वक्ष्यमाणत्वाच्च; 'तस्य तस्य' इति पदं तत्तद्देवताविशेषपरम् । अतः तस्मिन् कल्पे, तस्मिन् पुराणे, तत्तद्गुणप्रचुरस्य, तस्य तस्य दैवतस्य माहात्म्यं वर्ण्यते—

---

१. अयमर्थः—केचिद्ब्रह्मकल्पाः—पा०
२. कल्पभेदमुक्त्वा, कल्पविभागादुक्त्वा—पा०
३. चकारः क्वचिन्न दृश्यते ।
४. कल्पोक्त—पा०
५. इत्यादिवचनेन—पा०
६. तत्त्वानामिति—दैवतानामित्यर्थः—पा०
७. शिवस्येत्यादिदेवता—पा०

1, 2. मात्स्यपुराणे ।

विशेषतश्च उक्तम् :—

[1] "अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु च माहात्म्यम् अधिकं ब्रह्मणो विदुः ॥"

[2] "सात्त्विकेष्वथ[1] कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम् ॥"

[3] "संकीर्णेषु सरस्वत्याः पितृणाम्[2] ..." इत्यादि ॥

एतदुक्तं भवति – आदिक्षेत्रज्ञत्वात् ब्रह्मणः तस्यापि केषुचिदहस्सु सत्त्वम् उद्रिक्तम्, केषुचित् रजः, केषुचित् तमः ॥

---

इत्यर्थः । यद्वा, कल्पमाहात्म्यप्रतिपादनं वा । — [3]तत्तत्कल्पानुगुणदेवतामाहात्म्यप्रतिपादनम्; [4]यथा पुरवर्णनं नाम, पुरस्थ[5]गुरुगुणवर्णनम्, यथा च [6]वनवर्णनं नाम, तदसाधारणवृक्षादिवर्णनम् ॥

किंदैवतम्? किंगुणकम्? इत्यत्राह विशेषतश्च इति ॥

जगत्स्रष्टुः ईश्वरस्य ब्रह्मणो गुणवश्यत्वं[7] न संभवति, गुणविभागकथनस्य किं प्रयोजनम्? "सङ्कीर्णास्सात्त्विकाश्च[8]" इत्यादिवचनं किंगुणकेन ब्रह्मणा प्रोक्तम्? [4] "भूयसां बलीयस्त्व" न्यायादिदं वचनं बहुभिः पुराणैः बाध्यम्—इति शङ्कायाम् आह एतदुक्तम्[9] इति ॥

---

१. सात्त्विकेषु च—पा०
२. पितॄणामिति क्वचिन्न दृश्यते ।
पितॄणां च निगद्यते—पा०
३. तत्तत्कालानुगुण—पा०
४. यथा पुरवर्णनं नाम तदसाधारण-
वृक्षादिवर्णनम्—पा०
५. पुरस्थगुणवर्णनम्—पा०
६. वर्षावर्णनम्—पा०
७. गुणवत्त्वम्—पा०
८. सात्त्विकाश्चेत्यादि—पा०
९. एतदुक्तं भवतीति—पा०

1. मात्स्यपुराणे ५३-६८.
2. मात्स्यपुराणे ५३-६७.
3. मात्स्यपुराणे ५३-६९.
4. पूर्वमीमांसायाम् ३-३-१०.

यथोक्तं भगवता :—

[1]"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥" [1]इति ॥

[2]"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः, ब्रह्मणोऽपि सृज्यत्वेन, शास्त्रवश्यत्वेन च क्षेत्रज्ञत्वं गम्यते, सत्त्वप्रायेषु अहस्सु, तदितरेषु च यानि पुराणानि ब्रह्मणा प्रोक्तानि, तेषां परस्परविरोधे सति, सात्त्विकाहःप्रोक्तं पुराणमेव यथार्थम्, तद्विरोधि अन्यत् अयथार्थम् – इति पुराणनिर्णयायैव [2] इदं सत्त्वनिष्ठेन

---

ब्रह्मणः क्षेत्रज्ञत्वं कथमित्यत्राह यो ब्रह्माणम् इति। सृज्यत्वेन[3]। ऐच्छत्वश्रवणात् अपहतपाप्मत्वादिश्रवणरूप—अपवादरहितजन्मवत्त्वेनेति भावः। शास्त्रवश्यत्वेन । शास्त्रप्रदानं हि तत्सापेक्षस्येति भावः । ततः किमित्यत्राह सत्त्व इति । भूयसां बलीयस्त्वनयं[4] परिहरति तेषाम् इति । नैतद्वचनविरोधात् तेषां बाधः, किं तु परस्परविरोधात् । कृत्स्नपुराणानाम् अर्थनिर्णायकत्व[5]—शक्तिविरहे सति, तानि किं कार्त्स्न्येन त्याज्यानि ? उत कानिचित् स्वीकार्याणि ? इत्यपेक्षायां [6]सत्त्वादिमूलत्वलक्षणवैरूप्यपरम् – इदं वचनम् । अतो न [3]"भूयसां बलीयस्तया" अस्य बाधः इत्यर्थः । प्रयोजनमाह पुराण इति । किंगुणकेनोक्तमित्यत्राह सत्त्वनिष्ठेन इति । स्वतः प्रमाणत्वात्[7], अपवादकवचनान्तरादर्शनात्, [4]"यो ह खलु वा[8] अस्य" इत्यादिमैत्रायणीयश्रुत्या तत्तद्गुणकत्वेन अभिमतस्य

---

१. इतिः कुत्रचिन्नोपलभ्यते ।
२. एवकारः न दृश्यते कुत्रचित् ।
३. सृज्यत्वेनेति ऐच्छत्वश्रवणात्, सृज्यत्वेन शास्त्रवश्यत्वश्रवणात्—पा०
४. बलीयस्त्वन्यायम्—पा०
५. निश्चायकत्व—पा०
६. सत्त्वमूलत्व—पा०
७. प्रमाणकत्वात्—पा०
८. "खलु वा वास्या" इति मुद्रितकोशपाठः ।

1. गीता १८-४०.
2. श्वे. उ. ६-३५.
3. पूर्वमीमांसायाम् ३-२-१०.
4. मैत्रा. उ. ५-प्र. २.

ब्रह्मणा अभिहितमिति विज्ञायते इति[1] ॥

सत्त्वादीनां कार्यं च भगवतैव उक्तम् :---

[1]"सत्त्वात् संजायते ज्ञानं, रजसो लोभ एव च ।
प्रमादमोहौ तमसः, भवतोऽज्ञानमेव च ॥"

[2]"प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
[2]बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ! सात्त्विकी ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिस्सा पार्थ! राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ! तामसी ॥" इति[3] ॥

सर्वान् पुराणार्थान् ब्रह्मणस्सकाशात् अधिगम्यैव, सर्वाणि पुराणानि पुराणकाराः चक्रुः । यथोक्तम् :—

[3]"कथयामि यथापूर्वं दक्षाद्यैः मुनिसत्तमैः ।
पृष्टः प्रोवाच भगवान् अब्जयोनिः पितामहः ॥" इति ॥

---

तत्तद्देवताविशेषस्य प्रतिपादकानां प्रबन्धानाम्, तत्तद्गुणमूलत्वस्य[4] उचितत्वरूपेण वस्तुसामर्थ्येन स्वतस्सिद्धस्य प्रामाण्यस्य स्थिरीकरणाच्च, [5]प्रामाण्यहेतुभूतरजस्तमोऽभिभवनिरासकसत्त्वमूलत्वं सिद्धमिति भावः ॥

सात्त्विकादिविभागोऽस्तु, तत्र कस्य प्रामाण्यम्? कस्य [6]अप्रामाण्यम्? इत्यत्राह **सत्त्वादीनाम्** इति ॥

पुराणानां ब्रह्मप्रोक्तत्वे, कथं पराशरादिप्रोक्तत्वं संघटते? इत्यत्राह **सर्वान्** इति॥

---

१. इतिः न दृश्यते क्वचित् ।
२. बन्धमोक्षौ च—पा०
३. इतिः क्वचिन्नोपलभ्यते ।
४. तत्तद्गुणमूलस्य, तुत्तद्गुणमूलोचितत्व—पा०
५. अप्रामाण्य—पा०
६. कस्य वा प्रामाण्यम्—पा०

1. गीता १४-१७.
2. गीता १८-३०, ३१, ३२.
3. वि. पु. १-२-८.

अपौरुषेयेषु वेदवाक्येषु परस्परविरुद्धेषु कथमिति चेत्, तात्पर्यनिश्चयात् अविरोधः पूर्वमेव उक्तः ॥

यदपि चेदं विरुद्धमिव[1] दृश्यते :— [1]"प्राणं मनसि सह करणैः

---

पौरुषेयेषु [2]हि विरोधे[3] वक्तृगुणानुगुणप्रामाण्याप्रामाण्यविभाग उपपद्यते? अपौरुषेयश्रुतिवाक्येषु गुणानुगुणप्रामाण्याप्रामाण्यविभागेन निर्वाहो नोपपद्यते इति शङ्कते अपौरुषेयेषु इति। परिहरति तात्पर्य इति। [4]अभेदश्रुत्यादीनां[5] पूर्वापरपर्यालोचनादिना निर्वाहस्योक्तत्वात्, तेनैव प्रकारेण अत्रापि अविरोधनिर्वाहः इत्यभिप्रायेण 'पूर्वमेवोक्तः' इत्युक्तम् ॥

[2]"एक एव रुद्रः" इत्यादिवाक्यस्य पूर्वापरपर्यालोचनया, क्रतोः एकदेवताकत्वपरं तद्वाक्यमिति निर्धीयते; [3]"हरिकेशाय" इति पदं, पदाध्ययनपारम्पर्यादेव व्याख्यातम्। [4]"सोमः पवते" इत्यादौ ऋग्वेदमन्त्रे सोमशब्दोऽपि सोमलतापरः; योगाद्रूढेः बलीयस्त्वात्, समासविभागाभावेन पदक्रमाध्ययनात्, सोमलताविषये अस्य मन्त्रस्य विनियोगाच्च, सोमशब्दस्य उमासहितवाचित्वासंभवात्। किञ्च, सोमशब्दस्य देवतापरत्वेऽपि, रूढ्या अवगतः चन्द्र एव स्वरसतः प्रतीयते; [6]न योगावसेयो रुद्रः। अतो न किञ्चिदेतत्। अस्मिन् मन्त्रे [5]"जनिता" इति पदं च [7]प्रीणनार्थम्। एवमन्यदपि, प्रकरणालोचनादिभिः परिहर्तव्यम्—इत्यभिप्रायः ॥

एवम्, वेदपूर्वभागवचसां [8]विरोधे निर्वाहोऽस्तु, उपनिषद्भागेषु [9]अन्यपरत्वाद्यभावात् तत्र कथं निर्वाहः? इत्यत्राह यदपि इति ॥

---

१. विरुद्धवत्—पा०
२. हिः क्वचिन्न।
३. विरोधे तु—पा०
४. भेदाभेद—पा०
५. श्रुतीनाम्—पा०
६. नकारः क्वचिन्न दृश्यते।
७. प्रीतिजननार्थम्—पा०
८. अविरोधेन निर्वाहः—पा०
९. अनन्यपरत्वात्—पा०

1. अथर्वशिखोपनिषत्।
2. १-का. ७-प्र. १०.
3. ४ का. ५-प्र. ५.
4, 5. ऋग्वेदे अ-म-सू.

नादान्ते परात्मनि । संप्रतिष्ठाप्य ध्यायीत ईशानं प्रध्यायीत एवं [1] सर्व-मिदम् । ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते । न [2] करणं ... कारणं तु ध्येयः । सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुः आकाशमध्ये ध्येयः ॥"

[1] "यस्मात्परं नापरमस्ति किंचित् ।
यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । तेनेदं पूर्णं पुरुषेण सर्वम् ॥
ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्ति । अथेतरे दुःखमेवापियन्ति ॥
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात् सर्वगतश्शिवः ॥"

[2] "यदा तमः तन्न दिवा न रात्रिः न सन् न चासच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥"

इत्यादि ॥

" [3]नारायणः परं ब्रह्म " इति [4] च [5] पूर्वमेव प्रतिपादितम्, तेनास्य कथमविरोधः [6] ?

---

"इत्यादि [7] " शब्देन अथर्वशिरोवाक्यानि, चतुर्मुखकारणत्वपराणि [3] "हिरण्यगर्भस्समवर्तताग्रे ", [4] "धाता यथापूर्वमकल्पयत् ", [5] "प्रजापतिः प्रजा असृजत" [8]इत्यादिवाक्यानि च विवक्षितानि । ततः किम् ? इत्यत्राह नारायण इति ॥

---

१. प्रध्यायितव्यम्—पा०
२. न कारणमिति कुत्रचिन्नोपलभ्यते । अकारणम्—पा०
३. नारायणपरम्—पा०
४. चः क्वचिन्न ।
५. पूर्वोक्तम्—पा०
६. विरोध इति—पा०
७. आदिशब्देन—पा०
८ इत्यादीनि च वाक्यानि—पा०

1. श्वे. उ. ३-९, १०, ११.
2. श्वे. उ. ४-१८.
3. ४ का. २ प्र. ३४.
4. तै. उ. ना. १-१३-२.
5. २ का. १ प्र. १.

अत्यल्पमेतत्ः—

[1] "वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिताः ।
वेदास्साङ्गा हरिं प्राहुः जगज्जन्मादिकारणम् ॥ "

[2] "जन्माद्यस्य यतः", [3] "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्म ।" इति जगज्जन्मादिकारणं [१] ब्रह्मेत्यवगम्यते ।

तच्च, जगत् सृष्टिप्रलयप्रकरणेष्वेव अवगन्तव्यम् । [4] "सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम्" इति जगदुपादानता – जगन्निमि-

---

परिहरति [२] अत्यल्पम् इत्यादिना । तत्र प्रथमं स्वपक्षं प्रतिजानीते 'वेदवित्' इत्यादिश्लोकेन । **वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिताः** इति । स्मृतीतिहासपुराणमीमांसान्यायोपबृंहिताः — इत्यर्थः ॥

तत्र स्वपक्षस्य प्रतिज्ञातस्य प्रमाणमुपन्यसिष्यन्, प्रथमं कारणवाक्यान्युदाहरिष्यन्, सूत्रपुरस्सरं लक्षणवाक्यमाह **जन्मादि** इति ।

जगत्कारणं वस्तु ब्रह्मास्तु, तच्च [३] जगत्कारणं किम्? इत्यपेक्षायामाह **तच्च** इति । **जगत्सृष्टिप्रलयप्रकरणेष्वेव** इति । न तु उपासनादिविधिपरेषु[४], [5] "शम्भुराकाशमध्ये ध्येयः" इत्यादिष्वित्यर्थः । तत्र हि कारणत्वानुवादेन ध्येयताविधिपरत्वम्? जगत्सृष्टिप्रलयप्रकरणेषु 'सत्', 'ब्रह्म' इत्यादिभिः बहुभिः शब्दैः कारणत्वप्रतिपादनात्, न[५] नारायणस्यैव[६] कारणत्वसिद्धिः इत्यत्राह **सदेव** इति ॥

[6] "गतिसामान्यन्यायात्[७]" सर्वेषां कारणवाक्यानाम् ऐककण्ठ्यमभि-

---

१. परं ब्रह्मेति—पा०
२. अत्यल्पमेतदित्यादिना—पा०
३. जगत्कारणम् — एतन्नोपलभ्यते क्वचित् ।
४. उपासनाविधिपरेषु—पा०
५. नकारः कुत्रचिन्न दृश्यते ।
६. कथं कारणत्वसिद्धिः—पा०
७. साम्यन्यायात्—पा०

1. श्रीभाष्यकारसङ्ग्रहश्लोकः ।
2. ब्र. सू. १-१-२
3. तै. उ. भृ. १.
4. छा. उ. ६-२-१.
5. अथर्वशिखोपनिषत् ।
6. ब्र. सू. १-१-११.

त्ता—जगदन्तर्यामितादिमुखेन[१] परमकारणम् सच्छब्देन[२] प्रतिपादितम्॥

अयमेवार्थः – [1] " ब्रह्म वा इदमेक एवाग्र आसीत् " इति शाखान्तरे ब्रह्मशब्देन प्रतिपादितः। अनेन [३] सच्छब्दाभिहितं ब्रह्मेत्यवगतम्। अयमेवार्थः, शाखान्तरे [2] " आत्मा वा इदमेक एवाग्र आसीत्। नान्यत् किञ्चन मिषत् " इति। [४] तथा " सत्, ब्रह्म " शब्दाभ्यां आत्मैव अभिहित[५] इत्यवगम्यते। तथा च शाखान्तरे

---

प्रेत्य, उदाहृतवाक्यैकार्थं वाक्यान्तरं दर्शयति **अयमेव** इति। कारणवाक्यजातैकार्थ्यसिद्धं[६], सच्छब्दस्य ब्रह्मशब्दार्थे पर्यवसानमाह **अनेन** इति। वाक्यान्तरम् उक्तवाक्यैकार्थमाह **अयमेव** इति। अयमेवार्थः—प्रतिपादित इत्यर्थः। सद्ब्रह्मशब्दयोः आत्मपर्यवसानमाह [७]**तथा** इति। आत्मशब्दस्य सद्ब्रह्मशब्दापेक्षया विशेषशब्दत्वेऽपि नारायणशब्दापेक्षया सामान्यशब्दत्वात् तत्र पर्यवसानमाह **तथा च** इति। [८] शिवस्य कारणत्ववादिनाऽपि आपेक्षिकसामान्यविशेषभावोऽभ्युपेत्यः, अन्यथा बहुकारणत्वप्रसंगात्। तत्र शिवादिशब्दानामपि नारायणशब्दापेक्षया सामान्यशब्दत्वात् नारायणे पर्यवसानमिति भावः। यथा [3] " पशुना यजेत " इत्यत्र पशुसामान्यवाचिपशुशब्दः, [4] " छागस्य वपाया मेदसः " इति मन्त्रस्थछागशब्दोक्तविशेषे पर्यवस्यति; एवं, सच्छब्दः, बृहदबृहत्साधारणत्वात् ब्रह्मशब्दोक्तविशेषे पर्यवस्यति; चेतनाचेतनसाधारणो ब्रह्मशब्दः, चेतनैकान्तात्म-

---

१. अन्तर्यामितामुखेन—पा०

२. सच्छब्देन अभिहितं ब्रह्मेत्यवगतम्। अयमेवार्थः—पा०

३ सच्छब्दादवगतम्—पा०

४. तथेति क्वचिन्नोपलभ्यते।

५. अवगतः—पा०

६. ऐकार्थ्यं सिद्धम्, ऐकार्थ्यसिद्ध्यर्थम्-पा०

७. आत्मेति, सदिति—पा०

८. शिवकारणत्ववादिना—पा०

1. बृ. उ. ३-४-१०.

2. ऐत. उ. १.

3. कृ. य. चै. ६-१-११. विधिवाक्यसिद्धं वाक्यम्.

4. ३ अष्ट. ६ प्र. २३.

[1]"एको ह वै नारायण आसीत्, न ब्रह्मा नेशानो, नेमे द्यावापृथिवी[१]"

शब्दोक्तविशेषे पर्यवस्यति; तथा आत्मशब्दश्च सर्वचेतनसाधारणः[२], नारायण एव विशेषे पर्यवस्यतीति[३], नारायण एव "[४]सद्ब्रह्मात्म" शब्दैः अभिधीयते इत्यर्थः ॥

ननु "एको ह वै नारायण आसीत्" इत्यत्र अनुवादसूचक—'ह वै' शब्द-श्रवणात्, [2]"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति वाक्यवत् इदमपि वाक्यम् अनुवादपरमिति, वाक्यान्तरसापेक्षम्। तत्र [3]"तद्वृत्तम्, एवकारश्च स्यादुपादेयलक्षणम्" इति, [५]विधित्वसूचक—एवकारवता [4]"न सन्नचासत्" इत्यादि-वाक्येन उक्तः शिव एव अनूद्यते इति। अत्रोच्यते :— [5]"अप्राप्ते [६]हि शास्त्र-मर्थवत्" इति न्यायेन स्वतः प्राप्तस्य विधित्वस्य 'ह वै' शब्दो न भंजकः, [७]यथा [6]"यदाग्नेयोऽष्टाकपालः" इत्यत्र [7]"यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्[८]" इति[९] अनुवादसूचक—यच्छब्दसद्भावेऽपि, [8]"वचनानि त्वपूर्वत्वात्" इति सूत्रेण विधित्वं स्थापितम्, प्रमाणान्तराप्राप्तत्वात्; तथा [9]"उपरि हि देवेभ्यो धारयति" इत्यत्र 'हि' शब्दसद्भावेऽपि, [10]"विधिस्तु धारणेऽपूर्वत्वात्" इति सूत्रेण विधित्वं स्थापितम्, [१०]प्रमाणान्तराप्राप्तत्वात्; तस्मात्, न स्वतःप्राप्तविधित्व-भञ्जको 'ह वै' शब्दः; अपि तु, प्रमाणान्तरेण विधित्वे भग्ने, प्रयुक्तशब्दस्य गतिप्रदर्शकः; आकाशकारणत्ववाक्ये तु अयोग्यत्वादिना विधित्वभङ्गात्, 'ह वै'

---

१. पृथिवी न नक्षत्राणीत्यादिना—पा०
२. चेतनासाधारणः—पा०
३. इतिर्नास्ति क्वचित्।
४. सद्ब्रादिशब्दैः, सद्ब्रह्मात्मादिशब्दैः—पा०
५. विधिसूचक—पा०
६. हिर्नास्ति क्वचित्।
७. यथा—क्वचिन्न दृश्यते।
८. उद्देश्यस्य लक्षणम्—पा०
९. इत्याद्यनुवाद—पा०
१०. 'प्रमाणान्तराप्राप्तत्वात्'—एतन्न दृश्यते क्वचित्।

1. महोपनिषत् १-१.
2. छा. उ. १-११.
3. श्लोकवार्तिकम्।
4. श्वे. उ. ४-१८.
5. मीमांसान्यायम्।
6. २ का. ५ प्र. १६.
7. श्लोकवार्तिकम्।
8. पू. मी. ३-५-६.
9. पू. मी. ३-४-१५ विषयवाक्यम्।
10. पू. मी. ३-४-१५.

इत्यादिना[1], सत् — ब्रह्म — आत्मादि[2] परमकारणवाचिभिः[3] शब्दैः नारायण एव अभिधीयत इति निश्चीयते ॥

---

शब्दः अनुवादरूपताज्ञापकः; अत्र तु प्रमाणान्तराप्राप्तत्वात्, विधित्वभञ्जकाभावाच्च, 'ह वै' शब्दः न स्वतःप्राप्तविधित्वभञ्जकः। [1]"शिव एव" इत्यनेन विधित्वं भग्नमिति चेत्, न; [2]"शिवास्ते सन्तु पन्थानः", [3]"शिवं कर्मास्तु", [4]"शिवश्शिवानाम्, अशिवोऽशिवानाम्", [5]"यो वश्शिवतमो रसः[4]" इत्यादिषु अर्थान्तरपरत्वदर्शनेन, शिवशब्दस्य साधारणत्वात्। साधारणोऽपि विधित्वभञ्जक[5]इति चेत्; [6]"सदेव" इत्यादिशब्दात् "शिव एव"[6]इत्यस्य वाक्यस्य अनुवादरूपत्वमस्तु; तस्मात् साधारणः शिवशब्दोऽपि नारायणपर्यवसायीति ॥

[7]"एको ह वै" वाक्यस्य अनुवादरूपत्वमस्तु; तथाऽपि, [8]"विष्णुस्तदाऽऽसीद्धरिरेव निष्कलः"[7]इत्यादिस्वसमानार्थवाक्यश्रवणात् तदनुवादित्वमेवेति, न विरुद्धार्थपरवाक्यानुवादित्वम् ॥

किञ्च[8] शिवस्य कारणत्वमनुवदतीति चेत्, [9]"न ब्रह्मा नेशानः" इत्यनन्तरवाक्यव्याहतिः[9], [10]"त्र्यक्षश्शूलपाणिः पुरुषो जायते" इत्युत्तरवाक्यव्याहतिश्च[10]। तस्मात्, नारायणस्यैव परमकारणत्वप्रतिपादकमिदं वाक्यमित्यभिप्रायः। अत्र

---

१. आदिना — क्वचिदेतन्न।
२. सद्ब्रह्मादि — पा०
३. वादिभिः — पा०
४. यो वश्शिवतमो रसः — एतन्न दृश्यते क्वचित्।
५. इतिः न दृश्यते क्वचित्।
६. इत्यादिवाक्यस्य — पा०
वाक्यस्येति क्वचिन्न दृश्यते।
७. इति स्वसमानार्थ — पा०
८. किञ्च — एतन्न दृश्यते क्वचित्।
९. वाक्यविहतिः — पा०
१०. वाक्यविरोधश्च — पा०

1. श्वे. उ. ४-३५.
2. शाकुन्तलम्. ४. अं.
3. पुण्याह. प्र.
4. खिलम्।
5. तै. उ. ना. १२-१.
6. छा. उ. ६-२-१.
7. महोपनिषत् १-१.
8. महानारायणोपनिषत्।
9. महोपनिषत् १-१.
10. सु. उ. २.

[1] "यमन्तस्समुद्रे कवयो वयन्ति" [१] इत्यादि, [2] "नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । न तस्येशे कश्चन तस्य नाम महद्यशः । न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" इति सर्वस्मात् परत्वम् अस्य प्रतिपाद्य, [3] "न तस्येशे कश्चन" इति तस्मात् परं किमपि न विद्यते इति च प्रतिषिध्य, [4] "अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ" इति

---

शिवशब्दः साधारण एव व्युत्पन्नः ; तस्मात्, साधारणः शिवशब्दोऽपि नारायणपर्यवसायीति; [२] "एको ह वै" इत्यादिवाक्यं नारायणकारणत्वविधायकमेव इति । [5] "विष्णुस्तदासीद्धरिरेव निष्कलः" इत्यादीनि[३] कारणवाक्यान्यपि अनुसन्धेयानि ॥

अथ उक्तार्थे प्रमाणान्तरं च [४] वदन्, अर्थात् हिरण्यगर्भकारणत्वशङ्कां च निराकरोति **यमन्तः** इत्यादिना । अत्र समुद्रशायित्वलिङ्गेन, अस्य प्रकरणस्य नारायणपरत्वनिश्चयार्थं "यमन्तस्समुद्रे" इति[५] वाक्यमुपात्तम् । आदिशब्देन [6] "विद्युतः पुरुषादधि" इत्युक्तं विद्युद्वर्णपुरुषत्वं च विवक्षितम् ; [7] "वेदाहमेतं पुरुषम् महान्तम्, आदित्यवर्णं तमसस्तु[६] पारे" इति श्रुतेः । विद्युद्वर्णपुरुषत्वं हि परमपुरुषलिङ्गम् । जगत्कारणत्व[७]—अनन्येश्वरत्व—मोक्षप्रदत्वरूपपरत्वप्रदर्शनार्थं "नैनमूर्ध्वम्" इत्यादिवाक्यमुदाहृतम् । "अद्भ्यस्संभूतः" इत्युत्तरनारायणैकवाक्यत्वाच्च, नारायणपरत्वमाह "अद्भ्यः" इति । "अद्भ्यस्संभूतः" इत्यनुवाकस्य कथं

---

१. इत्यादिना—पा०
२ अत्र "एको ह वै" इत्यादि—पा०
३. इत्यादिकारणवाक्यानि—पा०
४. वक्ष्यन्—पा०
५. इत्यादिवाक्यम्—पा०
६. तमसः परस्तात्—पा०
७. जगत्कारणत्व-सर्वेश्वरत्व—पा०

1. तै. उ. ना. १-१.
2,3. तै. उ. ना. १-२.
4. तै. उ. ना. १-३.
5. महानारायणोपनिषत् ।
6. तै. उ. ना. १-१.
7. पुरुषसूक्तम् २०.

तेन एकत्रावचतां गमयति[1]; तच्च महापुरुषप्रकरणम्; [1] "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ"[2] इति नारायण एवेति[3] द्योतयति ॥

---

नारायणपरत्वमित्यत्राह तच्च इति । [2] "वेदाहमेतं पुरुषम् महान्तम्, आदित्यवर्णं तमसः परस्तात्" इति वाक्येन, महापुरुषप्रकरणत्वावगमात्, लक्ष्मीपतित्वलिङ्गाच्च, "अद्भ्यस्संभूतः" इत्यनुवाकस्य नारायणपरत्वमित्यर्थः ॥

[3] "सहस्रशीर्षा पुरुषः" इत्यनुवाकस्य कथं नारायणपरत्वम्? पुरुषशब्दोऽपि अन्यत्रावी स्यात्, इति चेत्, उच्यते :-- [4] "सहस्रशीर्षा पुरुषः इत्युपहितां[4] पुरुषेण नारायणेन यजमान उपतिष्ठते", [5] "नारायणाभ्यामुपस्थानम्", [6] "उत्तरनारायणेन आदित्यमुपतिष्ठते" [5] इत्यादिकल्पसूत्रकारनिर्देशात् नारायणपरत्वं सिद्धम् । अथर्ववेदोक्तेषु अष्टादशमहाशान्तिकर्मसु वैष्णव्यां महाशान्त्यां श्रीपुरुषसूक्तं विनियुक्तम्, [7] "वैष्णव्यां पुरुषसूक्तम्[6]" इति; [8] "आद्ययाऽऽवाहयेद्देवम् ऋचा तु पुरुषोत्तमम्" इत्यादिना, शौनकादिभिः भगवत्समाराधने च विनियुज्यते । स्मृतिवचनं च :— [9] "पुरुषस्य हरेस्सूक्तम्" इति । सुबालोपनिषदि [7] च :— [10] "चक्षुश्च द्रष्टव्यं च नारायणः, श्रोत्रं च श्रोतव्यं च नारायणः" इत्यादिना नारायणात्मकत्वं सर्वस्य उक्त्वा, [11] "पुरुष एवेदं सर्वम्" इति पुरुषात्मकत्वेन उपसंहृतम् । [12] "सहस्रशीर्षं देवम्", [13] "विश्वमेवेदं पुरुषः" इति

---

१. अवगमयति, निगमयति—पा०
२. इति च—पा०
३. नारायणस्यैवेति—पा०
४. इत्युपबृंहिताम्—पा०
५. इत्यादिसूत्रकार—पा०
६. पुरुषसूक्तकम्—पा०
७. चकारः क्वचिन्न दृश्यते ।

1. पुरुषसूक्तम् २४.
2. पुरुषसूक्तम् २०.
3. पुरुषसूक्तम् १.
4, 5, 6. अपस्तम्ब.
7. अथर्ववेदः ।
8. शौनकवचनम् ।
9. शौनकस्मृतिः ।
10. सु. उ.
11. पुरुषसूक्तम् २.
12, 13. तै. उ. ना. १३-१.

अयमर्थः नारायणानुवाके प्रपञ्चितः — [1]" सहस्रशीर्षं देवम् " इत्यारभ्य, [2]" स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् " इति

---

नारायणानुवाकस्थ 'सहस्रशीर्ष', 'पुरुष' शब्दाभ्याम्, [3]" सहस्रशीर्षा पुरुषः " इति प्रत्यभिज्ञापिताभ्यां च, तयोः नारायणपरत्वं गम्यते । [4]" महादेवं महापुरुषं[1] वाऽर्चयेत् " इति प्रयोगाच्च, [5]" वेदाहमेतं पुरुषं महान्तम् " इति पुरुषशब्दस्य साधारण्यशङ्का दूरोत्सारिता । एवं पुरुषशब्दस्य नारायणपरत्वं निश्चीयते ॥

[6]" अम्भस्य पारे " [2]इत्यनुवाक एव उक्ताभ्यां समुद्रशायित्व—विद्युद्वर्ण-पुरुषत्वलिङ्गाभ्यां, महापुरुषप्रकरणत्व[3] — लक्ष्मीपतित्वलिङ्गान्वितोत्तरनारायणेन एकवाक्यत्वाच्च—इदं प्रकरणं नारायणपरम् । एतदेकवाक्यत्वात् [7]" हिरण्यगर्भस्समवर्तताग्रे " इत्यादिकमपि नारायणपरम् इत्यर्थः । एवं, नारायणस्यैव परमकारणत्वे श्रीपुरुषसूक्तादिकं [4]प्रमाणतया उक्तम् । चतुर्मुखकारणत्वं च अर्थात् निरस्तम् । " हिरण्यगर्भः " इत्यादीनाम् ऋचां भगवत्समाराधने — हविर्निवेदने विनियोगाच्च, [8]" हिरण्यगर्भो भूगर्भः " इति भगवति प्रयोगाच्च[5], हिरण्यगर्भशब्दस्य नारायणपरत्वं सिद्धमिति[6] ॥

अथ नारायणानुवाकमपि प्रमाणत्वेनाह अयमर्थः इति । प्रपञ्चित इति । " न केवलं समुद्रशायित्वादिना लभ्यते, अपि तु कण्ठोक्तः " इत्यभिप्रायः । नारायणानुवाकः कः ? [7]तत्र तस्य अर्थस्य प्रपञ्चितत्वं कथम् ? इत्यत्राह सहस्र

---

१. महादेवम्—पा०
२. इत्याद्यनुवाक—पा०
३. प्रकरणलक्ष्मी—पा०
४. प्रकरणतयोक्तम्—पा०
५. प्रयोगदर्शनाच्च—पा०
६. सिद्धयति—पा०
७. तत्रार्थस्य, तत्रास्यार्थस्य—पा०

1. तै. उ. ना. १३-१.
2. तै. उ. ना. १३-२.
3. पुरुषसूक्तम् १.
4. आपस्तम्बस्मृतिः ।
5. पुरुषसूक्तम् २०.
6. तै. उ. ना. १-१.
7. ४ का. २ प्र. ३४.
8. श्रीविष्णुसहस्र. २२.

सर्वशाखासु परतत्त्वप्रतिपादनपरान्, अक्षर — शिव — शम्भु — परब्रह्म-परंज्योतिः — परतत्त्व — परायण — परमात्मादिसर्वशब्दान्, तत्तद्गुण-

इति । प्रपञ्चितत्वमुपपादयति सर्व इति । इदं तावत् [1]सर्वविद्योपास्यविशेष-निर्णयपरम् । [2] [1]"दहरविद्याप्रकरणत्वात् [3]" एतत्, शेषभूतम् इति चेत्, न; प्रकरणादपि बलीयसा वाक्यप्रमाणेन [4]सर्वविद्याशेषत्वावगमात् ॥

प्रकरणान्तराधीतविद्यानां [5] प्रकरणान्तरस्थ[6]मिदं कथमुपास्यविशेषसमर्पकम्? इति चेत्; उच्यते । यथा प्रकरणान्तरस्थेन [2]"जुह्वा जुहोति" इति वाक्येन होमसाधनतया विहितामपि जुहूं, प्रकरणान्तरस्थ[7]मपि [3]"यस्य पर्णमयी जुहूः" इति वाक्यं जुहूशब्दप्रत्यभिज्ञापितामनूद्य, तस्याः पर्णमयत्वं विदधाति; जुह्वा द्रव्यविशेषस्य आकाङ्क्षितत्वात्, योग्यत्वाच्च ॥

एवं [8]तत्तद्विद्यासु उपास्यत्वेन विहितं वस्तु किम्? इत्यपेक्षायाम्, तत्तच्छब्द-प्रत्यभिज्ञापितं [9] तत्तदनूद्य, तस्य नारायणत्वं विधीयत इत्युपपन्नम् — [10]इत्येतदभि-प्रायेण 'सर्वशाखासु' इत्युक्तम् । तत्तद्गुणयोगेन तत्तच्छब्दानां नारायण-वाचित्वमित्याह तत्तत् इति[11] । [4]"विश्वमेवेदं पुरुषः" इति सामानाधि-

१. न सर्वविद्योपास्य—पा०
२. किन्तु 'दहरविद्या...'—पा०
३. प्रकरणत्वादेव तच्छेष—पा०
४. सर्वविद्याविशेषत्वावगमात्—पा०
५. अधीनविद्यानाम्, अधीतानां विद्या-नाम्—पा०
६. प्रकरणान्तरमिदम्—पा०
७. प्रकरणान्तरस्थाम्—पा०
८. तद्विद्यासु—पा०
९. प्रत्यभिज्ञातम्—पा०
१०. एतदित्यभिप्रायेण—पा०
११. इत्यादिना—पा०

1. ब्र. सू. १-३-५.
2. मीमांसा ४-३-१.
3. ३ का. ५ प्र. ७ अनु.
4. तै. उ. ना. ९-११.

योगेन नारायण एव प्रयुज्य, तद्व्यतिरिक्तस्य समस्तस्य [1]तदायत्तताम्, तद्व्याप्यताम्, तदाधारताम्, तन्नियाम्यताम्, तच्छेषताम्, तदात्मकतां

---

करण्यस्य अर्थमाह समस्तस्य इति। [2]तदायत्तत्व – तन्नियाम्यत्व – तच्छेषत्व – तद्व्याप्यत्वैः तादात्म्यमित्यर्थः। तदिदमत्रैव स्पष्टम्:— [1]"व्याप्य नारायणः स्थितः", [2]"पतिं विश्वस्य", [3]"तद्विश्वमुपजीवति" इति[3]। पतित्वम्, शेषित्वम्, विश्वोपजीव्यत्वम्[4], धारकत्वेन नियमनं च अर्थसिद्धम्; [4]"एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना नियमनेन धारकत्वश्रवणात्। तस्मात् यथोक्त एव सामानाधिकरण्यार्थः[5]॥

[5]"नारायणपरं ब्रह्म" इत्यत्र नारायणात् परमिति केचिदवैदिका[6] विदुः; तदयुक्तम्; महोपनिषदि [6]"नारायणः परं ब्रह्म" इति पदविच्छेदेन अधीतत्वात्, [7]"तत्त्वं नारायणः परः" इत्यादिप्रकरणविरोधाच्च। [8]"सुपां सुलुक्" इत्यादिना लुप्तविभक्तिकमिदं[7] पदम्; समस्तत्वेऽपि [9]"[8]निषादस्थपतिन्यायेन प्रथमाविभक्त्यर्थत्वमेव न्याय्यम्। लैङ्गे च [10]"अहमेव परं ब्रह्म परं तत्त्वं पितामह!। अहमेव परं ज्योतिः परमात्मा त्वहं विभुः" इति भगवद्वचनाच्च प्रथमार्थः॥

---

१. 'तदायत्तताम्, तद्व्याप्यताम्'—एतन्न दृश्यते क्वचित्।
२. तदाधेयत्व-तन्नियाम्यत्व—पा०
३. इतिः क्वचिन्न दृश्यते।
४. जीवकत्वम्—पा०
५. सामानाधिकरण्यस्यार्थः—पा०
६. केचिद्वैदिकाः—पा०
७. इदमिति क्वचिन्न दृश्यते।
८. निषादस्थपतिं याजयेदिति न्यायेन-पा०

1, 2, 3. तै. उ. ना. १३-१.
4. बृ. उ. ५-८-९.
5. तै. उ. ना. १३-१.
6. महोपनिषत्।
7. तै. उ. ना. १३-१.
8. सिद्धान्तकौमुदी वैदिकप्रक्रिया अष्टाध्या. ७-१-३९.
9. मीमांसा ६-२-१३.
10. लैङ्गे।

च प्रतिपाद्य, ब्रह्मशिवयोरपि, इन्द्रादिसमानाकारतया तद्विभूतित्वं च प्रतिपादितम् ॥

इदं च वाक्यं [1] 'केवलपरतत्त्वप्रतिपादनपरम्'[2], अन्यत् किञ्चिदपि अत्र न विधीयते। अस्मिन् वाक्ये प्रतिपादितस्य सर्वस्मात् परत्वेन

---

[1] "स ब्रह्मा स शिवः" इति सामानाधिकरण्यस्य अर्थमाह ब्रह्म इति। इन्द्रादि इति। आदिशब्देन [2] "परमः स्वराट्" इति मुक्तसामानाधिकरण्यम्, [3] "विश्वमेवेदं पुरुषः" इति विश्वजगत्सामानाधिकरण्यं च [3] विवक्षितम्। इन्द्रसामानाधिकरण्यम्, मुक्तसामानाधिकरण्यम्, विश्वजगत्सामानाधिकरण्यं च हि त्रिभूतित्वकृतम्[4]। तद्वदेव, ब्रह्मशिवसामानाधिकरण्यं[5] च इत्यर्थः। "परमः स्वराट्" इति मुक्तात्मा उच्यते; तत्र परमशब्देन कैवल्यमोक्षव्यावृत्तिः। यद्वा, जीवस्य अवस्थासु सर्वासु अतःपरं निरतिशयावस्थान्तरं नास्तीति परमशब्दार्थः ॥

ननु एतदनुवाकवाक्यजातं शम्भुशिवादिशब्दानुगुण्येन नेयम्, न त्वेतदानुगुण्येन[6] तेषां नेयत्वमिति शङ्कायां वैषम्यमाह केवल इति। अत्रानुवाके कस्यचिदर्थान्तरस्य विधानादर्शनात्, इदम् अनन्यपरम् उपास्यविशेषैकनिर्णयपरमित्यर्थः। अन्यानि [7] तु अन्यपराणीत्याह अस्मिन् इति। यथा [4] "यस्य पर्णमयी जुहूः" इति वाक्ये पर्णमयत्वेन उक्तस्य [5] "जुह्वा जुहोति" इति होमसाधनत्वविधिः, तथा अत्र सर्वस्मात्परत्वेन उक्तस्य नारायणस्य "ब्रह्मविदाप्नोति" इत्यादिषु मुमुक्षूपास्यत्व-

---

१. केवलतत्त्वप्रतिपादन, केवलपरतत्त्वैकप्रतिपादन—पा०
२. प्रतिपादनैकपरम्—पा०
३. चकारः क्वचिन्न।
४. विभूतिकृतम्—पा०
५. सामानाधिकरण्यश्रुत्यर्थः—पा०
६. इतरानुगुण्येन—पा०
७. तुर्नास्ति क्वचित्।

1, 2. तै. उ. ना १३-२.
3. तै. उ. ना. १३-१.
4. ३ का. ५ प्र. ७ अनु.
5. मीमांसा ४-३-१.

अवस्थितस्य [1] ब्रह्मणः वाक्यान्तरेषु [1] "ब्रह्मविदाप्नोति परम्" इत्यादिषु उपासनादि विधीयते ॥

विधिः इत्यर्थः [2] "दहरं विपाप्मम्" इत्यादिना [2] पूर्वानुवाकोक्तस्य [3] अर्थस्य [3] "पद्मकोशप्रतीकाशम्" इत्यत्र प्रतिपादितत्वात्, [4] दहरोपासनपर[5] मेव[6] इति चेत्; दहरविद्यायाः प्रकृतायाः उपास्यविशेषाकाङ्क्षायाम्, न केवलम् अस्यामेव उपास्यो नारायणः, अपि तु [7] सर्वासु विद्यासु [8] स एव उपास्य इति, दहरविद्याप्रसङ्गेन सर्वविद्योपास्यविशेषनिर्णय[9] एव अत्र क्रियत इति, वाक्यप्रमाणावगतत्वात् सर्वविद्याशेषभूतम् ॥

तत्र दहरविद्याया अपि उपास्यः अनेन निर्णीतो [10] भवति । [11] तत्र पूर्वप्रस्तुते "दहरं विपाप्मम्" इत्यादौ वक्तव्यांशसद्भावात्[12] तदत्रोक्तमिति, नात्र उपासनविधिपरत्वम् । एवं, स्वपक्षसाधनत्वेन कारणवाक्यानि, श्रीपुरुषसूक्तं, नारायणानुवाकवाक्यं च उदाहृतम् ॥

अयं क्रमः भगवद्यामुनाचार्यानुरोधेन[13] कृतः; [14] तत्प्रणीते स्तोत्रे [4] "नावेक्षसे" इत्यादिना कारणवाक्यानि विवक्षितानि । [5] "वैदिकः कः[15]" इत्यनेन श्रीपुरुषसूक्तं विवक्षितम् । वैदिकः — वेदाध्यायी । [6] "इदं पुरुषसूक्तं

१. परब्रह्मणः, परस्य ब्रह्मणः—पा०
२. सर्वानुवाक—पा०
३. अर्थस्येति क्वचिन्न दृश्यते ।
४. तद्दहरोपासन—पा०
५. परमिति क्वचिन्न दृश्यते ।
६. एवकारः क्वचिन्न दृश्यते ।
७. सर्वविद्यासु—पा०
८. स इति कुत्रचिन्नास्ति ।
९. निर्णयशब्दः कुत्रचिन्नोपलभ्यते ।
१०. भवतीति—पा०
११. अत्र—पा०
१२. संभवात्—पा०
१३. यामुनार्यानुरोधेन—पा०
१४. तत्प्रणीतस्तोत्रे—पा०
१५. 'कः' — क्वचिदेतन्न दृश्यते ।

1. तै. उ. आ. १ १.
2. तै. उ. ना. १२-३.
3. तै. उ. ना. १३-२.
4. आलवन्दारस्तोत्रे १० श्लो.
5. आलवन्दारस्तोत्रे ११ श्लो.
6. व्यासवचनम् ।

हि सर्ववेदेषु पठ्यते " इति वचनात्, न हि कश्चिदपि वैदिकः श्रीपुरुषसूक्तानध्यायी—इति वैदिकशब्दाभिप्रायः । [1]एवम्, [1]" ब्रह्मा शिवः शतमखः " [2]इत्यादिना नारायणानुवाकोपसंहारवाक्यस्मारणेन नारायणानुवाको विवक्षितः । [2]' नारायण ' इति सम्बुध्या नारायणानुवाकं [3] स्मारयन्, कारणवाक्यानां [4] श्रीपुरुषसूक्तस्य च नारायणपरत्वं सूचयति । अतः तदनुरोधेन अयं क्रम उक्तः ॥

अत्र[5] कठवल्ल्यादिश्रुतयोऽपि अनुसन्धेयाः । कठवल्ल्याम्— [3]" सर्वे वेदा यत्पदमामनन्ति, तपांसि सर्वाणि च यद्वदन्ति ; यदिच्छन्तो ब्रह्मचर्यं चरन्ति, तत्ते पदं संग्रहेण [6]ब्रवीम्योम्[7] " इत्यारभ्य, [4]" सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् " इति हि[8] उक्तम् । एवं " सर्वे वेदा यत्पदमामनन्ति " इति सर्ववेदवेद्यवस्तुकथनोपक्रमेण[9] अनन्यपरं हि तत्प्रकरणम् ॥

[10]तथा [11]मैत्रावरुणीयोपनिषदि [12]च [5]" एवं[13] सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम " इति, ध्रुवत्व — अचलत्वादिविशिष्टतया वेदान्तोदितस्य वस्तुनो विष्णुसंज्ञत्वं विधीयते ॥

---

१. एवम् — एतन्न दृश्यते क्वचित् ।
२. इति नारायणानुवाक—पा०
३. नारायणानुवाकस्मृतिं कारयन्—पा०
४. श्रीरिति क्वचिन्न दृश्यते ।
५. अत्रेति क्वचिन्न दृश्यते ।
६. प्रवक्ष्ये—पा०
७. ओमिति क्वचिन्न दृश्यते । ब्रवीम्योमित्येतत्—पा०
८. हिर्न दृश्यते क्वचित् ।
९. कथनेनोपक्रमेण—पा०
१०. अथ—पा०
११. मैत्रायणीयोपनिषदि—पा०
१२. चकारः क्वचिन्न दृश्यते ।
१३. एतं सवितुः, तत्सवितुः—पा०

1, 2. आलवन्दारस्तोत्र ११ श्लो.
3. कठोपनिषत् २-१५.
4. कठोपनिषत् ३-९.
5. मैत्रायणीयोपनिषत् ।

अतः, [1]"प्राणम् मनसि सह करणैः" इत्यादिवाक्यं सर्वकारणं परमात्मनि [1]करणप्राणादि सर्वं[2] विकारजातम् उपसंहृत्य, तमेव परमात्मानं सर्वस्य ईशानं ध्यायीत इति, परब्रह्मभूतनारायणस्यैव ध्यानं विदधाति ॥

[2]"पतिं विश्वस्य", [3]"न तस्येशे कश्चन" इति तस्यैव सर्वेशानता प्रतिपादिता। अत एव [4]"सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुः आकाशमध्ये

---

अथ[3], पूर्वपक्षोदाहृतश्रुतीर्व्याचष्टे अतः इत्यादिना। अतः कारणवाक्यैः[4], श्रीपुरुषसूक्तेन, अनन्यार्थनारायणानुवाकादिभिश्च, नारायणस्य परमकारणत्वेन प्रतिपन्नत्वात्, ब्रह्मशिवयोः तत्सृज्यत्व – [5]तत्संहार्यत्वादिश्रवणाच्च इत्यर्थः। "प्राणम्" इत्यादिश्रुतेरर्थं संग्रहेणाह सर्वकारण इति। उपसंहृत्य। परमात्मनि विकारजातोपसंहारमनुसंधाय – इत्यर्थः। सर्वस्येशानं ध्यायीत इति। [5]"सर्वस्य वशी" इति [6]पूरकवाक्यान्वयप्रदर्शनम्। तदर्थमाह पर इति॥

ईशानत्वादिकं नारायणस्यैव मुख्यम् इति, ईशानादिशब्दाः तस्यैव वाचकाः इत्याह पतिम् इति। 'सर्वैश्वर्य' इत्यादिवाक्यस्यार्थं[7]माह अत इति। [6]"विश्वाक्षं[8] विश्वशम्भुवम्" इति नारायणवाचकत्वेन[9] शम्भुशब्दप्रयोगदर्शनात्, [7]"शम्भुः स्वयम्भूर्द्रुहिणः" इति अर्थान्तरविषयत्वेन[10] निघण्टुदर्शनाच्च इति भावः।

---

१. करणेति क्वचिन्न दृश्यते।
२. सर्वविकारजातम्—पा॰
३. अतः—पा॰
४. कारणवाक्ये—पा॰
५. संहार्यत्वादि—पा॰
६. सपूरक, संख्यापूरक—पा॰
७. वाक्यार्थम्—पा॰
८. विश्वाह्वयम्—पा॰
९. वाचित्वेन—पा॰
१०. विषयत्वे—पा॰

1. अथर्वशिखोपनिषत्।
2. तै. उ. ना. १३ १.
3. तै. उ. ना. २-९.
4. अथर्वशिखोपनिषत्।
5. बृ. उ. ६-४-२२.
6. तै. उ. ना. १३-१.
7. हलायुध, अभिधान रत्नमाला. १-७.

ध्येयः" इति नारायणस्यैव[1] परमकारणस्य शम्भुशब्दवाच्यस्य ध्यानं विधीयते; [1]"कश्च ध्येयः" इत्यारभ्य [2]"कारणं तु ध्येयः" इति कार्यस्य अध्येयतापूर्वकं[2] कारणैकध्येयतापरत्वात् वाक्यस्य ॥

**तस्यैव नारायणस्य परमकारणता, शम्भुशब्दवाच्यता च परमकारणप्रतिपादनैकपरे नारायणानुवाक एव प्रतिपन्ना इति, तद्विरोधि—अर्था-**

---

"शम्भुराकाशमध्ये ध्येयः" इति वाक्ये कारणत्वमपि विधेयं स्यात् इत्यत्राह **कश्च** इति । कारणत्वानुवादेन ध्येयताविधिपरमिदं वाक्यं प्रतीयते, "कश्च ध्येयः, कारणं तु ध्येयः" इति प्रश्नप्रतिवचनाभ्याम् । न हि 'किं कारणम्' [3]इत्यस्य प्रश्नस्य, 'इदं कारणम्' इति [4]प्रतिवचनं श्रूयते । तस्मात् कारणत्वानुवादेन ध्येयत्वं विधीयत इति निश्चीयते । कारणत्वानुवादश्च तत्प्रतिपादकवाक्यान्तरसापेक्षः । अतः, "तदानुगुण्येन अनुवादः कर्तव्यः" इत्यनुवादरूपत्वात् [5]नारायणस्यैव ध्येयत्वविधिः इत्यर्थः ।

अनुवादरूपत्वमस्तु, तथाऽपि शिव [6]एव कारणत्वेन अनूद्यतामित्यत्राह **तस्यैव** इति । **परमकारणता शम्भुशब्दवाच्यता च** इति । अयमभिप्रायः :— अनुवादरूपत्वेन वाक्यान्तरसापेक्षत्वात् तद्विरुद्धार्थप्रतिपादनायोगात्, नारायणस्यैव ध्येयत्वविधिः । कारणत्वं विधीयतां नाम, तथाऽपि [7]सद्ब्रह्मात्मादिशब्दवत् शम्भुशब्दस्य सामान्यशब्दत्वात् नारायण एव पर्यवसानं न्याय्यम् इति, शिवादिशब्दानां नारायणशब्दापेक्षया साधारणत्वात् । बह्वीषूपनिषत्सु नारायणादिशब्द-

---

१. एवकारः क्वचिन्न दृश्यते ।
२. पूर्वककारणस्य ध्येयता—पा०
३. इति प्रश्नस्य, इत्यत्र प्रश्नस्य—पा०
४. वचनम्—पा०
५. कारणस्यैव—पा०
६. शिव एक एव—पा०
७. सद्ब्रह्मादिशब्दवत्—पा०

1, 2. अथर्वशिखोपनिषत् ।

न्तरपरिकल्पनं[1] कारणस्यैव ध्येयत्वविधिवाक्ये[2] न युज्यते ॥

यदपि [1]"ततो यदुत्तरतरम्" इत्यत्र पुरुषादन्यस्य [3]परतरत्वं प्रतीयते—इत्यभ्यधायि; तदपि, [2]"यस्मात्परन्नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" यस्मात् अपरम्—यस्मात् अन्यत्, किञ्चिदपि[4] परं नास्ति; केनापि प्रकारेण पुरुषव्यतिरिक्तस्य परत्वं

निर्देशात्, तत्राप्येकैकत्र नारायणशब्दाभ्यासाच्च, तदानुगुण्येन अर्थो वर्णनीयः इति च अत्रानुसन्धेयम् ॥

"ततो यदुत्तरतरम्" इत्यादिश्रुतेरर्थमाह यदपि इत्यादिना। तदपि प्रत्युक्तमित्यन्वयः। "ततो यदुत्तरतरम्" इत्यादिवाक्यात् पूर्वं "यस्मात्परम्" इत्यादिवाक्यम्[5]; तस्य अर्थं वक्तुमन्वयमाह यस्मादपरम् इति। यस्मात् इत्यादि-पञ्चम्यन्तपदेन परशब्दस्यान्वये सति, समनिषेधो न कृतः स्यात्; अपरशब्देन पञ्चम्यन्तपदस्यान्वये सति, समाभ्यधिकोभयनिषेधः कृतः स्यात्। तथा सति [3]"नान्यः पन्थाः" इति पुरुषवेदनस्यैव मोक्षोपायत्वप्रतिज्ञानस्य प्राकरणिकस्यापि[7] आनुगुण्यम्; पञ्चम्यन्तपदस्य अन्यशब्देनान्वयश्च श्रुतिस्मृतिषु दृश्यते इति, [4]"नेत्येतस्मादन्यत् परमस्ति", [5]"तस्माद्धान्यं न परम् किञ्चनास", "एकस्समस्तं यदिहास्ति किञ्चित् तदच्युतो[8] नास्ति परं ततोऽन्यत्" इत्यादिषु; [6]"न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्यैकार्थ्यञ्च। "यस्मात्परम्" इत्यन्वयेऽपि पुरुषादन्यस्य परत्ववादोऽनुपपन्न एव ॥

१. अर्थान्तरप्रतिपादनपरत्वम्, अर्थान्तरकल्पनम्—पा०
२. ध्येयत्वेन विधिपरवाक्ये, ध्येयत्वविधिपरवाक्ये—पा०
३. परत्वम्—पा०
४. अपि: क्वचिन्न दृश्यते।
५. इति वाक्यात्पूर्वम्—पा०
६. इत्यादिवाक्यान्तरस्यार्थं वक्तुम्—पा०
७. अपि: कुत्रचिन्न।
८. तदन्यतो—पा०

1. श्वे. उ. ३-१०.
2. श्वे. उ. ३-९.
3. पुरुषसूक्तम्।
4. बृ. उ. २ ३-६.
5. २ अष्ट. ८ प्र. ९ अनु.
6. श्वे. उ. ६ ८.

नास्ति — इत्यर्थः ; अणीयस्त्वम् — सूक्ष्मत्वम्, ज्यायस्त्वम् — सर्वेश्वरत्वम्; सर्वव्यापित्वात्, सर्वेश्वरत्वात् [1]अस्य, एतद्व्यतिरिक्तस्य [2]कस्यापि अणीयस्त्वम्, [3]ज्यायस्त्वं च नास्ति इत्यर्थः ; [1]"यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति पुरुषादन्यस्य कस्यापि ज्यायस्त्वं निषिद्धम् इति, तस्मादन्यस्य परत्वं न युज्यते इति प्रत्युक्तम् ॥

---

कैश्चिदेवं व्याख्यातम् :— "परमिति उत्कृष्टनिषेधः, अपरमिति समनिषेधः" इति । तदयुक्तम्; अन्यपर्यायस्य अपरशब्दस्य समवाचित्वासंभारस्यात्[4], समानविभक्त्यन्तपदयोः स्वतःप्राप्तसामानाधिकरण्यभङ्गात्, [5]व्यधिकरणत्वसूचकशब्दाद्यभावाच्च । तस्मात् यथोक्त एव अर्थः ॥

[2]"यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इत्येतद्व्याचष्टे अणीयस्त्वम् इति । [6]ज्यायस्त्वम् इति । ज्यायस्त्वम् — धारकत्वम्[7], नियन्तृत्वादिगुणैः उत्कृष्टत्वम् । अत्र च नियन्तृत्वेन ज्यायस्त्वं विवक्षितम्, [3]"प्रशासितारं सर्वेषाम् अणीयांसमणीयसाम्" इत्यादिवचनानुसारात् । [4]"यस्मात्परं नापरम्" [8]इत्यादिवाक्ये पुरुषादन्यस्य परत्वनिषेधात्, तद्विरुद्धं तदन्यस्य अधिकत्वप्रतिपादनपरत्वं व्याहतम् — इत्यर्थः ॥

---

१. अस्यैव—पा०

२. कस्यचित्—पा०

३. ज्यायस्त्वञ्च — एतन्न दृश्यते क्वचित् ।

४. समवाचित्वाभावात्—पा०

५. व्यधिकरणत्वसू 'च' कचशब्दाद्यभावात्—पा०

६. ज्यायस्त्वमिति — एतन्न दृश्यते क्वचित् ।

७. धारकत्वनियन्तृत्वादि—पा०

८. इति वाक्ये—पा०

1, 2. तै. उ. ना. १२-३; श्वे. उ. ३-९.

3. मनुस्मृ. १२-१२२.

4. तै. उ. ना. १२-३; श्वे. उ. ३-९.

कस्तर्हि अस्य वाक्यस्य अर्थः? अस्य प्रकरणस्योपक्रमे [1]"तमेवं विदित्वातिमृत्युमेति – नान्यः पन्था विद्यतेऽयनाय" इति पुरुषवेदनस्य [1]अमृतत्वहेतुताम्, तद्व्यतिरिक्तस्य [2]अपथतां च प्रतिज्ञाय, [2]"यस्मात्परं नापरमस्ति किञ्चित्[3]...तेनेदं पूर्णं पुरुषेण सर्वम्" इत्येतदन्तेन[4] पुरुषस्य सर्वस्मात् परत्वं प्रतिपादितम्। यतः पुरुषतत्त्वमेव उत्तरतरं, [3]"ततो यदुत्तरतरम्" पुरुषतत्त्वम्, तदेव अरूपम्, अनामयम्, [4]"य एतद्विदुरमृतास्ते भवन्ति। अथेतरे दुःखमेवापियन्ति" इति[5] पुरुषवेदनस्य अमृ-

---

"यस्मात्परम्" इत्यादिवाक्ये परत्वनिषेधः वक्ष्यमाण[6]परव्यतिरिक्तविषयः, [5]"गोबलीवर्दन्यायात्" इति शङ्कायाम् — अनन्यथासिद्धस्यैव संकोचकत्वात्, [6]"ततो यदुत्तरतरम्" इति वाक्यस्य च अन्यथासिद्धत्वात्, "यस्मात्परम्" इति वाक्ये परशब्दो न [7]संकोचयितव्यः इति सिद्धान्तिनो मतमभिप्रेत्य, अस्य वाक्यस्य [8]अन्यथानिर्वाहः कथमित्याह कस्तर्हि इति। अस्य अर्थं वक्तुं प्रकरणं योजयति अस्य इति। उक्तप्रकरणवाक्यानुगुण्येन "ततो यदुत्तरतरम्" इति वाक्यस्य अर्थमाह यतः इति। अरूपम्। कर्मकृतप्रकृतिसम्बन्धरहितम् इत्यर्थः[9]। अनामयम्। तत्कृत[10] दुःखादिसम्बन्धरहितमित्यर्थः। "ततः" इति पञ्चम्यन्तपदम्,

---

१. अमृतत्वे हेतुताम्—पा०
२. अहेतुताम्—पा०
३. किञ्चिदिति तेनेदम्—पा०
४. इत्यन्तेन—पा०
५. इतिः क्वचिन्न दृश्यते।
६. परत्वव्यतिरिक्त—पा०
७. संकोचितव्यः—पा०
८. अन्यथासिद्धनिर्वाहः—पा०
९. इत्यर्थः इति क्वचिन्न दृश्यते।
१०. सुखदुःखादिसम्बन्ध—पा०

1. श्वे. उ. ६-१५.
2. श्वे. उ. ३-९.
3,4. श्वे. उ. ३-१०.
5. लौकिकन्यायः।
6. श्वे. उ. ३-१०.

तत्त्वहेतुत्वम्, तदितरस्य च[1] अपथत्वं[2] प्रतिज्ञातं, सहेतुकमुपसंहृतम्[3]। अन्यथा [4]उपक्रमगतप्रतिज्ञाभ्यां विरुध्यते ।

---

हेत्वर्थपरत्वेन[5] योजितम् । अन्यथा दूषणमाह अन्यथा इति । उपक्रमगत–प्रतिज्ञाभ्याम् । पुरुषवेदनस्य मुक्तिहेतुत्वप्रतिज्ञया, तदन्यस्य अनुपायत्वप्रतिज्ञया च इत्यर्थः ॥

हेत्वर्थत्वाभावेऽपि न पुरुषादन्यत्वसिद्धिः[6] । "[7]प्रथमानिर्दिष्टस्य[8] शब्दप्राधान्यं वैयाकरणन्यायसिद्धम्" इति, [1]"पुरुषेण सर्वम्" इति सर्व-शब्दार्थस्य जगतः, प्रथमानिर्दिष्टत्वात्, अव्यवहितत्वाच्च, तच्छब्दस्य तत्परामर्शित्व-स्यैव युक्तत्वात्[9], "ततः" इति पदेन [2]"तेनेदं पूर्णं पुरुषेण सर्वम्" इति प्रथमानिर्दिष्टं जगत् [10]गृह्यते इति, जगत उत्तरः [11]परः पुरुष एव अभिधीयते इति केचिदाचार्याः ; तच्च उपपन्नम् । एवम्, उपक्रमगतप्रतिज्ञानुरोधेन [3]"यस्मात्परम्" इत्यादिवाक्यकृत–अधिकनिषेधानुरोधेन [12]च [4]"ततो यदुत्तरतरम्" [13]इत्यादिवाक्यं पुरुषस्यैव परत्वपरम् उक्तम् ॥

---

१. चकारः क्वचिन्न ।
२. चानुपायत्वम्—पा०
३. उदाहृतम्—पा०
४. उपक्रमप्रतिज्ञाभ्याम्—पा०
५. हेत्वर्थत्वेन—पा०
६. अन्यस्य परत्वसिद्धिः—पा०
७. प्रथमानिर्दिष्टस्य—पा०
८. निर्दिष्टशब्दस्य प्राधान्यम्—पा०
९. तत्परामर्शित्वात्—पा०
१०. गृहीतमिति—पा०
११. परमपुरुष एव—पा०
१२. चकारः क्वचिन्न ।
१३. इति वाक्यम्—पा०

1, 2, 3, 4. तै. उ. ना. १२-३; श्वे. उ. ३-९.

पुरुषस्यैव शुद्धिगुणयोगेन शिवशब्दाभिधेयत्वम् [1]"शाश्वतं शिव-मच्युतम्" इत्यादिना ज्ञातमेव । पुरुष एव शिवशब्दाभिहितः[1] [2] इति अनन्तरमेव[3] वदति :- [2]"महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति ॥

उक्तेनैव न्यायेन [3]"न सन्न चासच्छिव एव केवलः" इत्यादि सर्वं नेयम् ॥

---

[4]"सर्वाननशिरोग्रीवः" [4]इत्यादिवाक्यावगतस्य शिवशब्दस्य अर्थमाह पुरुषस्यैव इति । आदिशब्देन [5]"सर्वश्शर्वश्शिवः स्थाणुः", [6]"शिवं कर्मास्तु" [5]इत्यादिप्रयोगो विवक्षितः । सर्वाननशिरोग्रीवत्वं च [7]"सहस्रशीर्षा पुरुषः" इत्यस्य प्रत्यभिज्ञापकम्; भगवच्छब्दस्तु[6] पुरुषज्ञापकः इत्यनुसन्धेयम् । उत्तरत्रापि पुरुषप्रतिपादनात् शिवशब्दः पुरुषपरः इत्याह पुरुषः इति । "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्यत्र 'एषः' इति पदेन शिवशब्दाभिहितः प्रत्यभि-ज्ञापितः । एवम्, कारणवाक्यबलात्, उपास्यविशेषनिर्णयपरनारायणानुवाकेन च नारायणस्यैव [7]परत्वम् उक्तम् ॥

एवम्, [8]देवतान्तरस्यापि परत्वे "न सन्न चास[9]च्छिव एव केवलः" इति कारणवाक्यम्, "यः परस्स महेश्वरः" इत्युपास्यविशेषनिर्णयपरवाक्यं च अस्ति इत्यत्राह उक्तेनैव[10] इति । उक्तेनैव न्यायेन, कारणवाक्यैः नारायणस्यैव परमकारणत्वप्रतिपादनात्, अनन्यपरनारायणानुवाकादिभिः, तस्यैव सर्वस्मात् परत्व-

---

१. अभिधेयः—पा०
२. इत्यत्रानन्तरम्—पा०
३. एव च—पा०
४. इति वाक्यावगतस्य—पा०
५. इति प्रयोगः—पा०
६. तुः क्वचिन्न दृश्यते ।
७. पुरुषत्वम्—पा०
८. वेदवेदान्तान्तरे "न स ..." —पा०
९. सदिति वाक्यम्, सदिति कारण-वाक्यम्—पा०
१०. उक्तेनैव न्यायेनेति कारणत्वप्रतिपाद-नात्—पा०

1. तै. उ. ना. १३-१.
2. श्वे. उ. ३-१२.
3. श्वे. उ. ४-१८.
4. श्वे. उ. ३-११.
5. सहस्रनामे १८.
6. पुण्याहप्र.
7. पुरुषसूक्तम् १.

**किञ्च**, [1] "न तस्येशे कश्चन" इति निरस्तसमाभ्यधिकसम्भावनस्य पुरुषस्य [2] "अणोरणीयान्" [1]इत्यस्मिन्ननुवाके, वेद—आद्यन्तरूपतया, वेद-बीजभूतप्रणवस्य, [2]प्रकृतिभूत—अकारवाच्यतया महेश्वरत्वं प्रतिपाद्य, दहर-

---

निश्चयात्, ब्रह्मरुद्रादीनाम् तत्सृज्यत्व—संहार्यत्वश्रवणाच्च, अर्थान्तरेषु दृष्टप्रयोगानां शिव—महेश्वरादिशब्दानां साधारणत्वात्, तेषां नारायणपरत्वेन प्रयोगदर्शनात्, बह्वीषु[3] उपनिषत्सु नारायणादिशब्दनिर्देशात्, एकैकत्र[4] उपनिषदि नारायणादिशब्दा-भ्यासाच्च, शिवादिशब्दोऽपि, सद्—ब्रह्मादिशब्दवत्[5], नारायणपर्यवसायी—इत्यर्थः ॥

तत्र [3] "यद्वेदादौ स्वरः" इत्यादिवाक्यस्य, न केवलं प्रकरणान्तरवाक्यैः नारायणपरत्वनिश्चयः ; अपि तु, तस्यैव पूर्वापरपर्यालोचनया च नारायणपरत्वं गम्यते इत्याह **किञ्च** इति । अस्य वाक्यस्य पुरुषादन्यस्य उत्कर्षपरत्वम् प्रथमानु-वाकोक्तपुरुषव्यतिरिक्तपरत्वनिषेधव्याहतम् इति दर्शयितुं "न तस्येशे" इत्या-द्युक्तम् । "यद्वेदादौ" इत्यस्य अर्थमाह **वेदाद्यन्त** इति वेदस्य प्रणवः, उत्पाद-कत्वात् आदिः, तल्लयस्थानत्वात् अन्तश्च—इत्यभिप्रायेण 'वेदाद्यन्तरूपतया' इत्युक्तम् । अत एव वेदबीजभूतः प्रणवः । [4] "तस्य प्रकृतिलीनस्य" इति पदं व्याचष्टे **प्रकृति-भूताकारवाच्यतया** इति । प्रकृतिलीनत्वं नाम—प्रकृतिभूत—अकारावस्थत्वम्, अकारावस्थप्रणववाच्यत्वं नाम – अक्षरवाच्यत्वमेव इत्यर्थः । "अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः", [6] "अकारो विष्णुवाचकः" इति श्रुति—स्मृतिवचनात्, अकारवाच्यस्य[6] नारायणस्यैव महेश्वरत्वम् उक्तमित्यर्थः । **दहर** इति । [5] "यद्वेदादौ" [7]इति वाक्ये देवतान्तरस्य परत्वकथनात्, तदेव दहरपुण्डरीकान्तरुपास्यम् इति चेत्[8],

---

१. इत्यनुवाके—पा०
२. प्रकृतिबीजभूताकार—पा०
३. बहुषु—पा०
४. एकत्रैव—पा०
५. ब्रह्मशब्दादिवत्—पा०
६. अकारवाच्यनारायणस्यैव—पा०
७. इत्यादिवाक्ये—पा०
८. इति चेन्न—पा०

1. तै. उ. ना. २-१०.
2. कठ. उ. २-२०.
3, 4. तै. उ. ना. १२-३.
5. तै. उ. ना. १२-३.

[1] पुण्डरीकमध्यस्थाकाशवर्तितया[2] उपास्यत्वमुक्तम् ॥

अयमर्थः:— 'सर्वस्य वेदजातस्य प्रकृतिः प्रणव[3] उक्तः। प्रणवस्य [4]च प्रकृतिः अकारः। प्रणवविकारो वेदः, स्वप्रकृतिभूते प्रणवे लीनः। प्रणवोऽपि[5] अकारविकारभूतः, स्वप्रकृतौ अकारे लीनः। तस्य[6] प्रणवप्रकृतिभूतस्य[7] अकारस्य यः परः—वाच्यः, स[8] एव महेश्वरः' इति। सर्ववाचक[9]जातप्रकृतिभूत--अकारवाच्यः, सर्ववाच्यजातप्रकृतिभूत[10]नारायणो यः, सः महेश्वरः — इत्यर्थः ॥

---

तत्रापि नारायणस्यैव महेश्वरत्वप्रतिपादनात्, स एव दहरपुण्डरीकेऽपि उपास्यः इत्यर्थः ॥

अस्मिन् वाक्ये प्रणववेदयोः, अकारप्रणवयोश्च प्रकृतिविकृतिभावः कथमवगतः? अकारप्रसङ्गश्च कः? तद्वाच्यत्वपरः शब्दः कः? इत्यपेक्षायामाह **अयमर्थः** इति। [1]"यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः" इत्यनेनैव प्रकृतिविकृतिभावः सिद्धः; [2]"प्रकृतिलीनस्य" इत्यनेन अकारश्च अवगतः; "यः परः" इति परशब्देन वाच्यत्वं च अवगतम्; "इदं परस्तात् परः" इत्यादिषु परशब्दस्य वाच्यतार्थत्वात् इत्यर्थः। तर्हि 'अकारस्य परः' इति वक्तव्यम्; "प्रकृतिलीनस्य" इति वचनव्यक्तेः कोऽभिप्रायः? अकारवाच्यस्यैव[11] महेश्वरत्वे, कथं नारायणस्य परत्वसिद्धिः? इत्यत्राह **सर्ववाचक** इति। वाच्यजातप्रकृतिभूतः,

---

१. पुण्डरीकाकाश—पा०
२. आकाशान्तर्वर्तितया—पा०
३. उक्तः – क्वचिदेतन्न दृश्यते।
४. चः कुत्रचिन्न।
५. अपिः क्वचित् नोपलभ्यते।
६. तस्य च—पा०
७. भूताकारस्य—पा०
८. एवकारः क्वचिन्न दृश्यते।
९. वाचकशब्दजात—पा०
१०. भूतो नारायणः—पा०
११. एवकारः कुत्रचिन्न लभ्यते।

1, 2. तै. उ. ना. १२-३.

यथोक्तं भगवता[1] :—

[1]"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्[2] किञ्चिदस्ति धनञ्जय ! ॥"

[2]"अक्षराणामकारोऽस्मि" [3]इति ।

[3]"अ इति ब्रह्म" इति [4]च श्रुतेः । [1]"अकारो वै सर्वा वाक्" इति [5]च वाचकजातस्य अकारप्रकृतित्वम्, वाच्यजातस्य ब्रह्मप्रकृतित्वं च सुस्पष्टम् ।

---

वाचकजातप्रकृतिभूतेन वाच्यः इति ज्ञापनं [4]"प्रकृतिलीनस्य" इति वचनव्यक्तेः प्रयोजनम् । वाच्यजातप्रकृतिभूतस्य नारायणत्वं[6] वाक्यान्तरावगतम् इति भावः ॥

भगवतो [7]वाच्यजातप्रकृतित्वे, अकारस्य[8] वाचकजातप्रकृतित्वे च भगवद्-वचनमाह यथोक्तम् इति । "अक्षराणामकारोऽस्मि" इत्यनेन वाच्यवाचकभाव-संबन्धश्च लब्धः । [9]अकारवाच्यत्वे श्रुतिमाह अ इति ब्रह्म[10] इति । अकारस्य वाचकजातप्रकृतित्वेऽपि श्रुतिमाह अकारो वै इति । वाचकजातस्य अकार-प्रकृतित्वम् इति । ज्ञायते इत्यर्थः । ब्रह्मणो वाच्यजातप्रकृतित्वं श्रुतिसिद्धमित्याह वाच्य इति ॥

---

१. भगवता — नैतद्दृश्यते क्वचित् ।
२. नास्ति किञ्चित्—पा०
३. इतिः क्वचिन्नोपलभ्यते ।
४, ५. चकारः क्वचिन्न ।
६. नारायणस्य परत्वम्—पा०
७. नारायणस्य वाचकजात—पा०
८. अकारस्य च—पा०
९. नारायणस्य अकारवाच्यत्वे—पा०
१०. ब्रह्मेतीति—पा०

1. गीता ७-६.
2. गीता १०-३३.
3. ऋगारण्यके (बह्वृचोपनिषदि) २-२;
4. तै. उ. ना. १२-२.

अतः "ब्रह्मणः अकारवाच्यतनाप्रतिपादनात्, अकारवाच्यो नारायण एव महेश्वरः" इति सिद्धम्। तस्यैव [1] "सहस्रशीर्षं देवम्" इति [1]केवल-परतत्त्वविशेषप्रतिपादनपरेण नारायणानुवाकेन सर्वस्मात् परत्वं प्रपञ्चितम्। अनेन अनन्यपरेण प्रतिपादितमेव परतत्त्वम्[2], "अन्यपरेषु सर्वेषु[3] वाक्येषु केनापि[4] शब्देन प्रतीयमानं तदेवेति अवगम्यते" इति, [2] "शास्त्र-दृष्ट्या तूपदेशो वामदेववत्" इति सूत्रकारेण निर्णीतम्॥

तदेतत् परं ब्रह्म, क्वचित् [5]ब्रह्मशिवादिशब्दावगत[6]मिति केवलब्रह्म – शिवयोः न परत्वप्रसंगः[7]; [8]अस्मिन् अनन्यपरेऽनुवाके

[9]उक्तं निगमयति **अतः** इति। एवम्, महेश्वरशब्दस्य साधारणत्वात्, [10]प्रकरणपर्यालोचनया [11]च नारायणपरत्वमुक्तम्। नारायणस्यैव [12]तत्तच्छब्द-वाच्यस्य परत्वम् उत्तरानुवाके कण्ठोक्तमपि इत्याह **तस्यैव** इति। [3] "विश्वाधिको रुद्रो महर्षिः", [4] "प्रजापतिः प्रजा असृजत" इत्यादिषु अनेकेष्वपि वाक्येषु, शिवादेः कारणत्वमाशङ्क्याह **अनेन** इति। "विश्वाधिको रुद्रः" इत्यादिवाक्यान्यपि अन्यपरत्वात् उक्तार्थानुगुणत्वेन वर्णनीयानि इत्यर्थः॥

केनापि शब्देन प्रतीयमानं तदेवास्तु ततः किम्? इत्यत्राह **तदेतत्** इति।

१. केवलतत्त्व, केवलपरत्व—पा०
२. परत्वम्—पा०
३. सर्ववाक्येषु—पा०
४. अपिर्न दृश्यते क्वचित्।
५. ब्रह्मशिवशब्द—पा०
६. शब्दादवगतम्—पा०
७. परतत्त्वप्रसंगः, परत्वप्रसक्तिः—पा०
८. तस्मिन्—पा०
९. उक्तमर्थम्—पा०
१०. तत्प्रकरण—पा०
११. चकारः क्वचिन्न।
१२. तच्छब्द—पा०

1. तै. उ. ना. १३-१.
2. ब्र. सू. १-१-३१.
3. तै. उ. ना. १२-३.
4. २ का. १ प्र. २.

तयोरिन्द्रादितुल्यतया तद्विभूतित्वप्रतिपादनात्; क्वचित्, आकाशप्राणादि-शब्देन[1] परं ब्रह्माभिहितम् इति भूताकाशप्राणादेः[2] यथा न परत्वम् ॥

इन्द्रादितुल्यतया इति । आदिशब्देन विश्वमुक्तात्मविवक्षा[3] । प्रसिद्धब्रह्मशिवयोः परत्वाभावे दृष्टान्तमाह क्वचित् इति ॥

"विश्वाधिको रुद्रः" इत्यस्यायमर्थः :—अत्र[4] । "स नो देवः शुभया स्मृत्या संयुनक्तु" इति स्वाभिगतप्रार्थनातात्पर्यात्, हिरण्यगर्भं प्रति कारणत्वमनूद्यत एव[5]; अनुवादस्य च वाक्यान्तरसापेक्षस्य तदानुगुण्येन वर्णनीयत्वात्, केनचिद्गुणयोगेन रुद्रशब्दो नारायणपरः; चतुर्मुखकारणत्वं च तस्यैवेति स्पष्टम् । [6]पश्यत — अपश्यत् । "स्वस्मात् जायमानम्" इति अध्याहारः ॥

एवं वा योजना :—रुद्रशब्दः प्रसिद्धरुद्रपर एव; स च[7], "महर्षिः" त्रिकालज्ञानवत्तया सर्वोत्कृष्टः; [8]सः—स्वकारणभूतं हिरण्यगर्भमपि, कालत्रयज्ञानवत्त्वात् जायमानावस्थमपश्यत्; य एवमपश्यत्, सः, शुभया स्मृत्या—भगवत्स्मरणेन, मां[9] संयुनक्तु इत्यर्थः । [2]"ईश्वरात् ज्ञानमन्विच्छेत्", [3]"उपास्योऽहं सदा विप्राः, उपायोऽस्मि[10] हरेः स्मृतौ", [4]"शङ्करस्य तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन विष्णुभक्तः[11] स जायते" इत्यादिभिः रुद्रस्य भगवद्ज्ञानप्रदत्वप्रतिपादनात् ॥

---

१. प्राणशब्देन—पा०
२. प्राणादेस्तत्त्वविशेषस्य यथा, प्राणादेर्न यथा—पा०
३. विवक्षाऽस्ति—पा०
४. अत्रेति क्वचिन्न ।
५. एवमनुवादस्य—पा०
६. दृश्यते—पा०
७. 'स च'—क्वचिन्न दृश्यते ।
८. 'सः'—क्वचिदेतन्न दृश्यते ।
९. नः—पा०
१०. अस्मिन् हरौ स्मृतः—पा०
११. भक्तिः प्रजायते, भक्तः प्रजायते—पा०

1. तै. उ. ना. १२-३.
2. ब्रह्माण्डपुराणम् ।
3. हरिवंशम्—कै. २८०-१४.
4. ब्रह्माण्डपुराणम् ।

यत्पुनरिदमाशङ्कितम्:—[1] "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्" इत्यत्र आकाशशब्देन जगदुपादानकारणं प्रतिपाद्य, तदन्तर्वर्तिनः कस्यचित् तत्त्वविशेषस्य[1] अन्वेष्टव्यता प्रतिपाद्यते; अस्य आकाशस्य नामरूपयोः [2]निर्वहितृत्वश्रवणात्[3], पुरे पुरे पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्च, आकाशपर्यायभूतात् पुरुषात् अन्यस्य[4] अन्वेष्टव्यतया उपास्यत्वं[5] प्रतीयते[6] " इति ॥

---

हिरण्यगर्भकारणत्ववादिनः[7] प्रष्टव्याः; "किम् अण्डान्तर्वर्तिनी सृष्टिः [2] "प्रजापतिः प्रजा असृजत" इत्युच्यते? उत, परमकारणत्वमुच्यते" [8]इति। प्रथमः कल्पोऽभ्युपेतः[9]; द्वितीयस्तु प्रजापत्यादिशब्दानां साधारणत्वात्, अन्यत्र च[10] चतुर्मुखादेः [11]सृज्यत्वादिश्रवणाच्च, बहुप्रकरणवाक्याविरोधेन नेय इति प्रत्युक्त इति ॥

अथ व्योमातीतवादं हृदि निधाय, तं[12] समूलमुन्मूलयितुं तत्परिपाटीमुपन्यस्यति यत्पुनः इति। आकाशान्तर्वर्तिनः कस्यचिदन्वेष्टव्यता स्यात्; ततः किम्? इत्यत्राह अस्य इति ॥

---

१. तत्त्वविशेषस्येति न दृश्यते क्वचित्। तत्त्वस्य—पा॰
२. निर्वोढृत्वश्रवणात्—पा॰
३. प्रतिपादनात्—पा॰
४. पुरुषस्यान्यत्र—पा॰
५. उपास्यत्वं च—पा॰
६. प्रतिपाद्यते—पा॰
७. कारणवादिनः—पा॰
८. इतिर्न दृश्यते क्वचित्।
९. अभिप्रेतः—पा॰
१०. चः न दृश्यते क्वचित्।
११. सृज्यत्वश्रवणाच्च—पा॰
१२. 'तम्'—एतच्च दृश्यते क्वचित्।

1. छा. उ. ८-१-१.
2. २ का. १ प्र. १.

अनधीतवेदान्तानाम्, अदृष्टशास्त्रविदाम्[1] इदं चोद्यम्। [2]यतः तत्र श्रुतिरेव अस्य परिहारमाह; वाक्यकारश्च।

[1] "'दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यम् यद्वाव विजिज्ञासितव्यम्" इति—चोदिते, [2]"यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः" इत्यादिना, अस्य आकाशशब्दवाच्यस्य परमपुरुषस्य अनवधिकमहत्त्वम्, सकललोककारणतया सकलजगदाधारत्वं प्रतिपाद्य, [3]"तस्मिन् [3]कामाः समाहिताः" इति, अपहतपाप्मत्वादि, सत्यकामत्वादि[4]सत्यसङ्कल्पपर्यन्तगुणाष्टकं निहितमिति, परमपुरुषवत्, [5]परमपुरुषगुणाष्टकस्यापि [6]पृथग्विजिज्ञासितव्यता[7]प्रतिपादयिषया, [4]"तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्युक्तम्[8]" इति श्रुत्यैव सर्वं परिहृतम्॥

एतत् प्रतिक्षिपति अनधीत इति। अनधीतवेदानामदृष्टशास्त्रविदामिदं चोद्यम् इति। दहरविद्यायाः पूर्वापरवाक्य[9]मप्यनधीतम्, वाक्यकारग्रन्थादयश्च अदृष्टास्तैरिति भावः। कथमित्यत्राह यतः इति॥

कथं श्रुतिरेव परिहरतीत्यत्राह दहरोऽस्मिन् इति। अस्याकाशशब्दवाच्यस्य इति। वक्ष्यमाणगुणजातम्, आकाशान्तर्वर्तिस्वतन्त्रवस्त्वन्तरगतम्[10] इति शङ्काशमनाय। "यावान्वायमाकाशः, तावानेषोऽन्तर्हृदयआकाशः" इति वाक्यस्थ-आकाशशब्देन पूर्वोक्त आकाशशब्दः[11] स्मारितः। स्पष्टम्॥

१. अदृष्टशास्त्राणाम्—पा०
२. यतस्तत्रैवास्य श्रुतिरेव परिहारम्, यतस्तत्रैव श्रुतिरेवास्य परिहारम्—पा०
३. सर्वे समाहिताः—पा०
४. सत्यसङ्कल्पत्वादिगुणाष्टकम्, सत्यसङ्कल्पपर्यन्तगुणाष्टकम्—पा०
५. परमपुरुषनिहितस्य गुणाष्टकस्य—पा०
६. पृथग्जिज्ञासितव्यता—पा०
७. विजिज्ञासितव्यत्वप्रतिपिपादयिषया—पा०
८. 'उक्तम्' इति—एतन्न दृश्यते क्वचित्।
९. पूर्वापरमप्यनधीतम्—पा०
१०. वस्त्वन्तर्गतम्—पा०
११. आकाशः—पा०

1. छा. उ. ८-१-२.
2. छा. उ. ८-१-३.
3. छा. उ. ८-१-५.
4. छा. उ. ८-१-१.

एतदुक्तं भवति :—[1] "किं तदत्र विद्यते यदन्वेष्टव्यम्" [1]इत्यस्य चोद्यस्य—"[2] तस्मिन् [3]सर्वस्य जगतः स्रष्टृत्वम्, आधारत्वम्[4], [5]नियन्तृत्वम् [6]शेषित्वम्, अपहतपाप्मत्वादयो गुणाश्च विद्यन्ते" इति परिहारः—इति[7] ॥

तथा च वाक्यकारवचनम् :—[2] "[3]'तस्मिन् यदन्तः' इति कामव्यपदेशः" इति । काम्यन्ते इति कामाः, अपहतपाप्मत्वादयो गुणा इत्यर्थः ॥

एतदुक्तं भवति :—"यत्[8] एतत् दहराकाशशब्दाभिधेयम्[9], निखिलजगदुदयविभवलयलीलम्, परं ब्रह्म, तस्मिन् यत् अन्तर्निहितम्,

---

ननु 'किं तदत्र विद्यते' इति चोद्यानन्तरम्, [4] "उभे अस्मिन् द्यावापृथिवी[10] अन्तरेव समाहिते" इत्यादिना, द्यावापृथिवीविद्युन्नक्षत्रादीनाम् आकाशवर्तित्वं प्रतीयत इति, न गुणजातस्य प्रतीतिः इति शङ्कायामाह एतदुक्तं भवति इति । [11]उक्तद्युपृथिव्यादीनां स्रष्टृत्वधारकत्वादिगुणगणः, अपहतपाप्मत्वादिगुणगणश्च विवक्षित इत्यर्थः ॥

कथं वाक्यकारेण परिहृतमित्यत्राह तथा च इति । [5] "काम्यस्पृहासराः कामाः" इति निघण्टुः ।

गुणिव्यतिरेकेण कथं गुणानामुपास्यत्वमिति शङ्कायाम् आह एतदुक्तम् इति ।

---

१. इति चोद्यस्य—पा०
२. अस्मिन्—पा०
३. 'सर्वस्य जगतः'—क्वचिदेतन्न ।
४. सर्वजगदाधारत्वम्—पा०
५. सर्वनियन्तृत्वम्—पा०
६. सर्वशेषित्वम्—पा०
७. इतिः क्वचिन्न दृश्यते ।
८. तत्—पा०
९. आकाशपदवाच्यम्—पा०
१०. पृथिवीत्यादिना—पा०
११. उक्तेति न दृश्यते क्वचित् ।

1. छा. उ. ७-१-२.
2. बोधायनवृत्तिग्रन्थः ।
3. छा उ. ७-१-२.
4. छा. उ. ७-१-३.
5. वैजयन्ती. २१५-३४.

यः पुनः, कारणस्यैव ध्येयताप्रतिपादनपरे वाक्ये, विष्णोः अनन्यपरवाक्यप्रतिपादितपरतत्त्वभूतस्य कार्यमध्ये निवेशः; [1] सः

---

अथ [1] "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति, विष्णोः कार्यत्वश्रवणात् परत्ववैकल्यशङ्कां व्युदस्यति यः पुनः इति। कारणस्यैव[2] ध्येयताप्रतिपादनपरे वाक्ये इति। [2] "कश्च ध्येयः[3]? कारणं तु ध्येयः" इति कारणत्वानुवादेन ध्येयता[4]विध्यन्यपरत्वात् वाक्यान्तरसापेक्षोऽनुवादः[5] तदानुगुण्येन स्यादिति, अनन्यपरवाक्योक्तं नारायणस्यैव परत्वं स्थितम्। तस्य[6] स्वेच्छया लोकरक्षार्थमवतार इति श्रुतिस्मृतिषु उक्तम्[7]॥

तत्र [3] "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन" इति वचनात्, उत्पत्तिसद्भावः[8] ब्रह्मरुद्रादेः[9] भगवतश्च अभ्युपगम्यते। तत्र भगवज्जन्मनो हेतुः, प्रयोजनं च विलक्षणं [10]प्रमाणान्तरप्रतिपन्नमिति, तदविरोधेन अत्रापि प्रतिपाद्यमानं भगवतो जन्म, विलक्षणहेतुमत्, विलक्षणप्रयोजनवच्च अभ्युपेत्यम्[11]। अन्येषां जन्मनो हेतुफले [12]कर्म—तत्फलानुभवौ। तस्मात् रामादिवदवतार इत्यर्थः॥

---

१. स्वस्वकार्यभूत, सकार्यभूत—पा०
२. सर्वत्र टीकायामेवकारोऽत्र नास्ति।
३. ध्येय इति—पा०
४. विधिपरत्वम्—पा०
५. सापेक्षानुवादः—पा०
६. तस्यैव—पा०
७. उक्तः—पा०
८. उत्पत्तिसम्भवः—पा०
९. ब्रह्मादेः—पा०
१०. प्रमाणान्तरेण प्रतिपन्नम्—पा०
११. अभ्युपेतम्, अभ्युपगम्यम्—पा०
१२. तत्कर्मतत्फलानुभवौ—पा०

1, 2. अथर्वशिखोपनिषत्।
3. गीता. ४-५.

स्वकार्यभूत[1] तत्त्वसंख्यापूरणं कुर्वतः, स्वलीलया जगदुपकाराय स्वेच्छावतारः इत्यवगन्तव्यः[2]; यथा, लीलया देवसंख्यापूरणं कुर्वतः उपेन्द्रत्वं परस्यैव; यथा च, सूर्यवंशोद्भवराजसंख्यापूरणं कुर्वतः परस्यैव ब्रह्मणो दाशरथिरूपेण स्वेच्छावतारः। यथा च [3]सोमवंशसंख्यापूरणं कुर्वतो भगवतः [4]भूभारावतरणाय स्वेच्छया वसुदेवगृहेऽवतारः; सृष्टिप्रलयप्रकरणेषु नारायण एव परमकारणतया प्रतिपाद्यते[5] इति पूर्वमेवोक्तम् ॥

---

त्रिमूर्तिसंख्यान्तर्भावमात्रं न साम्ये प्रयोजकम्[6] इत्यभिप्रायेण 'संख्यापूरणं कुर्वतः' इति मुहुरुक्तम्। स्वलीलया जगदुपकाराय इति। हेतुप्रयोजनवैलक्षण्यमुक्तम्, न तु कर्मणा तत्फलानुभवाय[7] इत्यर्थः, [1]"जगतामुपकाराय न सा कर्म निमित्तजा" इति वचनात्। [8]मनुष्यादिषु [9]ह्यवतारः? कथं देवेषु इति शङ्काव्यावृत्त्यर्थमाह यथा लीलया इति। तर्हि देवेष्ववतारद्वयं कथ मित्यत्राह यथा च इति। "स्वसमानगणनागण्यत्वरूपोत्कर्षं परेषां ददाति" इत्यभिप्रायेण 'सोमवंशसंख्यापूरणम्', 'राजसंख्यापूरणम्' इत्युक्तम्। [10]तद्वत्, त्रिमूर्त्यन्तर्भावो न तत्साम्याय इत्यभिप्रायः[11]। परत्वे प्रामाणिके सति ह्येवं निर्वाहः? इत्यत्राह सृष्टि इति ॥

१. भूततत्संख्यापूरणम्—पा॰
२. अवगन्तव्यम्—पा॰
३. सोमवंशोद्भवसंख्यापूरणम्, सोमवंश-राजसंख्यापूरणम्—पा॰
४. भूभारनिवारणाय—पा॰
५. प्रतिपादित इति—पा॰
६. प्रयोजनम्—पा॰
७. तत्फलानुभावाय—पा॰
८. मनुष्येषु—पा॰
९. हिर्नास्ति क्वचित्।
१०. स च त्रिमूर्त्यन्तर्भावः—पा॰
११. इति भावः—पा॰

1. विष्णु. पु ६-७-७१.

**यत्पुनः अथर्वशिरसि रुद्रेण स्वसर्वैश्वर्यं प्रपञ्चितम्, तत्**

अथ अथर्वशिरो निर्वहति[1] यत्पुनः इति। [1]"देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन्, को भवानिति, सोऽब्रवीत्, अहमेकः प्रथममासं वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्तः इति, सोऽन्तरादन्तरं प्राविशत्, सोऽहं नित्यानित्यो ब्रह्माऽहं ब्रह्म" इत्यादि। "सोऽन्तरादन्तरं प्राविशत्" इत्यतः पूर्वं "सोऽब्रवीत्" इति प्रक्रम्य, रुद्रवचः; अस्य वाक्यस्य उपर्यपि "सोऽहम्" इत्यादिकं रुद्रवचः; अतः मध्ये[2] रुद्रवाक्यं[3] न समाप्तम्- इत्यभिप्रायेण 'प्रपञ्चितम्' इत्युक्तम्॥

अत्रेदं विचार्यते :— "सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं [4]प्राविशत" इतीदं[5] किं रुद्रवाक्यम्? उत केवलं श्रुतिवाक्यम्? पूर्वम् इतिकरणेन रुद्रवचसः[6] समाप्तत्वात्, इदं श्रुतिवाक्यमिति चेन्न। "सोऽहम्" इत्यादेरुपर्यपि रुद्रवाक्यस्य दर्शनात् इदमपि रुद्रवाक्यमेव; नोचेत् "सोऽब्रवीत्" इत्युत्तरत्र अध्याहारः स्यात्। न स[7] दोषः, इतिकरणावैयर्थ्यात्, अर्थवत्त्वात् इति चेन्न; न हि इतिकरणस्य समाप्ति[8]रेवार्थः, अपि तु हेतुः, प्रकारोऽपि अर्थः, [2]"इति—हेतुप्रकरणप्रकारादि-समाप्तिषु" इति निघण्टुदर्शनात्। तस्मात्, पदान्तरानध्याहारेणैव निर्वाहे सम्भवति, अध्याहारसापेक्ष—अर्थस्वीकारः अनुपपन्नः॥

तस्मात्, अयमर्थः—रुद्रेण "को भवान्" इति पृष्टेन प्रथमम् "अहमेकः प्रथममासं वर्तामि" इत्यादिना स्वस्य[9] सर्वात्मकत्वे उक्ते, परमात्मनो हि सर्वात्मकत्वम्? कथं तत् भवतः? इत्यपेक्षायाम्, इत्थमिति प्रकारार्थोऽयं इतिशब्दः, "सोऽन्तरादन्तरम्" इति वक्ष्यमाणप्रकारेण- इत्यर्थः॥

---

१. निर्वाह इति—पा०
२. मध्येऽपि—पा०
३. रुद्रवाक्यं प्राप्तम्—पा०
४. संप्राविशत्—पा०
५. इतीदं रुद्रवाक्यम्, इतीदं वाक्यं रुद्रवाक्यम्—पा०
६. रुद्रवचनस्य समाप्तत्वात्—पा०
७. स इति क्वचिन्न दृश्यते।
८. एवकारः क्वचिन्न दृश्यते।
९. स्वसर्वात्मकत्वे—पा०

1. अथर्वशिरोपनिषत्।
2. अम. ३ का. नानार्थाव्ययवर्गः. ७.

[1] "सोऽन्तरादन्तरं प्राविशत्" इति परमात्मप्रवेशादुक्तम् — इति

यद्वा, अत्र [1] 'इतिः' हेतौ, "सोऽन्तरादन्तरं प्राविशत्[2] दिशश्चान्तरं संप्राविशत्" इति [3]परमात्मानुप्रवेशात् सर्वात्मकत्वमित्यर्थः। इतिशब्दस्य हेतुपरत्वम् अभिप्रेत्य, परमात्मप्रवेशात्—इत्युक्तम् ॥

यद्यपि इतिशब्दस्य समाप्तिरेवार्थः, अर्थान्तरं न स्यात्, तथाऽपि, [2] "धर्मिकल्पनातो वरं धर्मकल्पना[4]" इति न्यायात्, प्रयुक्तस्य इतिशब्दस्य रुद्रवाक्यावसाने अन्वयकल्पनं न्याय्यम्, न[5] तु अप्रयुक्तपदान्तराध्याहार इति; तस्मात्, रुद्रवाक्यमेव इदम्। 'सः' इति परमात्मा उच्यते, बुद्धिस्थत्वात् परमात्मनः। "[6] सोऽन्तरादन्तरम्" — शरीरादन्तरस्य प्राणादेरपि अन्तरं जीवं "प्राविशत्", "दिशश्चान्तरम्"—दिक्—शब्देन समस्तजगद्वर्तिवस्तुजातं लक्ष्यते; सर्वपदार्थानाम् अन्तरं—जीवात्मवर्गं "प्राविशत्", सर्वसामानाधिकरण्यस्य वक्ष्यमाणत्वात्, तदुपपत्तये स्वस्य, सर्वजीवानां च परमात्मानुप्रवेश उक्तः। एवम्, रुद्रवाक्यत्वमेव युक्तम् ॥

यद्वा, श्रुतिवाक्यमस्तु; तदा अयमर्थः :—"सः—रुद्रः, अन्तरादन्तरम्—जीवादन्तरं[7], परमात्मानम्, प्राविशत् – बुद्ध्या अगाहत; अनुप्रवेशशब्दस्य सम्यग्बोधनार्थत्वं लोकोक्तिसिद्धम्[8]। तथा चाणक्यप्रयोगश्च :—

[3] "यस्य यस्य हि यो भावः, तेन तेन तदन्तरम्।
अनुप्रविश्य मेधावी, क्षिप्रमात्मवशं नयेत् ॥" इति ॥

सः रुद्रः, स्वान्तर्यामिणं सर्वपदार्थान्तर्यामिणं च परमात्मानं तच्छरीरकं बुद्ध्या अनुसंहितवान्—इत्यर्थः ॥

१. अत्रेति क्वचिन्न दृश्यते।
२. प्राविशदिति परमात्मानुप्रवेशात्—पा०
३. परमात्मनः अनुप्रवेशात्—पा०
४. कल्पनमिति न्यायात्—पा०
५. नाप्रयुक्त—पा०
६. 'सः'—एतन्नास्ति क्वचित्।
७. जीवान्तरम्—पा०
८. लोकसिद्धम्, रायुक्तिसिद्धम्—पा०

1. अथर्वशिरोपनिषत्।
2. मीमांसान्यायः।
3. चाणक्यनीतिशास्त्रम्।

श्रुत्यैव व्यक्तम् ॥

[1]"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति [1]सूत्रकारेण एव-मादीनाम् अर्थः प्रतिपादितः ॥

यथोक्तं प्रह्लादेनापि:—

[2]"सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ॥" इत्यादि ॥

---

एवम्, निर्वाहद्वयमभिप्रेत्य, 'परमात्मप्रवेशात्' इत्युक्तम् । 'परमात्मनः प्रवेशात्' इति षष्ठीसमासः । परमात्मकर्तृकप्रवेशात्, परमात्मकर्मकप्रवेशाच्चेति भावः ॥

श्रुत्यैव इति । प्रतर्दनविद्यादिष्विव न केवलन्यायेन[2] परमात्मानुप्रवेशः कल्प्यते, अपि तु कण्ठोक्तः इत्यर्थः ॥

अस्यार्थस्य सूत्रकारोक्तिं दर्शयति शास्त्र इति । परमात्मानुप्रवेशकण्ठोक्ति-रहितेषु प्रतर्दनविद्यादिष्वपि, इन्द्रादीनां परमात्मात्मकत्वे[3] सिद्धे[4], परमात्मानुप्रवेश-कण्ठोक्तिमत्सु अथर्वशिरःप्रभृतिषु कैमुत्यनीत्या परमात्मानुप्रवेशः सिद्ध्यति—इत्यभि-प्रायेण सूत्रकारः प्रतर्दनविद्याविषयं सूत्रं प्रणीतवान्—इत्यभिप्रायः[5] ॥

सर्वसामानाधिकरण्यस्य परमात्मानुप्रवेशकृतत्ववैशद्याय उपबृंहणं दर्शयति यथोक्तम् इति । उदाहृतश्लोके हेत्वंशं, तेन सर्वसामानाधिकरण्यसिद्धिं[6] च

---

१. सूत्रकारेणैवायमर्थः प्रतिपादितः, सूत्रकारेणैवमादिना प्रतिपादितः—पा०
२. केवलन्याये—पा०
३. परमात्मकत्वे, परमात्मत्वे—पा०
४. सिद्धे सति—पा०
५. इति भावः—पा०
६. सामानाधिकरण्यं च—पा०

1. ब्र. सू. १-१-३१.
2. वि. पु. १-१९-८५.

[1]अत्र "[2]सर्वगत्वादनन्तस्य" इति हेतुरुक्तः; स्वशरीरभूतस्य [3]सर्वस्य चिदचिद्वस्तुनः आत्मत्वेन, सर्वगतः परमात्मा इति, सर्वे शब्दाः [4]सर्वशरीरं परमात्मानमेव[5] अभिदधतीत्युक्तम्। अतः "अहम्" इति शब्दः [6]स्वात्मप्रकारिणं परमात्मानमेव आचष्टे ॥

अतः इदमुच्यते [1]"आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इत्यादिना अहंग्रहणोपासनं वाक्यकारेण[7]; कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमात्मैव इति "सर्वस्य तन्निष्पत्तेः" इत्युक्तम्। [2]"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रकारेण च ॥

---

दर्शयति अत्र इति ॥

अतः इदम्[8] इत्यादि। इदम्—अहंग्रहणोपासनम्[9] वाक्यकारेण उच्यते इत्यन्वयः। चेतनानां नित्यत्वात्, सर्वस्य तन्निष्पत्तिः नोपपद्यते इत्यत्राह कार्यावस्थः इति। विशिष्टाद्विशिष्टस्योत्पत्तिः, सा[10] च[11] चिदचित्स्वरूपनित्यत्वेऽपि अवस्थाभेदेन उपपद्यते इत्यर्थः। सूत्रं दर्शयति आत्मा[12] इति ॥

---

१. अत्र च—पा०

२. सर्वगतत्वात्—पा०

३. सर्वस्य—एतन्न दृश्यते क्वचित्। सर्वचिदचिद्वस्तु—पा०

४. सशरीरम्—पा०

५. एवकारः न दृश्यते।

६. स्वात्मप्रकारप्रकारिणम्—पा०

७. वाक्यकारेण च—पा०

८. इदमिति क्वचिन्न दृश्यते।

९. ग्रहणोपादानम्—पा०

१०. सा च वस्तुस्वरूपे—पा०

११. चिदचिदिति क्वचिन्न दृश्यते।

१२. आत्मा इतीति—पा०

1. बोधायनवृत्तिग्रन्थः।

2. ब्र. सू. ४-१-३.

महाभारते च, ब्रह्मरुद्रसंवादे, ब्रह्मा रुद्रं प्रत्याह :—

[1] "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः[1]" इति ।
"रुद्रस्य, ब्रह्मणश्च, अन्येषां[2] च देहिनां परमेश्वरो नारायणः अन्तरात्मतयाऽवस्थितः" इति ॥

[3] तथा तत्रैव :—

[2] "विष्णुरात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः ॥" इति ॥

[4] तत्रैव :—

[3] "एतौ द्वौ विबुधश्रेष्ठौ[5] प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ * सृष्टिसंहारकारकौ ॥" इति ॥

---

[6] सामान्येन सर्वजीवानां परमात्मात्मकत्वे[7] सिद्धेऽपि ब्रह्मशिवयोः परमात्मात्मकत्वं[8] विशेषतो दर्शयितुमाह महाभारते च इति । तव ममेत्युक्ते ब्रह्मशिवयोः [9] अप्रतिपत्तिः स्यादिति, तत्प्रतिपत्त्यर्थं, 'ब्रह्मरुद्रसंवादे' इत्युक्तम् । तद्व्याचष्टे रुद्रस्य इति । नारायणस्य आत्मान्तरव्यावृत्त्यर्थः[10] परमेश्वरशब्दः ॥

रुद्रस्यैव नारायणात्मकत्वे वचनमाह तथा[11] इति ॥

वचनान्तरमाह तत्रैव इति ॥

---

* "ऋक्पूरब्धूःपथामानक्षे" इति पाणिनीयानुशासनेन सामासिके प्रत्यये 'तदादर्शितपथौ' इत्येव भाव्यम् । तथाऽपि आर्षः सः प्रयोगः ।

---

१. देहिसंज्ञकाः—पा०
२. 'च देहिनाम्'—एतन्न दृश्यते क्वचित् । अन्येषां देहिनां च—पा०
३. तथा च तत्रैव—पा०
४. तथा तत्रैव—पा०
५. पुरुषश्रेष्ठौ—पा०
६. सामानाधिकरण्येन सर्वजीवानाम्—पा०
७. परमात्मकत्वे—पा०
८. परमात्मकत्वम्—पा०
९. न प्रतिपत्तिः—पा०
१०. व्यावृत्त्यर्थम्—पा०
११. तथा च इति—पा०

1. भार. मोक्ष. १७९-४.
2. भार. कर्ण. ३५-५०.
3. भार. मोक्ष. १६९-१९.

" अन्तरात्मतया [1] अवस्थितनारायणदर्शितपथौ [2] ब्रह्मरुद्रौ सृष्टिसंहारकार्यकरौ " इत्यर्थः ॥

निमित्तोपादानयोस्तु [3] भेदं वदन्तः वेदबाह्या एव [4] स्युः ; [1] " जन्माद्यस्य यतः ", [2] " प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् " इत्यादिवेदवित्प्रणीतसूत्रविरोधात् ; [3] " सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम् [5] ", [4] " ब्रह्मवनं ब्रह्म स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः ", [5] " ब्रह्माध्यतिष्ठद्भुवनानि धारयन् ", [6] " सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ", [7] " न तस्येशे कश्चन तस्य नाम महद्यशः ", [8] " नेह नानाऽस्ति

अत्र भगवदात्मकत्वं कथं प्रतीतमित्यत्राह अन्तरात्मतया इति ॥

केचिद्वैदिकाः भगवत उपादानत्वं, रुद्रस्य निमित्तत्वं च वदन्ति, [9] " उपादानं तु भगवान्, निमित्तं तु महेश्वरः " इति । तन्निराकरोति निमित्तोपादानयोः इति । सूत्रश्रुतिविरोधाभ्यां वेदबाह्यत्वमुपपादयति जन्मादि इति । " सदेव " इत्युपादानत्वम् । " अद्वितीयं....तदैक्षत " इत्यादिना तस्यैव निमित्तत्वम् । " ब्रह्म [6] स वृक्ष आसीत् " इति उपादानता । " ब्रह्माऽध्यतिष्ठत् " इति तस्यैव निमित्तत्वम् । " सर्वे निमेषाः " इति कालविशिष्टस्य [7] निमेषादीन् प्रति उपादानत्वम् । " न तस्येशे " इति निमित्तत्वम् । " नेह नानाऽस्ति " इत्युपादानत्वम्, सर्वस्य ब्रह्मकार्यत्वेन अब्रह्मात्मकनिषेधात् [8] । " सर्वस्य वशी " इति निमित्तत्वम् ।

१. अवस्थिताभारायणादर्शितपथौ—पा०
२. दर्शितपन्थानौ—पा०
३. तुः नास्ति क्वचित् ।
४. एवकारः क्वचित् न दृश्यते ।
५. अद्वितीयं ब्रह्म तदैक्षत....नि-'ब्रह्म—पा०
६. ब्रह्मवनं ब्रह्म स वृक्ष—पा०
७. कालविशेष्यस्य, कालविशेषस्य—पा०
८. अब्रह्मात्मकत्वनिषेधात्—पा०

1 ब्र. सू. १-१-२.
2. ब्र. सू. १-४-२३.
3. छा. उ. ६-२-१.
4, 5. २ अष्ट. ८ प्र. ७ अनु. ७७, ७८.
6. तै. उ. ना. १-५.
7. तै. उ. ना. १-१०.
8. बृ. उ. ६-४-१९.
9. पाशुपतागमः

किञ्चन", [1] "सर्वस्य वशी सर्वस्येशानः", [2] "पुरुष एवेदं सर्वम् यद्भूतं यच्च भव्यम्", [3] "उतामृतत्वस्येशानः", [4] "नान्यः पन्था अयनाय विद्यते" [1] इत्यादिसर्वश्रुतिगण [2] विरोधाच्च ॥

इतिहासपुराणेषु च, [3] सृष्टिप्रलयप्रकरणयोरिदमेव परतत्त्वमित्यव-गम्यते। यथा महाभारते :—

[5] "केन [4] सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम्।
प्रलये च कमभ्येति तन्मे ब्रूहि पितामह! ॥"

इति पृष्टः,

[6] "नारायणो जगन्मूर्तिः अनन्तात्मा सनातनः।"

इत्यादि च [5] वदन्,

[7] "ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमश्चेदं [6] जगन्नारायणोद्भवम्॥" इति [7] च ॥

---

"पुरुष एवेदं सर्वम्" इति निमित्तत्वम्, उपादानत्वं च। "उतामृतत्वस्येशानः" इति तस्यैव मुक्तिदत्वम् [8]। "नान्यः" इति व्यतिरिक्तोपायनिषेधः ॥

नारायणस्यैव परमकारणत्वे उपबृंहणवचनानि दर्शयति इतिहास इति। तत्र रजस्तमोमूलत्वात्, श्रुतिविरोधाच्च कारणदोषबाधकप्रत्ययवतः प्रबन्धान् विहाय, सात्त्विकेषु प्रबन्धेषु सर्वलोकाविगानपरिगृहीते महाभारते वचनानि दर्शयति यथा इति ॥

---

१. इति श्रुतिगण, इत्यादिश्रुतिगण—पा०
२. गणशब्दः क्वचिन्न दृश्यते।
३. स्थितिप्रलयप्रकरणयोः—पा०
४. कुतस्सृष्टम्—पा०
५. इत्यादि वदति, इति वदति, इत्यादि—पा०
६. चैवम्, चैतत्—पा०
७. चकारः क्वचिन्न दृश्यते।
८. मुक्तिप्रदत्वम्—पा०

1. बृ. उ. ६-४-२२.
2, 3, 1. पुरुषसूक्तम्।
5. भार. मोक्ष. १८१-१.
6. भार. मोक्ष. १८१-१२.
7. भार. आनु. २२९.

प्राच्य-उदीच्य-दाक्षिणात्य-पाश्चात्यसर्वशिष्टैः सर्वधर्म—सर्वतत्त्व-व्यवस्थायाम् इदमेव पर्याप्तम्—इत्यविगानपरिगृहीतं[1] वैष्णवं च[2] पुराणम्[3]:—[1] "जन्माद्यस्य यतः" इति जगज्जन्मादिकारणं ब्रह्मेत्यवगम्यते। [4]तत्, [5]जन्मादिकारणं किमिति प्रश्नपूर्वकम्, [2]"विष्णोः

श्रीविष्णुपुराणे नारायणस्यैव [6]परमकारणत्वपराणि वचांसि वक्ष्यन्, तदाप्तिं दर्शयति प्राच्य इति। कश्चित्[7]परिग्रहव्यावृत्त्यर्थं प्राच्यादिग्रहणम्। कतिपय-परिग्रहव्यावृत्त्यर्थः[8] सर्वशब्दः। अनुष्ठाने, तत्त्वस्थितौ च प्रमाणतया परिगृहीतम् इत्याह सर्वधर्म—सर्वतत्त्वव्यवस्थायाम् इति। श्रुतवेदान्तस्य अनधीतशास्त्रार्थ-बुभुत्सया[9] प्रश्नः इत्याह जन्मादि इति। अस्य[10] अनन्यपरत्वद्योतनार्थ[11] माह जन्मादिकारणं किमिति प्रश्नपूर्वकम् इति॥

अयमभिप्रायः—सामान्यविषयप्रश्नस्य [12]विशेषविषय-उत्तरमुखेन प्रवृत्तत्वं च प्रामाण्यहेतुः; अनन्यपरत्वं [13]हि तत्। विशेषविषय[14]प्रश्नपूर्वकं चेत्, प्रष्टुरभिमतार्थः उक्तः स्यात्; सामान्यविषयप्रश्नपूर्वकत्वे तत्त्वस्थितिः प्रतिपादिता भवति; तस्मात्

१. अविगीतपरिगृहीतम्—पा०
२. 'च'—न दृश्यते क्वचित्।
३. पुराणं सामान्येन—पा०
४. 'तत्'—क्वचिन्न।
५. जगज्जन्मादिकारणम्—पा०
६. परमकारणत्वम् उपबृंहणवचनं च वक्ष्यन्—पा०
७. परिगृहीतव्यावृत्त्यर्थम्—पा०
८. व्यावृत्त्यर्थम्—पा०
९. शास्त्रार्थबुद्धिबुभुत्सया—पा०
१०. अनन्यपरताद्योतनार्थम्—पा०
११. द्योतनार्थत्वम्—पा०
१२. विशेषोत्तरमुखेन—पा०
१३ अनन्यपरत्वं हि तद्विशेषविषय—पा०
१४. विशेषप्रश्नपूर्वकम्—पा०

1. ब्र. सू. १-१-२.
2. वि. पु. १-१-३१.

सकाशादुद्भूतम्" इत्यादिना[1] ब्रह्मस्वरूपविशेषप्रतिपादनैकपरतया प्रवृत्तम् इति सर्वसम्मतम् । [2]तथा तत्रैव :—

[1]"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषाम् आधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥" इति ॥

[3]सर्ववेदवेदान्तेषु सर्वैः शब्दैः परमकारणतया अयमेव गीयते इत्यर्थः ॥

---

अत्रापि सामान्यविषयप्रश्नपूर्वकत्वात् — प्रामाण्यं स्पष्टम् इति ; [4]सामान्यविषयकप्रश्नपूर्वकविशेषविषयत्वप्रदर्शनाय उदाहृतेन. [2]"विष्णोस्सकाशात्" [5]इत्यादिश्लोकेन प्रबन्धोपक्रमस्य भगवत्परत्वमुक्तं भवति ॥

उपसंहारस्य भगवत्परत्वमाह **तथा** इति । परमकारणत्वमुक्तम् **प्रकृतिर्या** इति । स च परमात्मा नारायण इति वदति **परमात्मा** इति । **आधारः** इति शरीरात्मभावः । **परमेश्वर** इति परमात्मनः ईश्वरानतिरिक्तत्वम् । स च कः इत्यत्राह [2]**विष्णुनामा**[6] **स वेदेषु वेदान्तेषु च गीयते** इति । वेदेषु[7] वेदान्तेषु च कथं विष्णोरेव वाच्यत्वम् ? अग्न्यादीनामपि प्रतिपाद्यमानत्वात्[8] इति शङ्कायां तद्व्याचष्टे **सर्व** इति । अग्न्यादिशब्दा अपि परमात्मभूतभगवत्पर्यन्ताः इत्यर्थः ॥

---

१. इत्यादिना विशेषतः ब्रह्मस्वरूप—पा०
२. यथा तत्रैव—पा०
३. सर्वशब्दः क्वचिन्न दृश्यते ; सर्वेषु वेदवेदान्तेषु—पा०
४. सामान्यप्रश्नपूर्वक—पा०
५. इति श्लोकेन—पा०
६. विष्णुनामेति—पा०
७. वेदेषु च—पा०
८. प्रतिपाद्यत्वात्—पा०

1, 2. वि. पु. ६-४-३९

यथा सर्वासु श्रुतिषु केवलपरब्रह्मस्वरूप[1] विशेषप्रतिपादनार्थैव[2] प्रवृत्तो नारायणानुवाकः, तथा इदं वैष्णवं[3] च पुराणम् :—

[1] "सोऽहम्[4] इच्छामि धर्मज्ञ! [5]श्रोतुं त्वत्तो यथा जगत्।
बभूव भूयश्च यथा महाभाग! भविष्यति ॥

---

पूर्वं संग्रहेणोक्तमनन्यपरत्वं विवृणोति यथा इति। सामान्यविषयप्रश्नपूर्वकत्वं प्रश्नश्लोकेन दर्शयति सोऽहम् इति। "यतः" इति निमित्तोपादानयोः सहप्रश्नः[6]। श्रुतवेदान्तस्य प्रश्नत्वात्, तुच्छत्व—विवर्तत्व—परिणामत्व[7]— सद्वारकत्व — अद्वारकत्वादि [8]प्रकारज्ञापनार्थम्[9] "यथा" इति प्रश्नः। तत्र कालभेदेन सृष्टिकारणप्रकारभेदोऽनधीतश्रुत्यन्तरोक्तः किम्? इत्यभिप्रायेण "बभूव, भविष्यति" इति प्रश्नः। यतो बभूव, यथा बभूव, यतो भविष्यति, यथा भविष्यति इति—प्रश्नः। लयेऽप्येवम्। उत्पत्तिकारण – तत्प्रकारविषयप्रश्नानां मध्ये "यन्मयम्" इत्यनेन व्यवधानम्, उत्पत्तिकारण—तत्प्रकारयोः पृथग्ज्ञातव्यत्वा[10]दन्तराकृतम्। "यन्मयम्" इति स्थितिकारणप्रश्नः। मयट् प्राचुर्यार्थः। विकारार्थत्वम् अनपेक्षितम्, यतः इति उपादानस्यापि पृष्टत्वात्। न च तत्संकोचः अपेक्षितः; स्थितिप्रश्नवचनम्[11], अनपेक्षितवचनं च यथा भवति, तथा सङ्कोचानुपपत्तेः। तस्मात् प्राचुर्यार्थो[12] मयट्।

---

१. स्वरूपशब्दः क्वचिन्न दृश्यते।
२. प्रतिपादनपरतयैव—पा० ; एवकारः क्वचिन्न दृश्यते।
३. चकारः क्वचिन्न।
४. श्रोतुमिच्छामि—पा०
५. सोऽहं त्वत्तो—पा०
६ समप्रश्नः—पा०
७. परिणामित्व—पा०
८. सद्वारकत्वादिप्रकार—पा०
९. ज्ञानार्थम्—पा०
१०. ज्ञातव्यत्वादकृतम्, ज्ञातव्यत्वात् कृतम्—पा०
११. स्थितिप्रश्नावचनम्, स्थितिप्रश्नावगम-वचनम्—पा०
१२. प्राचुर्यार्थे—पा०

1. वि. पु. १-१-४.

यन्मयं च जगत् ब्रह्मन्! यतश्चैतच्चराचरम्।
लीनमासीद्यथा [1]यत्र लयमेष्यति यत्र च॥" इति॥

परं ब्रह्म किमिति प्रक्रम्य,

[1]"विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्।

आन्तरस्थितिकारणप्रश्नोऽयम्; अन्तः प्रविश्य धारकतया हि स्थितिः [2]क्रियते? यन्मयश्च इति। चशब्देन बाह्यस्थितिकारणप्रश्नो विवक्षितः। लयमेष्यति यत्र च इति। चकारेण भूतभविष्यल्लयकर्तृप्रश्नद्वयम्[3] अभिप्रेतम्। एवं सामान्यविषयप्रश्न इत्याह परं ब्रह्म किमिति इति। प्रक्रम्य। "प्रवृत्तम्" इत्युत्तरत्र अन्वयः॥

विशेषविषयोत्तरसंक्षेपश्लोक[4]माह विष्णोः इति। विष्णोस्सकाशात्। सकाशशब्दः पञ्चम्यनतिरिक्तार्थः, "चतुर्थ्यर्थे[5] कृते" इतिवत्; "गुरुसकाशात्" इतिवच्च। यद्वा, सकाशात्—[6]काशः प्रकाशः, संकल्परूपज्ञानसहितात् इत्यर्थः। यद्वा, सकाशः—पार्श्वः, शरीरैकदेशात् इत्यर्थः। विष्णुशब्दस्य रूढ्या देवताविशेषनिर्णयः; [2]"देवतापारमार्थ्यं च यथावद्वक्ष्यते भवान्" इति [7]हि वरप्रदानम्? पारमार्थ्यशब्देन धर्मिविपर्यासाभावः; यथावच्छब्देन प्रकारविपर्यासाभावश्च विवक्षितः। रजस्तमःकालुष्यराहित्यं फलितमनेन। एवं [8]वरप्रदानानुगुणदेवताविशेषनिर्णयः रूढ्या, विष्णुशब्दस्य अवयवशक्त्या प्रकारप्रश्नस्योत्तर[9]मुक्तम्। अनेन 'उपादानत्वं हि सद्वारकम्' इत्युक्तं भवति। "यत्र" [10]इति—लयस्थानप्रश्नस्योत्तरमाह तत्र इति। तत्रैव। विष्णावेव। अत्रापि[11] विष्णुशब्देन

१. तत्र—पा०
२. प्रतीयते—पा०
३. लयकर्तृकप्रश्नद्वयम्—पा०
४. संक्षेपमाह—पा०
५. चतुर्थ्यर्थत्वे कृते—पा०
६. काशः संकल्परूपज्ञानं तत्सहितात्—पा०
७. हिर्नास्ति क्वचित्।
८. वरप्रदानगणदेवता—पा०
९. प्रश्नोत्तरम्—पा०
१०. तत्रैव संस्थितमिति लयस्थानप्रश्नोत्तरं तच्च सद्वारकमिति—पा०
११. अपिर्न दृश्यते क्वचित्।

1. वि. पु १-१-३१.
2. वि. पु. १-१ २६.

स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥"
[1]"परः पराणां परमः परमात्माऽऽत्मसंस्थितः ॥

लयस्थानत्वं संहारकमिति[1] सिद्धम् । अविशेषेणोक्तत्वात् कालविशेषप्रश्नोऽपि दत्तोत्तरः । लयकर्तृप्रश्नस्य 'च'[2] शब्दादवगतस्य उत्तरं बाह्यस्थितिकर्तृत्वं चाह स्थितिसंयम इति । आन्तरस्थितिकारणप्रश्नस्योत्तरं जगच्च सः इति । अनेन सामानाधिकरण्येन धार्यधारकत्वादि सिद्धम्[3] ॥

अथ नमस्कारश्लोकानामनन्तरस्थानि वचनान्याह परः इति । तत्र, ब्रह्मणो[4] निखिलजगत्कारणत्वोपपत्तये अपरिच्छिन्नत्वमुच्यते ; परिच्छिन्नं हि परिमितकार्यकारणम् ; तस्मात् कृत्स्नकारणत्वोपपत्त्यर्थ[5] मपरिच्छिन्नत्वमुच्यते । श्रुतिभिश्च [2]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिः त्रिविधापरिच्छेद उक्तः । तत्र [6]त्रिविधं परिच्छेदं विस्तरेण वक्ष्यन् प्रथमं संग्रहेणाह परः पराणाम् इत्यर्धेन । ब्रह्मादीनामपि परः परमः । अनेन कालपरिच्छिन्नेभ्यः परत्वादस्य कालानवच्छेदः फलितः । "परमात्मा" इति देशापरिच्छेदः ; आप्नोतीति हि आत्मा ? वस्त्वनवच्छेदमाह आत्मसंस्थितः इति । आत्मसंस्थितः[7] — स्वनिष्ठः । [8]अन्येषामेतन्निष्पन्नत्वात्[9] तद्वाचिशब्दा एतत्पर्यन्ताः । सर्ववस्तु[10] सामानाधिकरण्यार्हत्वम् — वस्त्वनवच्छेदः; इदमत्र नान्यत्रेति — देशावच्छेदः; इदमिदानीमेव नान्यदेति

१. इत्युक्तमिति सिद्धम्—पा०
२. चशब्दार्थस्योत्तरम्, चशब्दगतस्योत्तरम्—पा०
३. इत्यादिसिद्धिः—पा०
४. अखिलजगत्—पा०
५. कारणत्वोपपत्तये—पा०
६. त्रिविधमप्यपरिच्छेदम्—पा०
७. आत्मनि संस्थितः—पा० "आत्मसंस्थित." —एतन्न दृश्यते क्वचित् ।
८. अनेनान्येषाम्—पा०
९. एतन्निष्ठत्वात्—पा०
१०. सामानाधिकरणत्वम्—पा०

1. वि. पु. १ २-१०.
2. तै. उ. आ. २-१-१.

रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥
अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥

—कालावच्छेदः ; इदमिदं न भवतीति—वस्त्ववच्छेदः ; तत्तद्विपर्ययः तत्तदनवच्छेदः ; स यथोक्तप्रकार एव । तत्र प्रथमं [1]कालापरिच्छेदं विस्तरेण वदन्, कालपरिच्छिन्नव्यावृत्तिमाह रूप इति । रूपम् —जातिः, "जातिगुणौ च रूपिणां रूपे", इति वचनात् । वर्णः —गुणः । आदिशब्देन क्रियादण्डकुण्डलादि[2]-द्रव्यं विवक्षितम् । तद्वाचिशब्दः रूपवर्णादिनिर्देशः । विशेषणानि रूपादीनि तान्येव ; रूपवर्णादिवाचिशब्दैः तद्वाच्यरूपवर्णादिभिश्च वर्जितः इत्यर्थः । "रूपवर्गादि" इति पाठे रूपम् गुणः, *वर्गः जातिः, [3]देववर्गो मनुष्यवर्ग इति वर्गरूपत्वात् तस्याः[4] । यद्वा, रूपवर्णादिलक्षणैः, [5]तत्तन्निर्देशलक्षणैश्च[6] विशेषणैः विवर्जितः । [7]अन्यत्तुल्यम् ॥

षड्भावविकारराहित्यमाह अपक्षय इति । जन्मशब्दः 'जायते, अस्ति' इति विकारद्वयस्य उपलक्षणार्थः । अपक्षयादिवर्जितत्वात्[8] तद्वाचिशब्दागोचर[9]श्चेति सिद्धम् । तर्हि कथं वक्तुं शक्यते इत्यत्राह शक्यते वक्तुं यस्सदास्तीति केवलम् इति । "केवल" शब्देन अपक्षयादिवाचकशब्द-

* विष्णुपुराणे विष्णुचित्तव्याख्याने ।

१. कालपरिच्छेदम्—पा०
२. दण्डकुलालादिद्रव्यम्—पा०
३. देववर्गमनुष्यवर्गरूपत्वात्—पा०
४. तस्य—पा०
५. तत्तदर्थनिर्देश—पा०
६. चकारः क्वचिन्न दृश्यते ।
७. अनन्यतुल्यम्—पा०
८. विवर्जितत्वात्—पा०
९. शब्दगोचरः, शब्दागोचरम्, शब्दागोचरम्—पा०

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद्ब्रह्म परमं नित्यम् अजमक्षयमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥

व्यावृत्तिः । "सदा" शब्देन कादाचित्कासित्वव्यावृत्तिः । एवम्, कालपरिच्छेदवतां जात्यादिकल्पनान्वयः, अपक्षयाद्यन्वयश्च [1] तदुभयवाचिशब्दगोचरत्वञ्च दृष्टम् । तदभावात् ब्रह्म, कालापरिच्छिन्नमित्युक्तम् ॥

नामनिर्वचनमुखेन देशापरिच्छेदमाह सर्वत्र इति । ब्रह्मणो हि [2] त्रिविधापरिच्छेदः [3] ? कथमत्र [4] वासुदेवस्यापरिच्छेद उच्यते इत्यत्राह तद्ब्रह्म इति । वासुदेवपरामर्शि [5] तच्छब्दस्य नपुंसकत्वं ब्रह्मविशेषणत्वात् । "अजमक्षय-मव्ययम्" इत्यनेन विकारान्तरराहित्यमप्युपलक्षितम् । तस्मात् नित्यम् [6] । एवमचिद्व्यावृत्तिः । "हेयाभावाच्च निर्मलम्" इति बद्धव्यावृत्तिः । "सदा....निर्म-लम्" इति मुक्तव्यावृत्तिः । "एकस्वरूपञ्च" इति नित्यसिद्धव्यावृत्तिः । ते हि बहवः ? ब्रह्म तु समाभ्यधिकरहितम् । वासुदेव एव एवंविधं [7] परं ब्रह्म इत्यर्थः ॥

यद्वा, "अजम्" 'जायते, अस्ति' इति विकारद्वयव्युदासः । "अक्षय-मव्ययम्" इति अपक्षयविनाशनिषेधः । "एकस्वरूपम्" इति '[8] विपरिणमते, विवर्धते' इति मध्यमविकारद्वयनिवृत्तिः । "परमम्" इति नित्यसूरिव्यावृत्तिः । अन्यत्तुल्यम् ॥

1. तदुभयशब्दवाचिगोचरत्वम्—पा०
2. हिर्नास्ति क्वचित् ।
3. त्रिविधः परिच्छेदः—पा०
4. वासुदेवस्य त्रिविधापरिच्छेद इत्य-त्राह—पा०
5. परामर्शिनस्तच्छब्दस्य—पा०
6. नित्यमिति चिदचिद्व्यावृत्तिः—पा०
7. विधमिति क्वचिन्न दृश्यते ।
8. परिणमते—पा०

[1]तदेव सर्वमेवैतत् व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥"
[1]"स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने! व्यतीतः ।

एवम्, देशापरिच्छेदमुखेन देवताविशेषनिर्णयश्च कृतः । तथा श्रुतिश्च [2]आनन्त्यं [3]वदति, देवताविशेषनिर्णयं च आह [2] "सत्यं ज्ञानमनन्तं ब्रह्म" इति । अनन्तशब्दस्य अवयवशक्त्या [4]त्रिविधापरिच्छेदसिद्धिः, रूढ्या देवताविशेषनिर्णयः । तर्हि पुल्लिङ्गत्वं स्यादिति चेत्[5]; पुल्लिङ्ग एव अनन्तशब्दः द्वितीयाविभक्त्यन्तः, [3]"यो वेद निहितं गुहायाम्" इति '[6]वेद' इति पदेनान्वयात् । एवं श्रुत्यनुसारादत्र वासुदेवस्य परब्रह्मत्वमुक्तम् ॥

अथ वस्त्वनवच्छेदमाह [7]तदेव इति । "व्यक्ताव्यक्तस्वरूपवत्" इत्यत्र स्वरूपशब्दः वस्त्वनतिरिक्तार्थवाची । व्यक्ताव्यक्तस्वरूपवत् .... पुरुषरूपेण कालरूपेण [8]च स्थितं सर्वमेवैतत् जगत् तत्[9] ब्रह्मैव इत्यर्थः । अनेन वस्त्वपरिच्छेद उक्तः । सर्वसामानाधिकरण्यार्हत्वं [10]हि वस्त्वपरिच्छेदः । एवम् उपक्रमगतवचनजातमुक्तम् ॥

उपसंहारगतवचनान्याह[11] स सर्व इति । सर्वभूतानां प्रकृतिः-प्रधानम्; विकाराः—महदादयः; गुणाः—सत्त्वरजस्तमांसि । आदिशब्देन तत्प्रयुक्तरागद्वेष-

१. सदेव—पा०
२. नान्यं वदति—पा०
३. वदन्ती—पा०
४. त्रिविधः परिच्छेदः—पा०
५. 'स्यादिति चेत्'—एतन्न दृश्यते क्वचित्—पा०
६. वेदनान्वयात्—पा०
७. सदेवेति—पा०
८. चः क्वचिन्न ।
९. 'तत्'—क्वचिन्नैतत् ।
१०. हिः न दृश्यते क्वचित् ।
११. वचनजातमाह, वचनान्याह—पा०

1. वि. पु. ६-५-८०.
2,3. तै. उ. आ. २ १-१.

अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद्भुवनान्तराले ॥

समस्तकल्याणगुणात्मकोऽसौ [1]स्वशक्तिलेशोद्धृतभूतवर्गः[2] ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥

तेजोबलैश्वर्यमहावबोध[3]स्ववीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥

दुःखादयो विवक्षिताः । आवरणम् – ज्ञानसङ्कोचः, सर्वविषयज्ञानावरणं[4] हि तत् ; 'अखिलात्मा' इति पदं विवृणोति तेनास्तृतम् इति । एवं धर्मिस्वरूपस्य हेयप्रत्यनीकत्वमुक्तम्[5] ॥

अथ दिव्यात्मस्वरूपस्य कल्याणगुणत्वमाह **समस्त** इति । कल्याणगुणशब्दः[6] धर्मपरः, [1]"द्व्येकयोर्द्विवचनैकवचने" इत्यत्र द्व्येकशब्दवत् ; [2]"द्वित्वैकत्वयोरर्थयोः" इति हि वृत्तिः ; समस्तकल्याणत्वं गुणो[7] यस्य [8]सः समस्तकल्याणगुणः, एवंविधं[9] दिव्यात्मस्वरूपं यस्य सः "समस्तकल्याणगुणात्मकः" ॥

दिव्यात्मस्वरूपमनाधारेन सर्वधारक[10]मित्याह **स्वशक्ति** इति । विग्रहवैलक्षण्यमाह **इच्छा** इति । तत्प्रयोजनमाह **संसाधित** इति । षाड्गुण्यमाह **तेजः** इति । "गुणादिदोषान्" इति पूर्वोक्तं विवृणोति **सकलाः** इति । आदिशब्देन कर्मविपाकाशयाः[11] विवक्षिताः । अत एव "परः पराणाम्" ॥

१. स्वशक्तिलेशात्त्रतभूत—पा०
२. भूतसर्गः—पा०
३. महावबोधः सुवीर्य—पा०
४. ज्ञानावतरणं हि—पा०
५. 'उक्तम्' क्वचिदेतन्न दृश्यते ।
६. कल्याणशब्द.—पा०
७. गुणयोगः यस्य—पा०
८. 'सः' — नास्ति क्वचित् ।
९. एवंविधदिव्यात्म—पा०
१०. सर्वाधारकम्—पा०
११. कर्मविपाकातिशयाः—पा०

1. अष्टाध्यायी, १-४-२२.
2. काशिकावृत्ति

स ईश्वरो व्यष्टिसमष्टिरूपः व्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता[1] समस्तशक्तिः परमेश्वराख्यः ॥

संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलम् एकरूपम् ।
संदृश्यते वाऽप्यधिगम्यते वा तद् ज्ञानम्, अज्ञानमतोऽन्यदुक्तम् ॥"

एवम्, उभयलिङ्गत्वेन विलक्षणस्य कथं [2]जगत्सामानाधिकरण्यम् इत्यत्राह स ईश्वरः इति । जगच्छरीरकत्वादित्यर्थः । व्यष्टिसमष्टिशब्दौ — कार्यकारणावस्थजीवविषयौ । अव्यक्तव्यक्तशब्दौ — उभयावस्थाचिद्विषयौ[3] । ईश्वरातिरिक्तब्रह्मशङ्कानिरासार्थः प्रथमः "ईश्वर" शब्दः । "सर्वेश्वरः" — सर्वनियन्ता । अनेन जगच्छरीरकत्वमुपपादितं भवति । तदेकनियाम्यद्रव्यं हि शरीरम्? [4]सर्वदृक् सर्ववेत्ता[5] । सर्वपदार्थस्वरूपम्, तत्प्रकारांश्च जानातीत्यर्थः । सर्वतो दृक्—सर्वदृक्; सर्वेषां चक्षुर्भूत इति वा; ज्ञानप्रद इत्यर्थः । ईश्वरान्तरनिषेधपरम्—"परमेश्वराख्यः" इति पदम् ।

संज्ञायते इति । "अस्तदोषम्" — विकाररूपदोषरहितम्; अनेन प्रकृतिव्यावृत्तिः । "शुद्धम्" — कर्मवश्यतादोषरहितम्; अनेन बद्धव्यावृत्तिः । "निर्मलम्"—कर्मसंबन्धार्हत्वदोषरहितम्; अनेन मुक्तव्यावृत्तिः । "एकरूपम्"—समाभ्यधिकरहितम्; अनेन [6]नित्यसिद्धव्यावृत्तिः । एवंविधम् "तत्" [7]ब्रह्म, "येन" आगमोत्थज्ञानेन "ज्ञायते"; "येन" साक्षात्काररूपेण ज्ञानेन "दृश्यते"; "येन" परमभक्तिदशापन्नेन[8] "गम्यते" अनुभूयते, साक्षात्कृतस्य

१. सर्वविच्च—पा०
२. जगतस्सामानाधिकरण्यम्—पा०
३. उभयावस्थावद्विषयौ—पा०
४. 'सर्वदृक्' क्वचिदेतन्न ।
५. सर्वद्रष्टा—पा०
६. नित्येति क्वचिन्न दृश्यते ।
७. परं ब्रह्म—पा०
८. दशापन्नेनापि गम्यते, दशापन्नेनाधिगम्यते—पा०

[१]इति, परब्रह्मस्वरूपविशेषनिर्णय एव कृतम् ॥

अन्यानि [२]सर्वपुराणानि अन्यपराणि, एतदविरोधेन नेयानि[३] । अन्यपरत्वं च

---

अनुभवाभिनिवेशः — परमभक्तिः ; एवंविधत्वात् "परम्, उत्कृष्टम्" यद् ज्ञानम् "तत्" एव "ज्ञानम्"; "अन्यत्" "अज्ञानम्" इत्यर्थः ॥

"स ज्ञायते" इति पाठे[४] अयमर्थः :— "सः" ईश्वरः, "येन" तत्तद्दशापन्नेन [५]ज्ञानेन "ज्ञायते" साक्षात्क्रियते [६]"गम्यते", "तद् ज्ञानम्" "अस्तदोषं शुद्धम् .... निर्मलमेकरूपम्", [1]"अर्थेनैव विशेषो हि निराकारतया धियाम्" इति न्यायात्, [७]ज्ञानस्य अस्तदोषत्वादिकं विषयविशेषकृतम् ; विकाररूपदोषास्पदप्रकृतिविषयज्ञानविलक्षणत्वात् "अस्तदोषम्"; प्रकृतिसंबन्धदोषवद्विषयत्वाभावात्[८] "शुद्धम्"; प्रकृतिसंबन्धार्हतादोषवद्विषयत्वरहितत्वात्[९] "निर्मलम्"; "एकरूपम्" अनेकरूपानित्यसिद्ध[१०]विषयज्ञानव्यावृत्तत्वात्[११] "एकरूपम्" इत्यर्थः ॥

एवं, सामान्यविषयप्रश्नपूर्वकं[१२], विशेषविषयोत्तरवचनप्रवृत्तत्वात् अनन्यपरम् इत्याह पर इति । अन्येषां पुराणानामन्यपरत्वात्, एतदविरोधेनैव[१३] नेयानि इत्याह अन्यानि इति । कथमन्यपरत्वमित्यत्राह अन्यपरत्वं च इति । तत्तदारम्भ-

---

१. इतिः न दृश्यते क्वचित् ।
२. सर्वाणि पुराणानि, सर्वाण्यप्यविरोधेन-पा०
३. वर्णनीयानि—पा०
४. पाठेऽप्ययमर्थः—पा०
५. 'ज्ञानेन' — एतन्न दृश्यते क्वचित् ।
६. 'गम्यते' कुत्रचिन्नास्त्येतत् ।
७. ज्ञानस्य सदोषत्वादिकम्—पा०
८. विषयाभावात्—पा०
९. विषयत्वरहितत्निर्मलम्, विषयत्वा- निर्मलम्—पा०
१०. नित्यसिद्धज्ञान—पा०
११. व्यावृत्तत्वमेकरूपम्—पा०
१२. प्रश्नपूर्वकविशेषविषय—पा०
१३. एवकारः क्वचिन्न दृश्यते ।

1. योगाचाराणां कारिका ।

तथादारम्भप्रकारैः अवगम्यते; सर्वात्मना विरुद्धांशः[1], तामसत्वात् अनादरणीयः ॥

नन्वस्मिन्नपि,

[1] "सृष्टिस्थित्यन्तकरणीं[2] ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः ॥"

इति, त्रिमूर्तिसाम्यं प्रतीयते; नैतदेवम्; "एक एव जनार्दनः" इति जनार्दनस्यैव[3] ब्रह्मशिवादिकृत्स्नप्रपञ्चतादात्म्यं विधीयते ॥

[2] "जगच्च सः" इति पूर्वोक्तमेव, विवृणोति :—

[3] "स्रष्टा[4] सृजति चात्मानं विष्णुः पाल्यं च पाति च ।

प्रकारैः विशेषविषयप्रश्नपूर्वकैरित्यर्थः । अविरोधेन नेतुमशक्यं चेत्, कथं स्यात्? इत्यत्राह सर्वात्मना इति । [4] "विरोधे त्वनपेक्षं स्यात्" इति न्यायात् त्याज्यांश इत्यर्थः । तामसत्वात् इति । रजस्तमोमूलत्वात्, श्रुतिविरोधाच्च, कारणदोषबाधकप्रत्ययवत्त्वादयथार्थ्य[5]मित्यभिप्रायः ॥

साम्यशङ्कया चोदयति ननु इति । त्रिमूर्तिसाम्यप्रतीतेः, विष्णोरेव सर्वस्मात्परत्वमनुपपन्नम् इत्यर्थः । परिहरति नैतदेवम् इति । कस्तर्ह्यर्थः? इत्यत्राह एक एव इति । अस्मिन् प्रकरणे इत्यर्थः ॥

तादात्म्यकथनं किमत्रापेक्षितम्? इत्यत्राह जगच्च इति । पूर्वं संग्रहेण उक्तस्य तादात्म्यस्य विवरणमपेक्षितम्—इत्यभिप्रायेण 'विवृणोति' इत्युक्तम् । कृत्स्नप्रपञ्चतादात्म्यं कथमत्र प्रतीयते इत्यत्राह [6]स्रष्टा सृजति इति । व्याहृति-

१. विरुद्धस्तु—पा०
२. करणाद्ब्रह्मविष्णु—पा०
३. जनार्दनस्यैकस्यैव—पा०
४. स्रष्टा सृजति—पा०
५. अयाथार्थ्यात्—पा०
६. स्रष्टा सृजति—पा०

1. वि. पु. १-२-६६.
2. वि. पु. १-१-३१.
3. वि. पु. १-२-६७.
4. मीमांसा. १-३-३.

उपसंह्रियते चान्ते संहर्ता च स्वयंप्रभुः ॥"

इति[1], स्रष्टृत्वेन अवस्थितं ब्रह्माणं, सृज्यं च, संहर्तारं, संहार्यं च, युगपन्निर्दिश्य, सर्वस्य विष्णुतादात्म्योपदेशात्; सृज्यसंहार्यभूतात् वस्तुनः, स्रष्टृसंहर्त्रोः जनार्दनविभूतित्वेन विशेषो दृश्यते। जनार्दनविष्णुशब्दयोः पर्यायत्वेन, [1]"ब्रह्मविष्णुशिवात्मिकाम्" इति विभूतिमत एव स्वेच्छया लीलार्थं विभूत्यन्तर्भाव उच्यते; यथेदमनन्तरमेवोच्यते:—

[2]"पृथिव्यापस्तथा तेजः वायुराकाश[2] एव च।
सर्वेन्द्रियान्तःकरणं पुरुषाख्यं[3] हि यज्जगत् ॥
स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः।
सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम् ॥

---

शङ्कापरिहारार्थं तद्व्याचष्टे स्रष्टृत्वेन इति। सर्वस्य विष्णुतादात्म्योपदेशात्, "जगच्च यः" इत्यस्य विवरणमत्र क्रियते इत्यर्थः। विष्णुः सृजति, "स्रष्टा ब्रह्मा--विष्णुः" इत्यर्थः। आत्मानं विष्णुः सृजति[4], सृज्यं[5] वस्तुजातं विष्णुः[6]—इति शब्दार्थः। ततः किं प्रस्तुतसाम्यपरिहाराय इत्यत्राह सृज्यसंहार्य इति। सृज्यस्यैव स्रष्टृसामानाधिकरण्यात् स्रष्टुरपि विभूतित्व[7]मित्यर्थः। एवं संहार्यसंहर्त्रोरपि विभूतित्वम्। तर्हि विष्णोरपि विभूतित्वप्रसंगः इत्यत्राह जनार्दन इति। ब्रह्मशिवादिप्रपञ्चस्य परब्रह्मविभूतित्वे, तत्रैव वचनान्तरं दर्शयति यथेदम् इति[8]।

---

१. इति च—पा०
२. आकाशम्—पा०
३. पुरुषाख्यं स्वर्गं जगत्, पुरुषाख्यं च यज्जगत्—पा०
४. सृजतीति—पा०
५. सृज्यजातम्—पा०
६. विष्णोरिति शब्दार्थः, विष्णुशब्दार्थः—पा०
७. विभूतिमत्त्वम्—पा०
८. इति यथेदं पर्यन्तम्—पा०

1. वि. पु. १-२-६६.
2. वि. पु. १-२-६७.

स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च[1] ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिः विष्णुः वरिष्ठो वरदो वरेण्यः ॥" [2] इति ।

अत्र सामानाधिकरण्यनिर्दिष्ट[3] हेयमिश्रप्रपञ्चतादात्म्यं निरवद्यस्य[4], निर्विकारस्य, समस्तकल्याणगुणाकारस्य[5], ब्रह्मणः कथमुपपद्यते ? इत्याशङ्क्य, [1] "स एव[6] सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति स्वयमेव उपपादयति । [7] "स एव[8]"—सर्वेश्वरेश्वरः परब्रह्मभूतो विष्णुरेव, [9] "जगत्" इति प्रतिज्ञाय, "सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति हेतुरुक्तः। सर्वभूतानाम् अयमात्मा [10] विश्वशरीरो "यतोऽव्ययः" इत्यर्थः । वक्ष्यति च [2] "तत्सर्वं वै हरेस्तनुः" इति ॥

यथोक्तम्; अनन्तरमेवोच्यते इत्यर्थः । सामानाधिकरण्येन स्वरूपैक्य[11] प्रतीतिव्यावृत्त्यर्थमाह अत्र इति । उपपाद्यांशः[12] कः ? कश्च उपपादकांशः ? इत्यपेक्षायाम्, उक्तं विवृणोति[13] सर्वेश्वरेश्वरः इति । हेत्वंशं व्याचष्टे सर्वभूतानामयम् इति । रूपशब्दस्य शरीरपरत्वनिश्चयाय[14] वचनान्तरमाह वक्ष्यति च[15] इति ॥

१. पाल्यते च । इति—पा०
२. इतिः क्वचिन्न दृश्यते ।
३. सामानाधिकरण्यनिर्दिष्टहेयमिश्र—पा०
४. परस्य समस्तकल्याण—पा०
५. गुणात्मकस्य—पा०
६. 'स एव'—क्वचिदेतन्न दृश्यते ।
७. 'स एव'—एतन्न दृश्यते क्वचित् ।
८. एवकारः क्वचिन्न ।
९. सर्वं जगत्—पा०
१०. विश्वरूपः—पा०
११. स्वरूपैक्यव्यावृत्त्यर्थम्—पा०
१२. उपपाद्यार्थः—पा०
१३. स सर्वेश्वरेश्वरः—पा०
१४. निश्चायकवचनान्तर—पा०
१५. पश्यतीति—पा०

1. वि. पु. १-२-६८.
2. वि. पु. १-२२-३८.

एतदुक्तं भवति :— 'अस्य[1] अव्ययस्यापि[2] परस्य ब्रह्मणः विष्णोः विश्वशरीरतया तादात्म्यमविरुद्धम्' इति। आत्मशरीरयोश्च[3] स्वभावाः व्यवस्थिता एव॥

एवंभूतस्य[4] सर्वेश्वरस्य विष्णोः प्रपञ्चान्तर्भूत[5]नियाम्यकोटिनिविष्ट-ब्रह्मादिदेवतिर्यङ्मनुष्येषु[6] तत्तत्समाश्रयणीयत्वाय स्वेच्छावतारः पूर्वोक्तः।

"विश्वरूपो यतोऽव्ययः" इत्यत्र अव्ययशब्दः [7]किमर्थः इत्यत्राह एतदुक्तम् इति। अव्ययशब्दः विरोधशङ्कानुवादपरः[8] इत्यर्थः। भगवतो निरवद्य-त्वाद्युपपत्त्यर्थमाह आत्म इति॥

"सर्गादिकम्" इत्यादिश्लोकार्थः उच्यते :— "भूतस्थं" "सर्गादिकम्" सर्वप्राणिगतसर्गादिव्यापारजातम् "अस्यैव" "उपकारकम्" — परमात्मनो लीला-रसनिष्पादकत्वात् तस्यैव शेषभूतमित्यर्थः। तत्र हेतुः — "ततः" इति विवक्षितः[9], विश्वरूपत्वादित्यर्थः। एवं शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यमाह "स एव" इति। "सृज्यः" मनुष्यादिः, "सर्गकर्ता" ब्रह्मा[10] च "स एव"— तदुभयशरीरकः परमात्मा इत्यर्थः। "पाल्यते च" इति चकारेण, "अद्यते[11] च" इति विवक्षितम्। "ब्रह्माद्यवस्थाभिः" — ब्रह्मत्वाद्यवस्थाभिः। अवस्थायोगः सद्वारकः इत्याह "अशेषमूर्तिः" इति। "वरदः" इत्युपायत्वम्, "वरेण्यः" इत्युपेयत्वम्, "वरिष्ठः" इति तदुपयोगिगुणवत्त्वं च अभिप्रेतम्॥

एवंभूतस्य इति। पूर्वोक्तः। [1]"ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते"

१. तस्य—पा०
२. अपिर्नास्ति क्वचित्।
३. चः न दृश्यते क्वचित्।
४. सर्वस्मात्परस्य विष्णोः—पा०
५. प्रपञ्चान्तर्भूततया नियाम्यकोटि—पा०
६. मनुष्यादिषु—पा०
७. किमर्थम्—पा०
८. विरोधशङ्कापरः—पा०
९. विवक्षित इति—पा०
१०. ब्रह्माऽपि—पा०
११. अद्यते—पा०

1. अथर्वशिरोपनिषत्।

तदेतत् ब्रह्मादीनां भावनात्रयान्वयेन, कर्मवश्यत्वम्; भगवतः परब्रह्मभूतस्य[1] वासुदेवस्य निखिलजगदुपकाराय स्वेच्छया स्वेनैव रूपेण देवादिषु अवतार इति च[2] षष्ठांशे शुभाश्रयप्रकरणे[3] स्फुटमुक्तम्। "अस्य देवादिरूपेण अवतारेष्वपि न प्राकृतो देहः" इति महाभारते[1] "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति प्रतिपादितः[4] ॥

श्रुतिश्च:— [2]"अजायमानो बहुधा विजायते, तस्य धीराः परिजानन्ति योनिम्" इति। कर्मवश्यानां ब्रह्मादीनामनिच्छतामपि [5]तत-

इत्येतदर्थोपपादने प्रोक्त इत्यर्थः। अत्रैव प्रबन्धे अयमर्थः स्पष्ट इत्याह तदेतत् इति। [3]"हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः" इत्यारभ्य, [4]"अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इत्यन्तेन कर्मवश्यत्वम्—उक्तमित्यर्थः। [5]"समस्ताः शक्तयश्चैताः" इत्यारभ्य [6]"जगतामुपकाराय न सा कर्म निमित्तजा" इत्यन्तेन स्वेच्छावतार उक्तः[6] इत्यर्थः। विग्रहवैलक्षण्ये प्रमाणं[7] महाभारते दर्शयति अस्य इति ॥

उक्तार्थविषयां श्रुतिमाह श्रुतिश्च इति। आपाततो [8]व्याहतिशङ्कापरिहारार्थं तद्व्यनक्ति कर्मवश्यानाम् इति। शुभेतरजन्म अकुर्वन्नपि[9] इत्यन्तेन[10] "अजाय-

---

१. परब्रह्मभूतवासुदेवस्य—पा॰

२. चकारः क्वचिन्न दृश्यते।

३. प्रकरणेषु व्यक्तमुक्तम्—पा॰

४. प्रतिपादितम्—पा॰

५. तत्तत्कर्मानुरूपप्रकृति—पा॰

६. उक्तः इति क्वचिन्न दृश्यते।

७. प्रामाण्यम्—पा॰

८. व्याहतशङ्का—पा॰

९. जन्मादि कुर्वन्नपि—पा॰

१०. इत्यनेन—पा॰

1. श्रीमन्महाभारते।

2. पुरुषसूक्तम् २१.

3. वि. पु. ६-७-५६.

4. वि. पु. ६-७-७७.

5. वि. पु. ६-७-७०.

6. वि. पु. ६-७-७२.

स्वकर्मानुगुणप्रकृति [1]परिणामरूपभूतसंघसंस्थानविशेषदेवादिशरीरप्रवेशरूपं[2] जन्म अवर्जनीयम्; अयं तु सर्वेश्वरः, सत्यसंकल्पः, भगवान् एवंभूत-शुभेतरजन्म [3]अकुर्वन्नपि, स्वेच्छया स्वेनैव[4], निरतिशयकल्याणरूपेण देवादिषु जगदुपकाराय बहुधा [5]जायते; तस्यैतस्य शुभेतरजन्म अकुर्वतोऽपि[6] सर्वकल्याणगुणानन्त्येन बहुधा[7] योनिम्—बहुविधजन्म, "धीराः"—धीमतामग्रेसराः, "जानन्ति" इत्यर्थः ॥

---

गानः" इति पदं व्याख्यातम्। स्वेच्छया इत्यादिना "बहुधा विजायते" इत्येतद्व्याख्यातम्। ब्रह्मादीनां जन्महेतु-तत्फल-वपूंषि[8] यानि, न तान्यस्य इति "अजायमान" [9]शब्दस्यार्थः। हेतुः—कर्म, तत्फलम्—तदनुभवः; प्राकृतं च वपुस्तेषाम्, तद्विलक्षणहेतु-फल-वपुरन्वितोऽवतार इति "बहुधा विजायते" इत्यस्यार्थः। हेतुः—स्वेच्छा, फलम्—जगदुपकारः, वपुः—अप्राकृतं चेति[10]। [1]"तस्य धीराः परिजानन्ति योनिम्" इत्येतद्व्याचष्टे तस्य इति। योनिशब्दस्य उपादान-[11]कारणपरत्वव्यावृत्त्यर्थं "जन्म" इत्युक्तम्। धीरशब्दस्य धैर्यगुणान्वितपरत्वव्या-वृत्त्यर्थं तद्व्याचष्टे धीमतामग्रेसराः इति। धियमीरयन्तीति[12] व्युत्पन्नो धीरशब्दः।

---

१. परिणामभूतसंघ, परिणामभूतसंस्थान, परिणामरूपभूतसंघातसंस्थान—पा०
२. प्रवेशरूपजन्म—पा०
३. जन्मादि कुर्वन्नपि—पा०
४. स्वेनैव रूपेण—पा०
५. विजायते—पा०
६. शुभेतरकर्माऽकुर्वतोऽपि, शुभेतरजन्म कुर्वतोऽपि—पा०
७. बहुविधयोनिम्—पा०
८. तत्फलं वपूंषि—पा०
९. शब्दार्थः—पा०
१०. इतिः न दृश्यते क्वचित्।
११. कारणत्वपर—पा०
१२. ईरयन्तीति हि—पा०

1. पुरुषसूक्तम्।

तदेतन्निखिलजगन्निमित्तोपादानभूतात् [1]"जन्माद्यस्य यतः", [2]"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिसूत्रैः[1] प्रतिपादितात् परस्मात् ब्रह्मणः परमपुरुषात् अन्यस्य कस्यचित् परत्वम्[2] — [3]"परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः" इत्याशङ्क्य, [4]"सामान्यात्तु",

---

अतो यथोक्त एवार्थः । न च स्वरूपेण[3] नित्यत्वम् अजायमानत्वम्, विग्रहद्वारकं जायमानत्वमिति वाच्यम्; अस्मदादीनामपि तुल्यत्वात्, "धीराः परिजानन्ति।" इति वक्तुमयोगात् । अत एव अजायमानत्वं[4] परमार्थः, जन्म तु काल्पनिकमित्यपि परास्तम् । अतो यथोक्त एवार्थः ॥

अवैदिकविप्रतिपत्तेः[5] पक्षत्रयं[6] दृश्यते :— "प्रकृतिः उपादानम्, रुद्रो निमित्तम्" इत्येकम्; "नारायणकारणत्वे श्रुतिभिः प्रतिपादिते नारायणः उपादानम्, रुद्रो निमित्तम्" इत्येकम् मतम्[7]; तत्र "निमित्तोपादानयोरैक्ये दर्शिते, जगत्कारणम् मुक्तिदम्, मुक्तप्राप्यम् अन्यत् परमस्ति" इत्येकम् । तत्र * पूर्वोक्तम् मतद्वयं पूर्वमेव निरस्तम् । अथ कारणादन्यस्य प्राप्यत्वं निरस्यति तदेतत् इति । तदेतच्छब्दौ—शब्दान्तरैः समस्तौ; तस्मात्, एतस्मादित्यर्थः । पूर्वपक्षशङ्कापरं "परमतः" इत्यादिसूत्रम्; अन्यानि सिद्धान्तसूत्राणि । तेषामर्थो भाष्ये विस्तरेणानुसन्धेयः । [5]"एष सेतुर्विधरणः" इत्यादौ सेतुशब्दः असंकरकरत्वार्थः[8]; [6]"अमृतस्यैष सेतुः" इत्यपि स्वयमेव स्वस्य प्राप्कः इत्यर्थः ।

---

* २०८ पुटादारभ्य २४९ पुटपर्यन्तम् ।

---

१. इत्यादिभिः—पा॰
२. परतरत्वम्—पा॰
३. स्वरूपेण च—पा॰
४. अजायमानत्वम् परमार्थः—पा॰
५. प्रतिपत्तेः—पा॰
६. पक्षत्रयम्, पूर्वपक्षत्रयम्—पा॰
७. मतमिति क्वचिन्न दृश्यते ।
८. असंकरत्वार्थः—पा॰

1. ब्र. सू. १-१-२.
2. ब्र. सू. १-४-२३.
3. ब्र. सू. ३-२-३०.
4. ब्र. सू. ३-२-३१.
5. बृ. उ. ६-४-२२.
6. मु. उ. २-२-५.

[1] "बुद्ध्यर्थः पादवत्", [2] "स्थानविशेषात् प्रकाशादिवत्", [3] "उपपत्तेश्च", [4] "तथाऽन्यप्रतिषेधात्", [5] "अनेन सर्वगतत्वमायामशब्दादिभ्यः" [1]इति सूत्रकारः स्वयमेव निराकरोति[2] ।

मानवे च शास्त्रे:— [6] "प्रादुरासीत्तमोनुदः", [7] "सिसृक्षुः विविधाः प्रजाः", [8] "अप एव ससर्जादौ [3]तासु वीर्यमपासृजत्", [9] "तस्मिन्

---

[10] "चतुष्पाद्ब्रह्म", [11] "षोडशकलम्" इत्यादिपरिच्छेदः अनुसंधानार्थः, व्यापिनः आलोकस्य[4] विनियोगाय वातायनादिपरिच्छेदवत् । [12] "ततो यदुत्तरतरम्" इत्यादयः पूर्वमेव व्याख्याता इति, न जगत्कारणादन्यस्य प्राप्यत्वमित्यर्थः । पूर्वं श्रुतौ[5] चतुर्मुखस्य परमकारणत्वशङ्का अपास्ता[6] ॥

अथ उपबृंहणे चतुर्मुखकारणत्वशङ्का निराक्रियते मानवे च इति । "प्रादुरासीत्तमोनुदः" इति । [13] "यत्तत्प्रोक्तं[7] गुणसाम्यं प्रधानं, तत्र विप्राः प्रवदन्ते[8]ऽनिरुद्धम्" इत्यनिरुद्धः अव्यक्ताधिष्ठाता "प्रादुरासीत्" इति दर्शयितुम्, चतुर्मुखोत्पत्तेः पूर्वम्[9] अण्डकारणत्वम्, प्रेरकत्वं च चतुर्मुखस्यानुपपन्नमिति दर्शयितुं च "प्रादुरासीत्तमोनुदः" इति वाक्यमुपात्तम् । सिसृक्षुः विविधाः प्रजाः । सृज्यस्य चतुर्मुखस्य स्वसृष्टौ सिसृक्षुत्वानुपपत्त्या न तस्य परमकारणत्वमित्यभिप्रायः ।

१. इत्यादि स्वयमेव—पा०
२. निराकरोतीति—पा०
३. तस्मिन्—पा०
४. आकाशस्य—पा०
५. श्रुतौ च—पा०
६. परास्ता—पा०
७. यत्प्रोक्तम्—पा०
८. प्रवदन्त्यनिरुद्धम्—पा०
९. अण्डकारणत्वं चतुर्मुख, अण्डकारणत्व-प्रेरकत्वं च चतुर्मुख, अण्डकारणं तत्प्रेरकत्वं च चतुर्मुख अण्डकारण-तत्प्रेरणं च [क्वचि]—पा०

1. ब्र. सू. ३-२-३२.
2. ब्र. सू. ३-२-३३.
3. ब्र. सू. ३-२-३४.
4. ब्र. सू. ३-२-३५.
5. ब्र. सू. ३-२-३६.
6. मनुस्मृ. १-६.
7. मनुस्मृ. १-७.
8. मनुस्मृ. १-८.
9. मनुस्मृ. १-९.
10. छा. उ. ३-१८-२.
11. प्र. उ. ६-१.
12. श्वे. उ. ३-१०.
13. पाञ्चरात्रम्

जज्ञे स्वयं ब्रह्मा" इति, ब्रह्मणो जन्मश्रवणात् [1]क्षेत्रज्ञत्वमेव अवगम्यते; तथा च स्रष्टुः परमपुरुषस्य, [2]तद्विसृष्टस्य च ब्रह्मणः [1]"अयनं तस्य ताः पूर्वं, तेन नारायणः स्मृतः", [2]"तद्विसृष्टः स पुरुषः लोके ब्रह्मेति कीर्त्यते" इति नामनिर्देशाच्च[3] ॥

"अप एव ससर्जादौ", "तस्मिन् जज्ञे स्वयं ब्रह्मा" इति वचनद्वयम् "अण्डोत्पन्नचतुर्मुखस्य [4]अण्डकारणत्वस्रष्टृत्वानुपपत्त्या पूर्वश्लोकस्य स्वयम्भूशब्दोऽपि नारायणपरः—इत्यभिप्रायेणोपात्तम् । जन्मश्रवणात् इति । क्षेत्रज्ञत्वापवादकस्य अवतारस्वरूपत्वस्य अश्रवणे[5] सति उच्यमानं जन्म, स्वव्यापककर्मसंबन्धापेक्षकत्वात्[6] क्षेत्रज्ञत्वसाधकम् इत्यभिप्रायः ॥

ईश्वरेण स्वरूपैक्याद्ब्रह्मणो जन्म, [7]परध्यानादिकर्म च लीला इति चेत्, इन्द्रेऽपि तथा किं न स्यात् । "जन्मकर्मणोः लीलात्वात्[8] स्वरूपैक्यम्, स्वरूपैक्यात् जन्मकर्मणोः लीलात्वम्" इत्यन्योन्याश्रयः स्यात् इति चेत्, चतुर्मुखादीनामपि तुल्यम् । परमपुरुषस्य उत्तरनारायणे अवतारस्वरूपं जन्म इति प्रतिपादितम् । तदेव चतुर्मुखजन्मनोऽवतारस्वरूपत्वे प्रमाणमिति चेत्, इन्द्रजन्मनः तथात्वे तदेव प्रमाणं किं न स्यात्? प्रागुक्तान्योन्याश्रयणात् इति चेत्, चतुर्मुखेऽपि तुल्यम्—इत्याद्यनुसन्धेयम् ॥

चतुर्मुखस्य परमकारणत्वानुपपत्तिं तत्प्रकरणिकग्रन्थेनोपपादयति तथा च इति ॥

1. तत्क्षेत्रज्ञत्वम्, तस्य क्षेत्रज्ञत्वम्—पा०
2. तत्सृष्टस्य—पा०
3. नामनिर्वचनाच्च—पा०
4. अण्डकारणतत्स्रष्टृत्वानुपपत्त्या, अण्डकारणत्वानुपपत्त्या—पा०
5. रूपत्वाश्रवणे—पा०
6. संबन्धाक्षेपकत्वात्—पा०
7. जन्मपरं ध्यानादिकर्म—पा०
8. लीलारूपत्वात्—पा०

1. वि. पु. १-४-६.
2. मनुस्मृ. ११.

तथा[1] वैष्णवे पुराणे, हिरण्यगर्भादीनाम्, भावनात्रयान्वयात् अशुद्धत्वेन शुभाश्रयत्वानर्हत्वोपपादनात् क्षेत्रज्ञत्वं निश्चीयते ॥

भावनाकर्मकार्थनिर्णायकत्वेन[2] श्रीविष्णुपुराणवचनमाह[3] तथा इति । भावनात्रयान्वयात् इति । अनुष्ठेयविषयः आन्तरप्रयत्नः -- भावना; सा त्रिविधा; यथा:—

[1]"त्रिविधा भावना भूप! विश्वमेतन्निबोधताम् ।
[4]कर्माख्या ब्रह्मसंज्ञा[5] च तथा चैवोभयात्मिका ॥
कर्मभावात्मिका ह्येका, ब्रह्मभावात्मिकाऽपरा ।
उभयात्मिका तथैवान्या, त्रिविधा भावभावना ॥
सनन्दनादयो ब्रह्मभावभावनया युताः ।
कर्मभावनया चान्ये देवाद्याः स्थावरा चराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ।
अधिकारबोधयुक्तेषु विद्यते भावभावना ।
अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ॥" इति ॥

"विश्वमेतत्—त्रिविधा भावना; भावनात्रयान्वितम्" इत्यर्थः । तां त्रिविधां भावनां निबोध । भावना[6]त्रयच्छेदकसंज्ञया निर्दिशति कर्माख्या इति । कर्माख्या कर्मभावनेत्यर्थः । एकस्यैव संज्ञात्रयवत्त्वशङ्काव्यावृत्त्यर्थमाह कर्मभावात्मिका इति । [7]भावभावना । [2]"भावार्थाः कर्मशब्दाः तेभ्यः[8] क्रियाः प्रतीयेरन्"

१. तथा च—पा०
२. निर्णायकत्वेन—पा०
३. श्रीविष्णुपुराणमाह—पा०
४. कर्माख्या—पा०
५. ब्रह्माख्या—पा०
६. भावनात्रयच्छेदक—पा०
७. भावो भावना, भावना—पा०
८. तेभ्यो ये प्रतीयेरन्, तेभ्यः क्रिया प्रतीयते—पा०

1. वि० पु. ६-७-४८.
2. पू. मी. सू. २-१-१.

इति वचनात्, भावः—अनुष्ठेयः; [1]अतः अनुष्ठेयविषया [2]भावना, आन्तर उद्योगः —भावभावना। सा, कर्मभावात्मिका — कर्मरूपानुष्ठेयविषया, ब्रह्मभावात्मिका — [3]उपासनरूपानुष्ठेयविषया, उभयात्मिका — कर्मोपासनरूपोभयानुष्ठेयविषयेति त्रिविधा — इत्यर्थः।

सनन्दनादयः इति। [4]ब्रह्मभावभावनया युताः। उपासनरूपानुष्ठेयविषयभावनान्विताः इत्यर्थः।

अत्र ब्रह्मशब्दः उपासनरूपज्ञानपर्यायः, [1]"आगमोत्थं विवेकाच्च [5]द्विधा ज्ञानं तथोच्यते। शब्दब्रह्मागममयं परं ब्रह्म विवेकजम्", [2]"द्वे ब्रह्मणी वेदितव्ये", [3]"द्वे विद्ये वेदितव्ये वै इति च" इति, ब्रह्मशब्दस्य ज्ञानविद्याशब्दनिर्दिष्टागमजन्योपासनरूपज्ञानद्वयपर्यायत्वेन भगवता पराशरेणैव व्याख्यातत्वात्।

स्थावरा[6] चराः इति। स्थावरशब्देन तदभिमानिदेवता विवक्षिता॥

सनन्दनादीनां [7]समाधिविरोधिसकलकर्मक्षयात् समाधिनिष्पत्तिपौष्कल्येन अनवरतब्रह्मानुसंधानैकतानत्वात् न कर्मानुष्ठानावसरः, प्रधानाविरोधेन हि अङ्गानुष्ठानम्? तस्मात् ते ब्रह्मभावनया युताः। हिरण्यगर्भादयः — जगन्निर्वाहाधिकृतत्वात्, कदाचित्कर्मानुष्ठानम्, कदाचिदुपासनं च इत्युभयभावनान्विताः; इतरे देवमनुष्याद्याः — कर्मभावनया अन्विताः।

१. अतः — एतन्न दृश्यते क्वचित्।
२. अनुष्ठेयविषयभावना—पा०
३. उपादानरूपानुष्ठेय—पा०
४. ब्रह्मभावनया—पा०
५. द्वेधा—पा०
६. स्थावराः पराः—पा०
७. समाधिना विरोधि—पा०

1. वि. पु. ६-५-६१.
2. वि. पु. ६-५ ६४.
3. वि. पु. ६-५ ६५.

सनन्दनादयः हिरण्यगर्भादयः, देवाद्याः इत्यादिशब्दस्य[1] को विषयः ? " आदिशब्दस्यासंकोचात् मुक्तेष्वपि भावनात्रयप्रसंगः इति शङ्काव्यावृत्त्यर्थं प्रयोजकमाह अधिकार इति । [1] " कर्मण्यैश्वर्यबोधोऽधिकारः " इत्यधिकार-लक्षणम्; स्वप्रयोजनसाधनत्वात् कर्मणि स्वकीयत्वबुद्धिरधिकारः इत्यर्थः । ' अधिकार-बोधयुक्तेषु ' -- अधिकारस्वरूपबोधयुक्तेषु, अनुष्ठेयविषयस्वकीयत्वबुद्धियुक्तेष्वित्यर्थः ।

मुमुक्षोः उपासने स्वकीयत्वबुद्धिः, बुभुक्षोः कर्मणि स्वकीयत्वबुद्धिः, नाधिकारबोधश्च केष्वित्यत्राह अक्षीणेषु इति । विशेषज्ञानकर्मसु । विशेष-ज्ञानम् -- देवोऽहम्, मनुष्योऽहमित्यादिज्ञानम्; विशेषज्ञाने तद्धेतुषु च कर्मसु विद्यमानेषु अधिकारबोधः संभवति, तद्युक्तेषु भावनात्रयान्वय इति, न मुक्तेषु प्रसंगः इत्यर्थः ।

एवम्, " हिरण्यगर्भादीनां [3]भावनात्रयान्वयेन अशुद्धत्वात् मुमुक्षुभिस्ते अनु-पास्याः " इति श्रीविष्णुपुराणे प्रतिपादनात् क्षेत्रज्ञत्वनिश्चयः इत्यर्थः ॥

एवम्, श्रुतिवाक्येषु स्वपक्षसाधनप्रमाणोपन्यास -- परमतशङ्कानिरासौ कृतौ । तथा, उपबृंहणेष्वपि पूर्वं स्वपक्षसाधनवचनान्युपन्यस्य, परमतशङ्कानिरासश्च कृतः । एवम्, प्रथमश्लोकोक्तं " विष्णवे " इति पदं विवृतं भवति ।

उक्तार्थस्थेम्ने [4]सिद्धार्थे व्युत्पत्त्यभाववादं[5] व्युदस्यति । तन्निरासश्च सर्व-वेदान्त्यभिमतः ॥

---

१. शब्दस्यैको विषयः--पा०
२. प्रयोजनमाह--पा०
३. भावनात्रयेणान्वयेनाशुद्धत्वात्--पा०
४. सिद्धे व्युत्पत्त्यभाव--पा०
५. व्युत्पत्त्यभावं व्युदस्यति--पा०

1. लक्षणवाक्यम्

यदपि कैश्चिदुक्तम् :– [1]"सर्वस्य [1]शब्दजातस्य विध्यर्थवाद-मन्त्ररूपस्य कार्याभिधायित्वेनैव प्राामाण्यं वर्णनीयम्; व्यवहारादन्यत्र, शब्दस्य[2] बोधकत्वशक्त्यवधारणासंभवात्, व्यवहारस्य च[3] कार्यबुद्धि-मूलत्वात्[4] कार्यरूप एव [5]शब्दार्थः; न परिनिष्पन्ने[6] वस्तुनि शब्दः प्रमाणम्" इति ॥

---

तत्र पूर्वपक्षमाह [7]यदपि इत्यादिना । अर्थवादादिषु सिद्धार्थपरत्व-व्यावृत्त्यर्थं 'सर्वस्य' इत्युक्तम् । विधिभागस्य तावत् कार्यपरत्वं सुव्यक्तम् । अर्थवाद-भागस्य विधेयस्तुतिपरत्वेन, मन्त्रभागस्य अनुष्ठेयार्थप्रकाशनपरत्वेन च तयोः कार्यपरत्व-मित्यभिप्रायः । कुत इत्यत्राह व्यवहारात् इति । व्यवहारः प्रवृत्तिः, "गामानय" इति प्रयोजकवृद्धप्रयुक्तवाक्यश्रवणसमनन्तरभाविनी प्रयोज्यवृद्धस्य प्रवृत्तिः इत्यर्थः ।

सामान्येन, शब्दस्य कार्यरूपोऽर्थ इति निश्चिते, "[8]आवापोद्वापभेदेनानु-वृत्तशब्दस्य अनुवृत्तमर्थम्, व्यावृत्तस्य[9] व्यावृत्तमर्थं च जानाति" इति प्रातिस्विक-व्युत्पत्तिः स्यात्; विभक्त्यर्थव्युत्पत्तिश्च तथा । [2]"पुत्रस्ते जातः", [3]"नायं सर्पो रज्जुरेषः[10]" इत्यादिवाक्येषु हर्ष—भयनिवृत्तिवाचित्वावगमेऽपि हेतुविशेष-निर्धारणायोगात् न तत्र सिद्धार्थविषया व्युत्पत्तिः । अस्य शब्दस्य अयमर्थ इति

---

१. सर्वशब्दजातस्य, सर्वस्य वेद-जातस्य—पा०
२. पदस्य—पा०
३. चः न दृश्यते क्वचित् ।
४. कार्यसिद्धिमूलत्वात्—पा०
५. वेदार्थः—पा०
६. परिनिष्पन्नवस्तुनि, परिनिष्पन्ने एव वस्तुनि—पा०
७. यद्यपीत्यादिना—पा०
८. आवापोद्वारभेदेन—पा०
९. व्यावृत्तस्य शब्दस्य व्यावृत्तम्, व्यावृत्तस्य च व्यावृत्तम्, व्यावृत्तस्य च व्यावृत्तमर्थं च—पा०
१०. रज्जुरेवैषः—पा०

1. मीमांसा. १.
2. मीमांसा. १-१-२. सू.
3. लौकिकवाक्यम्.

अत्रोच्यते :— सर्वत्र वाक्यव्यवहार[1] एव "शब्दानामर्थबोधकत्व[2]-शक्त्यवधारणं करोति; 'किमियं राजाज्ञा? सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणम्" अत्यन्तसुकरम् ।

तथा हि :— केनचित् हस्तचेष्टादिना "अपवरके दण्डः स्थितः" इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित् तदज्ञाने प्रवृत्तः, 'अपवरके दण्डः स्थितः' इति शब्दं प्रयुङ्क्ते । मूकवत् हस्तचेष्टाभिज्ञं[6] जानन् पार्श्वस्थोऽन्यः

---

व्युत्पत्तिश्च न प्रथमं संभवति; व्युत्पन्नकतिपयशब्दस्यैव हि सा? तस्मात् प्रथम व्युत्पत्तिः व्यवहारादेवेति, सा कार्यार्थविषया; तत्र वाक्यान्तरेष्वपि पथमव्युत्पत्तौ कार्यपरतया अवगतकतिपयशब्दसमभिव्याहृतपदान्तरेषु तत्समभिव्याहारबलात् कार्यपरत्वं निश्चिनोति —इत्याद्यभिप्रेतम् [7]विस्तरतया अनुक्तम् ॥

परिहरति अत्रोच्यते इति । [8]किमियं राजाज्ञा इति । न हि प्रामाणिकमित्यभिप्रायः । अत्यन्तसुकरम् इति । याहच्छिकव्युत्पत्तौ बुद्धिपूर्वक-व्युत्पत्तौ च सुकरमिति भावः ।

तदुपपादयति तथा हि इति । प्रथमं याहच्छिकव्युत्पत्तेः सिद्धार्थविषयत्वं दर्शयति केनचित् इति । हस्तचेष्टादिज्ञत्, तदज्ञश्च द्वौ पुरुषौ, चेष्टादिज्ञो[9] व्युत्पित्सुः एकः, दण्डापेक्षी चैकः इति, चत्वारः पुरुषाः । व्युत्पित्सोः हस्तचेष्टादि[10]-

---

१. व्यवहारादेव—पा॰
२. सर्वशब्दानाम्—पा॰
३. अर्थबोधनशक्त्यवधारणम्—पा॰
४. कैयं राजाज्ञा, राज्ञामाज्ञा—पा॰
५. बोधकत्वशक्त्यवधारणम्—पा॰
६. इमामिति क्वचिन्न दृश्यते ।
७. अतिविस्तरतयाऽनुक्तम्, विस्तरादनुक्तम्—पा॰
८. कैयं राजाज्ञा—पा॰
९. चेष्टाभिज्ञः—पा॰
१०. व्युत्पत्तिर्हस्तचेष्टादि—पा॰

प्रागव्युत्पन्नोऽपि[1], एतस्यार्थस्य बोधनाय 'अपवरके दण्डः स्थितः' इत्यस्य[2] शब्दस्य प्रयोगदर्शनात्, 'अस्य अर्थस्य — अयं शब्दो बोधकः' इति जानाति — इति, किमत्र दुष्करम् ॥

तथा बालः — "तातोऽयम्[3], इयमम्बा[4], अयम् मातुलः, अयम् मनुष्यः, अयम् मृगः, चन्द्रोऽयम्, अयं च सर्पः" इति मातापितृप्रभृतिभिः शब्दैः, शनैः शनैः, अङ्गुल्या[5] निर्देशेन, तत्र तत्र बहुशः शिक्षितः, तैरेव शब्दैः, तेष्वर्थेषु, स्वात्मनश्च बुद्ध्युत्पत्तिं[6] दृष्ट्वा, तेष्वर्थेषु तेषां शब्दानाम्,

ज्ञानस्य[7] कतिपयव्युत्पत्यपेक्षा नास्तीति दर्शयितुम् 'मूकवत्' इत्युक्तम् । आवापो-द्धारभेदेन शब्दविशेषाणामर्थविशेषव्युत्पत्तिः अत्रापि तुल्या ॥

अथ बुद्धिपूर्वव्युत्पत्तिरेव लोके प्रचुरेति, तां दर्शयति तथा[8] इति । तातादयः संबन्धिशब्दाः; मनुष्यादयः असंबन्धिशब्दाः । बालानां प्रथमं संबन्धि-शब्दव्युत्पत्तिर्जायत इति लोकसिद्धम् । सा च बुद्धिपूर्वशिक्षयैव[9] उपपद्यते । न हि प्रयोजकवृद्धः व्युत्पित्सुप्रतियोगिकमातुलादिविषये मातुलादिशब्दं प्रयुङ्क्ते; अपि तु स्वप्रतियोगिकविषय एव प्रयुङ्क्ते । अतः, बालस्य स्वप्रतियोगिकमातुलादिविषये व्युत्पत्तिर्जायमाना वृद्धव्यवहारान्नोपपद्यते इति, बुद्धिपूर्वकव्युत्पत्तेः प्रथमभावित्वमभ्यु-पेत्यमिति, संबन्धिशब्दप्रयोगाभिप्रायः । तस्मिन्नेवार्थे तस्यैव शब्दस्य अङ्गुलिनिर्देश-पूर्वकं बहुशः प्रयोगेन बुद्धौ वासितत्वात्, तत्तच्छब्दप्रयोगे[10] तत्तदर्थबुद्धिर्जायते[11];

१. अपिर्न दृश्यते क्वचित् ।
२. अस्येति क्वचिन्न दृश्यते ।
३. तातोऽयमम्बैषाऽयम्मातुलः—पा०
४. इयम्माता मातुलः—पा०
५. हस्तचेष्टानिर्देशेन—पा०
६. बुध्या व्युत्पत्तिम्—पा०
७. चेष्टादिज्ञस्य—पा०
८. यथेति—पा०
९. बुद्धिपूर्वकशिक्षयैव—पा०
१०. तत्तत् इति क्वचिन्न ।
११. तदर्थबुद्धिः—पा०

'अङ्गुल्या निर्देशपूर्वकप्रयोगः'[१][२], संबन्धान्तराभावात्, संकेतयितृपुरुषाज्ञानाच्च बोधकत्वनिबन्धनः इति, क्रमेण निश्चित्य, पुनरपि 'अस्य शब्दस्य अयमर्थः' इति पूर्ववृद्धैः[३] शिक्षितः, सर्वशब्दानामर्थमवगम्य[४], स्वयमपि [५]सर्वं वाक्यजातं प्रयुङ्क्ते ।

तस्मात् 'अस्यार्थस्य अयं बोधकः' इत्यभिप्रायेण अङ्गुलिनिर्देशः कृत इति बालो जानाति—इत्यर्थः । संबन्धान्तराभावात् इति । प्रत्यक्षं संबन्धसत्तया ज्ञापकम् ; लिङ्गशब्दौ ज्ञाततया ज्ञापकौ ; तत्र लिङ्गं —जन्यजनकभावादिसंबन्धान्तर[६]ज्ञानसापेक्षं[७] ज्ञापकम् ; शब्दस्य तु [८]बोध्यबोधकभावसंबन्धो ज्ञातव्यः ; अतः बोध्यबोधकभावातिरेकेण संबन्धाभावात् इत्यर्थः । एतस्य व्युत्पादकोऽपि पुरुषः कार्यार्थे[९] व्युत्पत्तिमानिति न वक्तव्यम् ; सिद्धार्थे व्युत्पत्तिमद्भिः बालैः शब्दप्रयोगदर्शनात्, तद्व्युत्पादको वाक्यप्रयोक्ता पुरुषोऽपि सिद्धार्थे व्युत्पत्तिमानिति दृष्टप्रकारेण अभ्युपगम्यताम्—इत्यभिप्रायेण 'स्वयमपि सर्वं[१०] वाक्यजातं प्रयुङ्क्ते' इत्युक्तम् । एवं व्युत्पत्तौ न ह्यभिहितान्वयप्रसङ्गः ; प्रातिस्विकव्युत्पत्तेः अन्विताभिधानव्युत्पत्त्युपयोगित्वात्[११] ; यथा, कार्यार्थव्युत्पत्तिपक्षे आवापोद्धाररूपेण पाश्चात्यप्रातिस्विकपदव्युत्पत्तिः[१२] न अन्विताभिधानविरोधिनी, अपि तु तदुपयोगिन्येव, तथा इत्यर्थः । अन्विताभिधानपक्षाभ्युपगमश्च

१. अङ्गुलिनिर्देश, अङ्गुल्यादिनिर्देश—पा०
२. पूर्वकं प्रयोगः—पा०
३. पूर्ववृद्धशिक्षितः, पूर्वशिष्टैः शिक्षितः-पा०
४. अर्थमित्थमवगम्य—पा०
५. सर्ववाक्यजातम्—पा०
६. सम्बन्धान्तरसापेक्षम्—पा०
७. सापेक्षत्वज्ञापकम्—पा०
८. बोध्यबोधकभाव एव सम्बन्धः—पा०
९. कार्यार्थेषु—पा०
१०. सर्ववाक्यजातम्—पा०
११. उपयोगात्—पा०
१२. प्रातिस्विकव्युत्पत्तिः—पा०

एवमेव, सर्वपदानां [1]स्वार्थाभिधायित्वम्, संघातविशेषाणां च यथावस्थितसंसर्गविशेषबोधकत्वं[2] च जानाति इति, "कार्यार्थ एव[3] व्युत्पत्तिः" इत्यादिनिर्बन्धो निर्निबन्धनः[4] ।

अतः परिनिष्पन्ने वस्तुनि शब्दस्य बोधकत्वशक्यत्वावधारणात्,

---

कल्पनालाघवार्थः[5]; अभिहितान्वयपक्षे[6] पदानां स्वार्थाभिधानशक्तिः, तत्रापि यथा पदार्थानां परस्परान्वयबोधनार्हत्वं भवति, तथा, स्वार्थबोधनशक्तिः, तत्तत्पदार्थानां च परस्परान्वयबोधनशक्तिश्च कल्पनीया; अन्विताभिधानपक्षे तु पदानां स्वार्थबोधनशक्तेरेव अन्वयपर्यन्तत्वमात्रमेवेति न कल्पनागौरवमिति ॥

एवम्, यादृच्छिकी वा, बुद्धिपूर्विका वा आद्या व्युत्पत्तिः सिद्धार्थविषयाऽस्तु, ततः किमित्यत्राह एवमेव इति । सर्वपदानाम् । [7]लौकिकवैदिकाविभागेन इत्यर्थः । यथावस्थितसंसर्गविशेषबोधकत्वं च इति । सिद्धार्थपरं वाक्यं सिद्धपरमेव स्यात्, कार्याभिधायिवाक्यं कार्यपरं स्यात्; न तु सिद्धार्थपराणां कार्यार्थपरत्वं कल्पनीयम् इति भावः । इत्यादिनिर्बन्धः इति । आदिशब्देन सर्वशब्दानां कार्यपरत्वम्, कृत्स्नस्य वेदस्य[8] कार्याभिधायित्वं च गृह्यते । सिद्धार्थे व्युत्पत्तिसंभवात् कार्यार्थ एव व्युत्पत्तिः इत्यादिनिर्बन्धोऽनुपपन्नः — इत्युक्तम् ।

ततः किमित्यत्राह अतः इति ।

---

१. स्वार्थबोधकत्वं पदसंघात, स्वार्थावबोधकत्वं संघात—पा०
२. संसर्गविशेषवाचित्वं च—पा०
३. कार्य एव—पा०
४. निर्बीजः—पा०
५. लाघवार्थम्—पा०
६. अभिहितान्वयपक्षे—क्वचिदेतन्न दृश्यते ।
७. लौकिकवैदिकविभागेन—पा०
८. वेदस्येति क्वचिन्न दृश्यते ।

सर्वाणि वेदान्तवाक्यानि सकलजगत्कारणं सर्वकल्याणगुणाकरं उक्तलक्षणं ब्रह्म बोधयन्त्येव ॥

अपि च कार्यार्थ एव व्युत्पत्तिरस्तु, वेदान्तवाक्यानि उपासनविषयकार्याधिकृतविशेषणभूतफलत्वेन[१], दुःखासंभिन्नदेशविशेषरूपस्वर्गादिवत्, [1]रात्रिसत्रप्रतिष्ठादिवत्[२], [2]अपगोरणशतयातनासाध्यसाधनभाववच्च[३], कार्योपयोगितयैव[४] सर्वं बोधयन्ति।

तथा हि:—[3]"ब्रह्मविदाप्नोति परम्" [५]इत्यत्र ब्रह्मोपासनविषय-

---

एवम्, सिद्धार्थे आद्या व्युत्पत्तिरुक्ता; तदभावेऽपि ब्रह्मणस्सिद्धिमुपपादयति अपि च इति। [६]विशिंषन् विषयः अवच्छेदकः, कार्यस्यावच्छेदकाः — यागदानादयः; अत्र उपासनं विषयः — उपासनावच्छिन्नकार्याधिकृतः; तत्राधिकारी — तत्र तादर्थ्यबोधवान्[७]; तस्य विशेषणं फलम्। फलत्वेन सिद्धौ उदाहरणत्रयं दर्शयति:— विधिवाक्यप्रतिपन्नस्वरूपस्य फलस्यापि अर्थवादोक्तविशेषणत्वाभ्युपगमे[८] उदाहरणं 'दुःखासंभिन्न' इत्यादि। फलस्वरूपस्यैव अर्थवादप्रतिपन्नस्य अभ्युपगमे उदाहरणम् — रात्रिसत्रप्रतिष्ठा[९]; न केवलं विहितफलस्यैव, विधेयविरोधिफलस्यापि अर्थवादोक्तस्य अङ्गीकारे उदाहरणम् — अपगोरणशतयातनासाध्यसाधनभावः।

उपासनवाक्यं किम्? तत्र ब्रह्मणः फलत्वं कथम्? इत्यत्राह तथा हि

---

१. विशेषणफलत्वेन—पा॰
२. प्रतिष्ठावत्—पा॰
३. भावादिवच्च—पा॰
४. एवकारः क्वचिन्न दृश्यते।
५. इति 'तस्मिन्यदन्तस्तदुपासितव्य' मित्यत्र—पा॰
६. विरक्षन् विषयः अवच्छेदकः, विशिष्टविषयकः अवच्छेदकः—पा॰
७. तादर्थ्यबोधकं वाक्यं विधिः, तस्य विशेषणं फलम्—पा॰
८. विशेषणाभ्युपगमे—पा॰
९. प्रतिष्ठानं केवलं विहित—पा॰

1. मीमांसा. ४-३-६.
2. मीमांसा. ३-४-१०.
3. तै. उ. आ. २-१-१०.

कार्याधिकृतविशेषणभूतफलत्वेन ब्रह्मप्राप्तिः श्रूयते, "परप्राप्तिकामो ब्रह्म-विद्यात्" इति। अत्र प्राप्यतया प्रतीयमानं ब्रह्मस्वरूपम्, तद्विशेषणं च सर्वं कार्योपयोगितयैव सिद्धं भवति। तदन्तर्गतमेव, [1]जगतः स्रष्टृत्वम्, संहर्तृत्वम्, आधारत्वम्, [2]अन्तरात्मत्वम्-इत्याद्युक्तम्, अनुक्तं च [3]सर्वमिति, न किञ्चिदनुपपन्नम्॥

एवं च सति, मन्त्रार्थवादगता[4] ह्यविरुद्धाः, अपूर्वाश्च अर्थाः सर्वे विधिशेषतयैव सिद्धा भवन्ति[5]।

---

इति। अस्मिन् वाक्ये न विधिश्रवणमिति शङ्कायां [6]फलितार्थमाह परप्राप्ति इति। फलसंबन्धश्रवणे विधिकल्पनस्य न्याय्यत्वादिति भावः। स्वर्गविशेषणदुःखासंभिन्न-त्वादिवत्, ब्रह्मस्वरूपेण सह तद्विशेषणस्यापि सिद्धिः [7]इत्याह अत्र इति। ब्रह्म-स्वरूपं, तद्विशेषणं च सिद्ध्यतु; ततः किमित्यत्राह तदन्तर्गतम् इति। [8]तदन्तर्गतम्-ब्रह्मतद्विशेषणान्तर्गतमित्यर्थः। एवम्, औपनिषदोपासनविधीनां फलत्वेन ब्रह्मणः सिद्धिरुक्ता॥

अथ सर्वविधिसाधारणोक्ति[9]रुच्यते एवं च इति। अर्थवादानां स्तावकत्व-सिद्ध्यर्थं स्वार्थे तात्पर्यमत्रोच्यते। एवं च सति। विध्युपयोग्यर्थेषु अभ्युपगन्तव्येषु सत्सु-इत्यर्थः। प्रमाणान्तरविरुद्धत्वे तत् प्रतिपादयितुं न शक्नोति शास्त्रमिति,

---

१. जगत्स्रष्टृत्वम्-पा०
२. जगदन्तरात्मत्वाद्युक्तमनुक्तं च-पा०
३. सर्वं सिद्धमिति-पा०
४. अर्थवादगता अप्यविरुद्धाः-पा०
५. भवन्तीति-पा०
६. फलितमर्थमाह-पा०
७. इत्यत्राह-पा०
८. तदन्तर्गतमिति क्वचिन्न दृश्यते।
९. साधारणयुक्तिरुच्यते-पा०

यथोक्तं द्रमिडभाष्ये :—

[1] "'ऋणं हि वै जायते' इति श्रुतेः — इत्युपक्रम्य, यद्यप्यवदानस्तुतिपरं वाक्यम्, तथाऽपि नासता स्तुतिरुपपद्यते" इति ।

एतदुक्तं भवति :— सर्वो[1] ह्यर्थवादभागः[2], देवताराधनभूतयागादेः साङ्गस्य [3]आराध्यदेवतायाश्च अदृष्टरूपान् गुणान् सहस्रशो वदन्, कर्मणि [4]प्राशस्त्यबुद्धिमुत्पादयति; तेषामसद्भावे [5]प्राशस्त्यबुद्धिरेव न स्यात् इति, कर्मणि [6]प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयति इति ।

---

'अविरुद्धाः[7]' इत्युक्तम् । प्रमाणान्तरसिद्धत्वेऽपि अनुवादः स्यादिति 'अपूर्वाश्च' इत्युक्तम् ।

विध्युपयोगित्वेन अर्थवादानामपि स्वार्थे प्रामाण्ये द्रमिडाचार्यग्रन्थमाह यथोक्तम् इति ।

असद्गुणकथनं [8]हि स्तुतिः? तत् कथमसता[9] स्तुत्यनुपपत्तिः? इत्यत्राह एतदुक्तम् इति । अयं न्यायः—न केवलम् अवदानस्तुतिमात्रविषयः, अपि तु, सर्वार्थवादसाधारण इति च दर्शयितुम् 'एतदुक्तं भवति' इत्यारम्भः । 'अदृष्टरूपान् गुणान्' इत्यनेन अनुवादरूपत्वं, बाधितत्वं च व्यावृत्तम्; आराध्यदेवतास्तुतिद्वारा कर्मणः स्तुत्या च कर्मणि प्ररोचनां कुर्वन्तः अर्थवादाः, [10]गुणासद्भावे तत्कृतोत्कर्षोऽपि नास्तीति — कर्मणि प्ररोचनां जनयितुं न शक्ताः स्युः — इत्यर्थः ।

---

१. सर्वोऽप्यर्थवाद—पा०
२. अर्थवादः देवताराधन—पा०
३. आराध्यभूतदेवतायाः—पा०
४. प्रशस्तबुद्धिम्—पा०
५. प्रशस्तबुद्धिः—पा०
६. प्रशस्तबुद्ध्यर्थम्—पा०
७. अविरुद्धार्थ इत्युक्तम्—पा०
८. हिर्न दृश्यते क्वचित् ।
९. असतां स्तुत्यनुपपत्तिः, असतः स्तुत्यनुपपत्तिः—पा०
१०. तद्गुणासद्भावे—पा०

1. द्रमिडभाष्यम् ।

**अनयैव दिशा, [1]सर्वमन्त्रार्थवादगता ह्यर्थाः सिद्धाः ॥**

**अपि च कार्यवाक्यार्थवादिभिः, "किमिदं कार्यत्वं नाम" इति**

---

**अनयैव दिशा** इति । विध्यपेक्षितार्थसिद्धिन्यायात्, [2]न 'सता स्तुतिरूपपद्यते' इति न्यायाच्च इत्यर्थः । **मन्त्रार्थवादगताः** इति । अर्थवादवत्[3] मन्त्रगता अर्था अपि सिद्धाः इत्यर्थः । [1]"छागस्य वपाया मेदसः" इति मन्त्रोक्तच्छागः, [2]"पशुना यजेत" इति विधेरपेक्षितत्वात् अभ्युपगतो हि [4]धात्वर्थः ?

स्तुतिपराणामपि मन्त्राणां स्वार्थे तात्पर्यं न चेत्, स्तावकत्वं न सिद्ध्यति ; अनुष्ठेयार्थप्रकाशकत्वमपि मन्त्राणां, स्वार्थे तात्पर्याभावे न सिद्ध्यति ; 'ईदृशदेवताकं कर्म' इति हि तत्प्रकाशनम् ? तच्च देवतास्वरूपादौ तात्पर्यादेव सिद्ध्यति — इत्यर्थः ।

एवम्, सिद्धार्थे व्युत्पत्तिः, तदभावेऽपि[5] विधिशेषतया ब्रह्मणः सिद्धिश्चोक्ता । अथ [6]परोक्तं कार्यमनुपपन्नमित्याह **अपि च** इति । "भावार्थस्य कर्मणोऽपि कृतिसाध्यत्वमस्ति, स्वर्गादेरिष्टत्वमस्ति" इति, तदुभयव्यावर्तकं कृतिप्राधान्यं कृत्युद्देश्यत्वमिति, तृतीयाकारः कार्यस्य अभ्युपगम्यते परैः ; तस्य प्राधान्यादेव कृत्स्नवेदतात्पर्यभूमित्वं च उच्यते ; *उक्तम् — "कार्यमर्थं प्रतिपादयतो वेदस्य प्रामण्यम्" [7]इति — टीका[8] ; "कार्यमर्थं प्रधानतया प्रतिपादयतः[9]" इति — पञ्चिका; [3]"कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते" इति च — तत्प्रकरणम् ; स तृतीयाकारोऽत्र दूष्यते । **किम्** इत्यादि । स्पष्टम् । साध्यत्वदर्शनाय

---

* श्रीभाष्य. श्रुतप्र. जिज्ञासाधिकरणे अधिकरणपूर्वपक्षे ।

---

१. सर्वे मन्त्रार्थवाद—पा०
२. न ह्यसता—पा०
३. अर्थवादमन्त्रगताः—पा०
४. धात्वर्थः — एतन्न दृश्यते क्वचित् ।
५. अपिर्नास्ति क्वचित् ।
६. परमतोक्तम्—पा०
७. इतीति "कार्यमर्थम् ...", इति कार्यं प्रतिपादयतः — पा०
८. 'टीका' — एतन्नास्ति कुत्रचित् ।
९. प्रतिपादयतीति च पञ्चिका—पा०

1. ३ अष्ट. ६ प्र. २३.
2. आर्थिको विधिः ।
3. प्रकरणशालायाम् ।

वक्तव्यम्: — "कृतिभावभाविता, कृत्युद्देश्यता च" इति चेत्, किमिदं कृत्युद्देश्यत्वम्; "यदधिकृत्य कृतिः वर्तते, तत् कृत्युद्देश्यत्वम्"[1] इति चेत्; पुरुषव्यापाररूपायाः कृतेः कोऽयम् अधिकारो नाम? "यत्प्रासीच्छया कृतिमुत्पादयति पुरुषः, तत् कृत्युद्देश्यत्वमिति" चेत्; हन्त! तर्हि [2]इष्टत्वमेव कृत्युद्देश्यत्वम् ॥

अथैवम् मनुषे, "इष्टस्यैव रूपद्वयमस्ति, इच्छाविषयतया स्थितिः, पुरुषप्रेरकत्वं च; [3]तत्र प्रेरकत्वाकारः [4]कृत्युद्देश्यत्वम्" इति। सोऽयं स्वपक्षाभिनिवेशकारितो वृथाश्रमः ॥

---

कृतिभावभविता—इत्युक्तम्। सा स्वर्गादेरप्यस्तीति तद्व्यावृत्त्यर्थं—कृत्युद्देश्यता इत्युक्तम्। [5]तां दूषयितुं पृच्छति किमिदम् इति। परिहरति यदधिकृत्य इति। स्वप्रयोजनसाधनत्वात्। स्वकीयत्वबुद्धि [6]र्ह्यधिकारः? यदधिकृत्य इति। यत्साध्यतया अवलम्ब्य इत्यर्थः। पुरुषबुद्धिरूपोऽधिकारः पुरुषव्यापारकृतेः[7] न संभवति इत्यभिप्रायेणाह पुरुष इति। अत्राह यत्प्रासि इति। कृतिमत्पुरुषेष्टत्वमिति फलितं दूषयति हन्त! तर्हि इति। एवम्, तृतीयाकारस्य परोक्तस्य तयोः [8]अन्यतरात्मकत्वे पर्यवसानम् उक्तम् ॥

पुनः परमतं शङ्कते अथैवम् इति। सोपलम्भं[9] परिहर्तुमुपक्रमते सोऽयम् इति।

---

१. कृत्युद्देश्यम्—पा०
२. कृतिमत्पुरुषेष्टत्वमेव—पा०
३. अत्र—पा०
४. कृत्युद्देश्यमिति, कृत्युद्देश्यत्वमिति चेत्—पा०
५. तम्—पा०
६. हिर्न दृश्यते क्वचित्।
७. व्यापाररूपकृतेः—पा०
८. अन्यतरत्वमत्रानिष्टत्वे पर्यवसानम्, अन्यतरमत्रानिष्टत्वे पर्यवसानम्—पा०
९. सोपालम्भम्—पा०

तथा हि :– इच्छाविषयतया प्रतीतस्य स्वप्रयत्नोत्पत्ति [1]मन्तरेण असिद्धिरेव — प्रेरकत्वम्, तत एव प्रवृत्तेः ।

इच्छायां जातायाम्, इष्टस्य [2]स्वप्रयत्नोत्पत्तिमन्तरेण असिद्धिः प्रतीयते [3]चेत्; ततः चिकीर्षा जायते, ततः प्रवर्तते पुरुषः–इति तत्त्वविदां प्रक्रिया । तस्मात् इष्टस्य कृत्यधीनात्म[4]लाभत्वातिरेकि कृत्युद्देश्यत्वं नाम किमपि न [5]दृश्यते ॥

---

कथं वृथाश्रमः ? इत्यत्राह तथा हि इति । यदा इष्टस्य उपायान्तरेण सिद्धिः, तदा न स्वयं प्रवर्तते, यदा स्वप्रयत्नादपि न सिद्ध्यति, तदाऽपि न प्रवर्तते; यदा स्वप्रयत्नादेव सिद्ध्यति, तदा प्रवर्तते – इति, प्रेरकत्वं नाम कृतिसाध्यत्वान्तर्भूतमित्यर्थः ।

ननु स्वकृतिसाध्यत्वसत्तया न प्रवृत्तिः; अपि तु, तद्ज्ञानादेव प्रवृत्तिरिति, [6]तद्ज्ञातत्वमेव तृतीयाकारः इत्यत्राह इच्छायाम् इति । ज्ञेयमेव आकारत्रयमभ्युपेतं भवता, अस्माकं तु[7] आकारद्वयमेव ज्ञेयम्; तत्र कृतिसाध्यत्वं ज्ञाततया प्रवृत्तिहेतुः, यः तृतीयाकारो ज्ञाततया प्रवृत्तिहेतुरुक्तः त्वया, स एव आकारद्वयान्तर्भूतः इत्युक्तमित्यर्थः । तत्त्वविदां प्रक्रिया इति । [8]न तु अभिनिविष्टानामित्यर्थः । 'तस्मात्' इति निगमयति ॥

---

१. अन्तरेण सिद्धिः–पा०
२. प्रयत्नोत्पत्तिम्, स्वप्रवृत्तिमन्तरेण–पा०
३. इति चेत्–पा०
४. आत्मलाभातिरेकि, आत्मलाभत्वादितरत् कृत्युद्देश्यत्वम्–पा०
५. विद्यते–पा०
६. तद्ज्ञानत्वम्–पा०
७. अस्माकं च–पा०
८ तत्त्वाभिनिविष्टानामित्यर्थः–पा०

[1]अथोच्येत, इष्टताहेतुश्च पुरुषानुकूलता, तत्पुरुषानुकूलत्वं कृत्युद्देश्यत्व[2]मिति[3]; नैवम्[4], पुरुषानुकूलं सुखम् इत्यनर्थान्तरम्; तथा, [5]पुरुषप्रतिकूलं दुःखपर्यायम्; अतः, सुखव्यतिरिक्तस्य कस्यापि पुरुषानुकूलत्वं न संभवति ॥

ननु च, दुःखनिवृत्तेरपि सुखव्यतिरिक्तायाः पुरुषानुकूलता दृष्टा? नैतत्; आत्मानुकूलं सुखम्, आत्मप्रतिकूलं दुःखम् — इति हि [6]सुखदुःखयोः विवेकः? तत्र आत्मानुकूलं सुखम् — इष्टं भवति; तत्प्रतिकूलं दुःखं च — अनिष्टम्। अतः दुःखसंयोगस्य [7]असह्यतया तन्निवृत्ति-

परमतं शङ्कते अथोच्येत इति। [8]इष्टत्वहेतुः पुरुषानुकूलत्वं नाम तृतीयाकारः, स एव कृत्युद्देश्यत्वमित्यर्थः। परिहरति नैवम् इति। दृष्टान्तार्थं 'तथा' इत्यादिकमुच्यते। कार्यं यथा दुःखव्यतिरिक्तत्वात् पुरुषप्रतिकूलं न भवति, तथा, दुःखव्यतिरिक्ततया[9] तदनुकूलत्वमपि तस्य नास्ति इत्यर्थः ॥

अत्र चोदयति ननु च इति। [10]सुखव्यतिरिक्तदुःखनिवृत्तावनुकूलत्वदर्शनात् सुखव्यतिरिक्तकार्यस्यापि अनुकूलत्वमुपपद्यते इत्यर्थः। परिहरति नैतत् इति। [11]दुःखनिवृत्तावनुकूलताबुद्धिः[12] भ्रान्तिरिति वक्ष्यन्, सुखदुःखयोः विवेकं दर्शयति आत्म इति। ततः किमित्यत्राह तत्र इति। अनुकूलत्वात् सुखमिष्टम्। दुःखस्य

१. अथोच्यते—पा०
२. कृत्युद्देश्यमिति—पा०
३. इति चेत्—पा०
४. मैवम्, न इति चेत्—पा०
५. पुरुषाननुकूलम्—पा०
६. तयोर्विवेकः—पा०
७. अनिष्टतया—पा०
८. इष्टत्वे हेतुः—पा०
९. सुखव्यतिरिक्तत्वात्—पा०
१०. सुखव्यतिरिक्तत्वाद्दुःखनिवृत्तौ—पा०
११. दुःखनिवृत्तेरनुकूलता—पा०
१२. अनुकूलताप्रतीतिः—पा०

रूपे इष्टा भवति; तत्र एव इष्टतासाम्यात् अनुकूलताभ्रमः ।

तथा हि :— प्रकृतिसंसृष्टस्य[1] संसारिणः पुरुषस्य अनुकूलसंयोगः, प्रतिकूलसंयोगः, स्वरूपेणावस्थितिः — इति तिस्रः अवस्थाः, तत्र प्रतिकूलसंबन्धनिवृत्तिः[2], अनुकूलसंबन्धनिवृत्तिश्च स्वरूपेण अवस्थितिरेव ।

तस्मात्, प्रतिकूलसंयोगे वर्तमाने, तन्निवृत्तिरूपा स्वरूपेण अवस्थितिरपि[3] इष्टा भवति, तत्र इष्टतासाम्याद्नुकूलताभ्रमः । अतः, [4]सुखस्वरूपत्वादनुकूलतायाः, [5]नियोगस्य अनुकूलतां वदन्तं प्रामाणिकाः परिहसन्ति ॥

---

प्रतिकूलत्वात् तन्निवृत्तिरपि इष्टा । एवम् इष्टतासाम्यात् आनुकूल्यभ्रमः इत्यर्थः ।

दुःखनिवृत्तेरपि इष्टत्ववत् अनुकूलत्वमप्यस्ति, इत्यनुकूलताबुद्धिः न भ्रमः स्यात् इत्यत्राह तथा हि इति । मुक्तस्य अनुकूलसंयोग एवेति तद्व्यावृत्त्यर्थं 'संसारिणः' इत्युक्तम् । प्रतिकूलनिवृत्तेरनुकूलत्वे, अन्यतरनिवृत्तिरन्यतरसंयोगः इत्युक्तं स्यात् । [6]तदा सुषुप्तौ सुखदुःखयोर्द्वयो[7]रपि प्रसंगः; प्रतिकूलनिवृत्तिः, अनुकूलसंयोगः, अनुकूलनिवृत्तिः, प्रतिकूलसंयोगश्च [8]भवति इति । तस्मात् दुःखनिवृत्तेरनुकूलत्वं नास्ति इत्यर्थः ।

अतः, इष्टतासाम्यादनुकूलत्वबुद्धिः भ्रम एवेति निगमयति तस्मात् इति । तस्मात् सुखव्यतिरिक्तस्य नियोगस्य अनुकूलत्वमनुपपन्नमित्याह अतः इति ।

---

१. प्रकृतिसंसृष्टसंसारिणः—पा०

२. निवृत्तिश्च स्वरूपेण—पा०

३. अवस्थितिरिष्टा; अवस्थितिरेवेष्टा—पा०

४. सुखरूपत्वात्—पा०

५. यः नियोगस्य अनुकूलतां वदति तं प्रामाणिकाः—पा०

६. तथा—पा०

७. द्वयोरिति क्वचिन्न दृश्यते—पा०

८. न भवति—पा०

इष्टस्य अर्थविशेषस्य [1]निर्वर्तकतयैव हि नियोगस्य नियोगत्वम्, स्थिरत्वम्, अपूर्वत्वं च प्रतीयते ।

[1]"स्वर्गकामो यजेत" इत्यत्र कार्यस्य क्रियातिरिक्तता, [2]स्वर्गकामपदसमभिव्याहारेण स्वर्गसाधनत्वनिश्चयाद् भवति । न च वाच्यम् "यजेत" इत्यत्र, प्रथमं नियोगः [3]स्वप्रधानतयैव प्रतीयते, स्वर्गकामपदसमभिव्याहारात् स्वसिद्धये स्वर्गसिद्ध्यनुकूलता च नियोगस्य – इति । "यजेत" इति हि धात्वर्थस्य पुरुष-

नियोगस्य सुखव्यतिरिक्तत्वेन हि अनुकूलत्वं दूषितम् ? नियोगः सुखविशेष एवेति, तस्यानुकूलत्वं नाम तृतीयाकारः संभवतीति शङ्कायां, सुखविशेषत्वं निराकरोति इष्टस्य इत्यादिना । अत्र तृतीयाकारदूषणे क्रियमाणे, अर्थात् द्वितीयाकारश्च दूषितो भवति, इष्टत्वनिरासात् । 'इष्टस्य'–स्वतः इष्टस्येत्यभिप्रायः । स्वतः इष्टत्वं च सुखस्य । स्वतश्शब्देन–साधनतयेष्टत्वव्यावृत्तिः । नियोगत्वम्–प्रेरकत्वम् । स्थिरत्वम्–स्थायित्वम् । अपूर्वत्वम्–प्रमाणान्तरागोचरत्वम् । एतत्सर्वम् इष्टार्थस्य[4] "[5]निर्वर्तकतयैव सिद्ध्यति; इष्टसाधनत्वज्ञानात् प्रवृत्तिहेतुत्वम्; कालान्तरभाविस्वर्गसाधनत्वात् स्थिरत्वम्; [6]लौकिकप्रत्यक्षसिद्धक्षणिकधात्वर्थातिरिक्तस्थिरसाधनत्वात् अपूर्वत्वं च इत्यर्थः ।

इष्टसाधनतयैव नियोगत्व-स्थिरत्व-अपूर्वत्वप्रतीतिः कथमित्यत्राह स्वर्गकामः इति । ननु [7]भृत्यानामिष्टप्रदस्यापि राज्ञो यथा प्राधान्यम्, तथा, स्वप्रधानभूत एव नियोगः प्रतीयते, स्वस्य अनुष्ठातुरिष्टप्रदश्च स्यात् राजवदिति, प्रथमं, प्रधानतयैव प्रतीतत्वात् न स्वतः इष्टत्वानुपपत्तिः । यथोक्तम्,[2] "आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये, कुर्वन्[8] स्वर्गादिकमपि प्रधानं कार्यमेव नः" इति । इमां शङ्कामनुभाष्य परिहरति न च वाच्यम् इति । कुत इत्यत्राह यजेत इति हि इति ।

१. निवर्तकतयैव–पा०
२. स्वसिद्धस्वर्गकामपद–पा०
३. प्रधानतयैव–पा०
४. इष्टार्थस्य–पा०
५. निवर्तकतयैव–पा०
६. लौकिकप्रत्यक्षक्षणिक–पा०
७. भृत्यादीनाम्–पा०
८. कुर्वत्–पा०

1. यजु०. वे. २-५-५.
2. प्रकरणपञ्चिका ।

प्रयत्नसाध्यता[1] प्रतीयते ? स्वर्गकामपदसमभिव्याहारादेव धात्वर्थातिरेकिणो नियोगत्वम्, स्थिरत्वम्, अपूर्वत्वं च इत्यादि[2] अवगम्यते । तच्च स्वर्गसाधनत्वप्रतीतिनिबन्धनम् । "समभिव्याहृतस्वर्गकामपदार्थान्वययोग्यं स्वर्गसाधनमेव कार्यं लिङादयोऽभिदधति" इति हि[3] लोकव्युत्पत्तिरपि तिरस्कृता ॥

एतदुक्तं भवति; "समभिव्याहृतपदान्तरवाच्यान्वययोग्य[4]मेव इतरपदप्रतिपाद्यम्" इति अन्विताभिधायिपदसंघातरूपवाक्यश्रवण-

---

धात्वर्थस्य प्रथमप्रतिपन्नस्यापि वाक्यार्थानुपयोगिनः परित्यागे दृष्टान्तत्वं गर्भितम्, तत् कथमिति शङ्कायाम्, स्वर्गकामपदसमभिव्याहारादेव धात्वर्थातिरिक्तसिद्धिः इत्याह स्वर्ग इति । आदिशब्देन प्राधान्यादि विवक्षितम् । ततः किमित्यत्राह[5] तच्च इति । तच्च — धात्वर्थातिरिक्तत्वम्; अतिरिक्तस्य कार्यस्य स्वर्गसाधनत्वप्रतीतिनिबन्धनम्, [1] "[6]न हि कामी अकामसाधने नियोक्तुं शक्यते" इति न्यायादित्यर्थः । स्वर्गसाधनत्व[7] प्रतीतिनिबन्धनत्वं च कुत इत्यत्राह समभिव्याहृत इति । इतरपदार्थान्वययोग्यस्यैव पदान्तरप्रतिपाद्यत्वमिति हि लोकव्युत्पत्तिभङ्गेन अपूर्वस्य वाच्यत्वं कल्पितमित्यर्थः ।

इतरपदार्थान्वययोग्यस्यैव पदान्तरप्रतिपाद्यत्वं कुतः ? धात्वर्थस्य प्रथमप्रतिपन्नत्वकथने किं प्रयोजनम् ? इत्यत्राह एतदुक्तं भवति इति । [8]पदान्तरार्थान्वययोग्यस्यैव इतरपदप्रतिपाद्यत्वं युक्तम्, अन्विताभिधायकत्वात्[9] वाक्यस्य इत्यर्थः ।

---

१. साध्यतैव—पा०
२. इत्यादि हि—पा०
३. हिर्नास्ति क्वचित् ।
४. वाच्यार्थान्वययोग्यम्—पा०
५. इत्यत्राह—पा०
६. न हि काम्यकामनार्थत्वं नियोक्तुम्—पा०
७. साधनत्वं प्रतीतिनिबन्धनत्वम्—पा०
८. पदार्थान्वययोग्यस्यैव—पा०
९. अन्विताभिधायित्वात्—पा०

1. लौकिकन्यायः ।

समन्तरस्येव प्रतीयते । तच्च स्वर्गसाधनरूपम्; अतः, क्रियावत् अनन्यार्थताऽपि[1] विरोधादेव परित्यक्ता इति ।

अत एव "गङ्गायां घोषः" इत्यादौ [2]घोषप्रतियोग्यर्थोपस्थापनपरत्वं गङ्गापदस्य आश्रीयते । प्रथमं गङ्गापदेन गङ्गार्थः[3]स्मृत इति, गङ्गापदार्थस्य[4] पेयत्वं[5] न वाक्यार्थान्वयी[6] भवति । एवमत्रापि "यजेत" इत्येतावन्मात्रश्रवणे कार्यमनन्यार्थं स्मृतमिति वाक्यार्थान्वयसमये कार्यस्य अनन्यार्थता नावतिष्ठते ।

कार्याभिधायिपदश्रवणवेलायां प्रथमं कार्यम् अनन्यार्थं, [7]प्रतीतम्

---

योग्यं च किमित्यत्राह तच्च इति। प्रथमम् अनन्यार्थतया कार्यं प्रतिपन्नमस्तु, तथाऽपि तदनुपपन्नमित्याह अतः इति । 'अतः' — साधनस्यैव वाक्यार्थान्वयार्हत्वात् इत्यर्थः । यथा [8]प्रथमप्रतिपन्नाऽपि धात्वर्थभूता क्रिया, वाक्यार्थान्वययोग्यत्वात् परित्यक्ता, तथा, स्वप्रधानतया प्रथमं प्रतिपन्नमपि वाक्यार्थान्वयायोग्यत्वात् त्याज्यमित्यर्थः ।

उदाहरणं दर्शयति अत एव इति । अत एव [9]प्रथमप्रतिपन्नस्यापि वाक्यार्थान्वयानर्हस्य त्याज्यत्वादित्यर्थः । एवम् इत्यादि । स्पष्टम् ।

एकपदश्रवणवेलायामनन्यार्थतया प्रथमप्रतिपत्तिरेव[10] नास्ति इत्याह कार्य इति । "न कार्यमनन्यार्थं प्रतीयते" इति गुरुवचनं संगच्छते, [11]कुतः इत्यत्राह

---

१. अपिर्न दृश्यते क्वचित् ।
२. घोषं प्रति—पा०
३. उपस्थित इति—पा०
४. गङ्गापदार्थस्यैव उपेयत्वात्—पा०
५. पेयत्वात्—पा०
६. अन्वयः, अन्वयि—पा०
७. प्रतीयते इत्येतदपि—पा०
८. प्रथमं प्रतिपन्नाऽपि—पा०
९. प्रथमं प्रतिपन्नस्याऽपि—पा०
१०. प्रथमप्रवृत्तिरेव—पा०
११. कुतः इति क्वचिन्न दृश्यते ।

इत्येतदपि न संगच्छते, व्युत्पत्तिकाले गवानयनादिक्रियायाः दुःखरूपायाः इष्टविशेषसाधनतयैव कार्यताप्रतीतेः[1] ।

अतः, नियोगस्य पुरुषानुकूलत्वं सर्वलोकविरुद्धम्; नियोगस्य[2] सुखरूपपुरुषानुकूलतां[3] वदतः स्वानुभवविरोधश्च । [1]"कारीर्या वृष्टिकामो यजेत" इत्यादिषु सिद्धेऽपि नियोगे वृष्ट्यादिसिद्धिनिमित्तस्य[4] वृष्टिव्यतिरेकेण नियोगस्य अनुकूलता नानुभूयते । यद्यपि, अस्मिन् जन्मनि वृष्ट्यादि-

व्युत्पत्ति इति ।

नियोगस्य अनुकूलत्वे प्रमाणाभावमुपसंहरति अत इति । 'अतः' .. सुखस्यैव पुरुषानुकूलत्वात्, नियोगस्य च सुखनिमित्तत्वाच्चेत्यर्थः । यद्वा, केवलविधिपदेन दुःखरूपधात्वर्थमात्रप्रतीतेः, पदान्तरसमभिव्याहृतार्थविशेषस्य साधनतया प्रतीतेश्च इत्यर्थः । योग्यानुपलम्भं[5] दूषणमाह नियोगस्य इति । यागादिजन्यपरमापूर्वस्य[6] अन्त्येष्ट्यनन्तरभावित्वात्, तद्व्यावृत्त्यर्थम् "कारीर्या वृष्टिकामो यजेत" इत्युक्तम् । यद्यपि इति । वृष्ट्यादिसिद्ध्यनियमान्नियोगोऽनुपपन्न इति तदनुकूलत्वाननुभवः इति चेन्न[7], वृष्ट्याद्यसिद्धिरपि नियमेन [8]नास्तीति कदाचित् नियोगः सिद्ध्यतीति[9] । तदानीं नियोगसुखाननुभव[10] इति योग्यानुपलम्भ

1. कार्यता प्रतीयते—पा०
2. नियोगस्य पुरुषानुकूलसुखरूपतां वदतां स्वानुभव—पा०
3. पुरुषार्थानुकूलताम्—पा०
4. निमित्तव्यतिरेकेण, निमित्तपुष्टिव्यतिरेकेण, निमित्तवृष्ट्यादिव्यतिरेकेण—पा०
5. योग्यानुपलम्भदूषणम्—पा०
6. अज्येष्ट्यनन्तर, अन्तेष्ट्यनन्तर—पा०
7. इति चेत्—पा०
8. नासीदिति—पा०
9. इतिर्न दृश्यते क्वचित् ।
10. सुखानुभवः—पा०

1. मैत्रायणीयसं; काठकगृ ।

सिद्धेरनियमः, तथाऽपि अनियमादेव नियोगसिद्धिः [1]अवश्याश्रयणीया। तस्मिन् अनुकूलतापर्यायसुखानुभूतिः [2]न विद्यते।

एवम्, उक्तरीत्या [3]कृतिसाध्येष्टत्वातिरेकि कृत्युद्देश्यत्वं [4]न दृश्यते।

कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति चेत्; किमिदं [5]शेषित्वम्? किं च [6]शेषत्वम्? इति वक्तव्यम्; कार्यं प्रति सम्बन्धी[7] शेषः, तत्प्रति-

---

इत्यर्थः। तस्मिन्निति। तस्मिन्—नियोगे अनुकूलतापर्यायसुखत्वानुभूतिः न विद्यते इत्यर्थः।

एवमिति। स्पष्टम्। अत्र अयमर्थ उक्तो भवति:— किं केवलेन कार्याभिधायिपदेन स्वप्रधानतया कार्यप्रतीतिः, उत, पदान्तरसमभिव्याहृतेन? न तावत् केवलेन, तत्र दुःखरूपधात्वर्थमात्रप्रतीतेः; एवम्, स्वप्रधानतया प्रथमं [8]कार्याभिधायिपदेन प्रतिपन्नमस्तु, तथाऽपि वाक्यार्थानुपयोगित्वात् न [9]तावत् प्रतिपाद्यम्, क्रियावत्; न च पदान्तरसमभिव्याहृतेन, इष्टस्य अर्थान्तरस्य साधनतयैव प्रतीतेः; एवम्, स्वप्रधानतायां प्रमाणाभावात् नियोगस्य [10]सुखरूपत्वं न संभवति; किञ्च, योग्यानुपलम्भरूपबाधकप्रमाणबाधितं च इति।

कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति लक्षणवाक्यं दूषयति कृतिमित्यादिना। किमित्यादि। स्पष्टम्। शेषशेषित्वलक्षणं पराभिमतमाशङ्कते कार्यमिति।

---

१. अवश्यशब्दः क्वचिन्न।
२. नास्ति—पा०
३. कृतिसाध्यत्वेष्टत्वातिरेकि—पा०
४. न विद्यते—पा०
५. शेषत्वम्—पा०
६. शेषित्वम्—पा०
७. संबन्धित्वं शेषत्वम्—पा०
८. पदेन—पा०
९. तत्प्रतिपाद्यम्—पा०
१०. सुखरूपत्वम्—पा०

संतान्वितत्वं शेषित्वमिति चेत्; एवं तर्हि, कार्यत्वमेव शेषित्वमित्युक्तं भवति; कार्यत्वमेव हि विचार्यते? [1] 'परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्व' [2] मिति चेत्, कोऽयं परोद्देशो नामेति [3] अयमेव हि [4] विचार्यते? उद्देश्यत्वं नाम ईप्सितसाध्यत्वमिति चेत्, [5] किमीप्सितत्वम्? कृति-प्रयोजनत्वमिति चेत्; पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम्?

---

कृत्युद्देश्यत्वं दूषयति एवम् इति। कार्यप्रतिसंबन्धि [6] प्रतिसंबन्धित्वं हि कार्यत्व-मेवेत्यर्थः। ततः किमित्यत्राह कार्यत्वमेव इति। कार्यत्वं नाम कृत्युद्देश्यत्वम्, [7] कृत्युद्देश्यत्वं च कृतिशेषित्वम्, कृतिशेषित्वं च कार्यत्वम् – इत्युक्तं भवति; कृत्यु-द्देश्यत्वं कृतिशेषित्वमित्युक्ते, कृत्युद्देश्यत्वमेव कृत्युद्देश्यत्वमित्युक्तं भवति – इत्यर्थः। [8] परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं [9] [10] शेषत्वमिति पक्षेऽपि, अयमेव दूषणप्रकारः। किञ्च कृतेरशेषत्वप्रसंगः इति * भाष्येऽभिहितम्। उद्देश्यत्वम् इति। स्पष्टम्। पुरुषस्य इति। न हि कृतेः पुरुषव्यापाररूपायाः प्रयोजनं नामास्ति; तस्मात् कृति-प्रयोजनं नाम कृतिमत्पुरुषस्य कृत्यारम्भप्रयोजनमेव, [11] तच्च इष्टत्वकृति [12] साध्यत्वा-न्तर्भूतम् – इत्यर्थः॥

---

* श्रीभा. १. अ. प्र. पा. जि. अधिकरणपूर्वपक्षे।

---

१. परोद्देश्यप्रवृत्तकृत्यर्हत्वम्—पा०
२. शेषित्वम्—पा
३. 'अयमेव'—क्वचिन्न दृश्यते।
४. हि: नास्ति क्वचित्।
५. किमिदमीप्सितम्—पा०
६. कार्यप्रतिसम्बन्धित्वं हि—पा०
७. कृत्युद्देश्यत्वमिति क्वचिन्न दृश्यते।
८. परोद्देश्यप्रवर्त—पा०
९. व्याप्यत्वम्—पा०
१०. शेषित्वम्—पा०
११. तच्चेष्टत्वं कृति—पा०
१२. साध्यत्वाद्यन्तर्भूता—पा०

स च इच्छाविषयः कृत्यधीनात्मलाभ इति [1] पूर्वोक्त एव ॥

अथान्यद् हि सर्वत्र शेषशेषिभावः—परगतातिशयाधानेच्छया [2] उपादेयत्वमेव यस्य स्वरूपम्,—स शेषः, परः—शेषी ; [3] फलोत्पत्तीच्छया [4] यागादेः, तदाश्रयस्य च उपादेयत्वम्, यागादिसिद्धीच्छया अन्यत् सर्वं उपादेयम् । [5] एवम्, [6] गर्भदासादीनामपि पुरुषविशेषातिशयाधानेच्छया

कस्तर्हि शेषशेषिभावः ? इत्याकाङ्क्षायाम्, [1] "शेषः परार्थत्वात्" इति सूत्रं व्याचष्टे अथ शेष हि इति । परगतातिशयाधानस्य अयोगव्यवच्छेदे [7] क्षेत्र, शेषिण्यति-व्याप्तिः; अन्ययोगव्यवच्छेदकत्वे, [8] असंभवः इति, तदुभयव्यावृत्त्यर्थं परगतातिशयाधाने-च्छया उपादेयत्वमेव यस्य स्वरूपमित्युक्तम्, शेषभूतस्य स्वगतातिशयाधानमपि परगताति-शयाधानार्थम् इत्यर्थः । स्वेच्छा वा, [9] परेच्छा वा न तत्र नियमः, यथासंभवमेव ; न हि शेषभूतस्य व्रीह्यादेः शेषिणो यागस्य [10] च इच्छासंभवः ? तत्र अन्येच्छयैव हि उपादेय-त्वम् ? [11] तथोक्त एव अर्थः । इदं शेषित्वं पराभ्युपेतस्य कार्यस्य न संभवति ; फलोत्पत्तो-च्छयैव उपादेयत्वात्, [12] तस्य अशेषित्वमेव । उक्तलक्षणस्य वैदिकोदाहरणं दर्शयति फलोत्पत्ति इति । 'अन्यत् सर्वम्'— व्रीह्यादिलौकिकोदाहरणमाह गर्भ इति ।

१. पूर्वमेवोक्तः—पा०
२. उपादानत्वमेव—पा०
३. फलप्राप्तीच्छया—पा०
४. इच्छायागादे —पा०
५. एवमिति क्वचिन्न दृश्यते ।
६. गर्भाधानादीनाम्—पा०
७. व्यवच्छेद इति चेत्—पा०
८. तदसंभवः—पा०
९. परेच्छा वा अन्येच्छा वा न तत्र—पा०
१०. यागस्य वा स्वेच्छासंभवः, यागस्यापीच्छासंभवः—पा०
११. यथैवार्थः—पा०
१२. तस्य शेषत्वमेव—पा०

1. मी. सू. ३-१-१.

उपादेयत्वमेव स्वरूपम्; एवम्, ईश्वरगतातिशयाधानेच्छया उपादेय[1]-त्वमेव चेतनाचेतनात्मकस्य[2] नित्यस्य, अनित्यस्य च सर्वस्य वस्तुनः स्वरूपमिति, सर्वम् ईश्वरशेषभूतम्, सर्वस्य च ईश्वरः शेषीति[3]; [1]"सर्वस्य वशी सर्वस्येशानः", [2]"पतिं विश्वस्य[4]" इत्याद्युक्तम्। [3]"कर्म-साध्यं प्रधानं यत्, तत्कार्यमभिधीयते" इत्ययमर्थः अबुधानामेव शोभते॥

अपि च, [4]"स्वर्गकामो यजेत" इत्यादिषु[5] लकारवाच्य-

---

औपनिषदोदाहरणमाह एवम् इति। 'नित्यस्य अनित्यस्य च' इत्युभयविभूतिरुच्यते। ईश्वरस्य चिदचितोश्च शेषित्वं शेषत्वं[6] च प्रामाणिकं चेत्, उक्तलक्षणं तत्र वर्तेत[7], किं तत्र प्रमाणम् इत्यत्राह—सर्वस्य वशी इत्यादि[8]। तस्मात् प्राभाकरोक्तार्थो[9] निरूपकेषु न शोभते इत्याह कर्मेति इति॥

कार्यानुबन्धित्वमप्यर्थं दूषयति अपि च इत्यादिना। कार्ये स्वकीयत्वबुद्धिमान्—नियोज्यः, तत्साधने[10] कर्मणि स्वकीयत्वबुद्धिमान्—अधिकारी, तदनुष्ठाता—कर्ता, इति तिस्रः अवस्थाः; [11]तत्र 'यजेत' इत्यादिपदैः नियोज्यसामान्यं प्रतिपन्नम्, स्वर्गकामादिपदैः नियोज्यविशेषः समर्प्यते इति प्राभाकरैः[12] षष्ठाद्याधिकरणे प्रपञ्चितम्; तद्दूषयति स्वर्गकाम इत्यादिना। कर्तृवाचित्वं शब्दानुशासनसिद्धम्, न तु नियोज्यवाचित्वम्। अतः, स्वर्गकामादिपदान्यपि न नियोज्यविशेषसमर्पकाणीति दूषणशरीरम्। लकारवाच्य-

---

१. उपादानत्वमेव—पा०
२. नित्यानित्यस्य—पा०
३. इति न दृश्यते क्वचित्—पा०
४. विश्वस्यात्मेश्वरमित्याद्युक्तम्, विश्वस्ये-त्युक्तम्—पा०
५. इत्येवमादिषु लकार, इत्यादिलकार—पा०
६. शेषत्वं चेति क्वचिन्न दृश्यते।
७. वर्तेते इति—पा०
८. 'आदि' शब्दः क्वचिन्न दृश्यते।
९. प्रभाकरोक्तं निरूपकेषु—पा०
१०. तत्साधके—पा०
११. तत्र न—पा०
१२. षष्ठाध्यधिकरणे, षष्ठाध्यायाधिकरणे—पा०

1. बृ. उ. ६ ४ १०.
2. तै. उ. ना. ६-११.
3. पञ्चिकायां उपरि.
4. मी. सू. ६-१-१.

कर्तृविशेषसमर्पणपराणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पण-परत्वं शब्दानुशासनविरुद्धं केन अपाकृतम् ? साध्यस्वर्गविशिष्टस्य स्वर्ग-साधने कर्तृत्वान्वयो न घटते इति चेत्; नियोज्यत्वान्वयोऽपि न घटत इति हि स्वर्गसाधनत्वनिश्चयः; स तु, शास्त्रसिद्धे कर्तृत्वान्वये, स्वर्ग-साधनत्वनिश्चयः क्रियते ॥

कर्तृविशेषसमर्पणपराणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पणपरत्वं शब्दानुशासनविरुद्धम् इति । अस्य अयमभिप्रायः कर्तृवाचिनो लकारस्यापि नियोज्यसमर्पणपरत्वं शब्दानुशासनविरुद्धम् इति । पूर्वपक्षयुक्तिं शङ्कते साध्य इति । "न हि काम्यकामसाधने नियोक्तुं शक्यते" इति न्यायात्, स्वर्गकामस्य अस्वर्गसाधने कर्तृत्वान्वयो न घटते इति, इयं पूर्वपक्षयुक्तिः अगत्या शङ्किता । परिहरति नियोज्यत्व इति ।

स्वर्गकामस्य अस्वर्गसाधने नियोज्यत्वान्वयोऽपि न संभवतीति नियोज्य विशेषणसमर्पणपरत्वमप्ययुक्तम्; तदुपपत्तये स्वर्गसाधनत्वं कार्यस्य निश्चीयते इति चेत्; कर्तृविशेषसमर्पकत्वोपपत्तये स्वर्गसाधनत्वं निश्चीयताम्; नियोज्यत्वं, कर्तृत्वं वा स्वर्गकामस्य अस्वर्गसाधने नोपपद्यते, अत उभयपक्षेऽपि कार्यस्य स्वर्गसाधनत्व निश्चयसापेक्षत्वमविशिष्टम्; इयान् विशेषः—"कर्तुर्लकारवाच्यत्वात् स्वर्गकामादिपदानां कर्तृविशेषसमर्पणपरत्वं शब्दानुशासनाविरुद्धम्; नियोज्यस्य लकारवाच्यत्वाभावात् स्वर्गकामादिपदानां नियोज्यविशेषसमर्पणपरत्वं शब्दानुशासनविरुद्धम्" इत्यर्थः ।

१. समर्पकाणाम्—पा०
२. नियोज्यसमर्पण—पा०
३. समर्पकत्वम्—पा०
४. स्वर्गविशेषस्य, स्वर्गविशिष्टस्यादय—पा०
५. स्वर्गसाधनेन—पा०
६. कर्तृत्वाऽन्वयः—पा०
७. नियोज्यत्वाऽन्वयोऽपि—पा०
८. हिने दृश्यते कचित्—पा०
९. न तु—पा०
१०. पूर्वपक्षीययुक्तिः—पा०
११. नियोज्यत्वं स्वतो न सम्भवति—पा०
१२. इत्यर्थः, इति—पा०

1. लौकिकन्यायः ।

यथा, 'भोक्तुकामो देवदत्तगृहं गच्छेत्' इत्युक्ते, भोजनकामस्य देवदत्तगृहगमने कर्तृत्वश्रवणादेव प्रागज्ञातमपि भोजनसाधनत्वं देवदत्तगृहगमनस्य अवगम्यते; एवमत्रापि भवति[1]। न हि, क्रियान्तरं प्रति कर्तृतया श्रुतस्य क्रियान्तरे कर्तृत्वकल्पनं युक्तम्; [1] "यजेत" इति हि[2] यागकर्तृतया श्रुतस्य बुद्धौ कर्तृत्वकल्पनं क्रियते; [3]बुद्धेः कर्तृत्वकल्पनमेव हि नियोज्यत्वम्?

यथोक्तम् :—

[2] "नियोज्यः स च कार्यं यः, स्वकीयत्वेन बुद्ध्यते" इति।

"[4]यष्टृत्वानुगुणं [5]तद् बोद्धृत्वम्" इति चेत्; देवदत्तः पचेत् इति

---

[6]तदुदाहरणेन विशदयति यथा इति। एवमत्रापि इति। स्वर्गकामस्य यागे कर्तृत्वश्रवणात् प्रागज्ञातमपि यागस्य स्वर्गसाधनत्वमवगम्यते इत्यर्थः। इयान् विशेष इत्यभिप्रायमाह न क्रियान्तरं प्रति इति। कथं क्रियान्तरं प्रति कर्तृतया श्रवणम्? अस्य क्रियान्तरे कर्तृत्वकल्पनं च किम्? इत्यत्राह यजेतेति हि[7] इति। कथं बुद्धौ कर्तृत्वकल्पनं कृतं भवतीत्यत्राह [8]बुद्धेः इति। उक्तार्थे तद्ग्रन्थमुदाहरति यथोक्तम् इति।

नियोज्यत्वं कर्तृत्वानुगुणमिति तत्परत्वमाश्रीयते इति शङ्कते यष्टृत्व इति। परिहरति देवदत्तः इति॥

---

१. भवतीति न क्रियान्तरं प्रति—पा०
२. हिर्न दृश्यते क्वचित्।
३. बुद्धौ—पा०
४. नियोगकर्तृत्वानुगुणम्—पा०
५. तद्बोध्यत्वम्, तद्बोधकत्वम्, तद्बुद्धिकर्तृत्वम्—पा०
६. तदुदाहरणानि—पा०
७. हिर्नास्ति क्वचित्।
८. बुद्धौ—पा०

1. मीमांसा. 6-1-1.
2. पञ्चिकायाम् उपरि।

[1]पाककर्तृतया श्रुतस्य देवदत्तस्य, पाकार्थगमनं पाकानुगुणमिति, गमने कर्तृत्वकल्पनं न युज्यते ॥

किञ्च, लिङादिशब्दवाच्यं स्थायिरूपं [2] किमिति अपूर्वमाश्रीयते ? [3]स्वर्गकामपदसमभिव्याहारानुपपत्तेः, इति चेत्, का अत्रानुपपत्तिः ? सिषाधयिषितस्वर्गो हि स्वर्गकामः, तस्य स्वर्गकामस्य कालान्तरभाविस्वर्गसिद्धौ क्षणभङ्गिनी यागादिक्रिया न समर्था इति चेत्,

---

एवम्, यदधिकृत्य कृतिर्वर्तते, तत् कृत्युद्देश्यमिति पक्षो दूषितः ; प्रेरकत्वं — कृत्युद्देश्यत्वमिति वादश्च निरस्तः । अर्थात् स्वत इष्टत्वं च अपास्तम् ; कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति च प्रतिक्षिप्तम् । [4]कृतिफलविशेषः कृत्युद्देश्य[5]मित्यादेरपि [6]उक्तरीत्या दूषणं [7]सुवचम् : एते पक्षभेदाश्च बहुग्रन्थकारनिलिखिता[8] इति, अत्र ते प्रयुक्ताः ; कार्यानुबन्ध्यर्थान्तरमपि परोक्तं दूषितम् । पूर्वं ब्रह्मणः फलतया सिद्धिः, स्तावकत्वसिद्ध्यर्थं तत्सिद्धिश्च इत्युक्तं[9] ॥

अथ फलसाधनतया सिद्धिरुपपाद्यते[10], अर्थात् कार्यस्य साधनतया सिद्धिश्च उपपाद्यते[11] । किं च इति । न केवलं प्राधान्यासिद्धिः, अपि तु साधनतया स्वरूपसिद्धिरप्यनुपपन्नेत्यर्थः । लिङादि इत्यादि । स्पष्टम् । सिषाधयिषित इत्यादि । [1]" न हि काम्यकामसाधने नियोक्तुं शक्यते " इति न्यायात् सिषाध-

---

१. पाके कर्तृतया—पा०
२. ' किम् ' — एतच्च दृश्यते क्वचित् ।
३. पूर्वं स्वर्गकामपद—पा०
४. कृतिः फलविशेषः—पा०
५. कृत्युद्देश्यत्वम्—पा०
६. उक्तरीत्या—पा०
७. सूचितम्—पा०
८. लिखिता—पा०
९. श्रोक्ते, श्रेत्युक्तम्—पा०
१०. उपपद्यते—पा०
११. उपपद्यते—पा०

1. लौकिकन्यायः ।

अनाघ्रातवेदसिद्धान्तानाम् इयमनुपपत्तिः "[1] सर्वैः कर्मभिः आराधितः, परमेश्वरः, भगवान्, नारायणः तत्तदिष्टं फलं ददाति" इति वेदविदो वदन्ति ॥

यथाऽऽहुः वेदविदग्रेसराः द्रमिडाचार्याः —"फलसंविभत्सया कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं[2] फलाय[3] — इति शास्त्रमर्यादा" इति ।

फलसंबन्धेच्छया कर्मभिः यागदानहोमादिभिः, इन्द्रादिदेवतामुखेन, तत्तदन्तर्यामिरूपेण अवस्थितम्, इन्द्रादिशब्दवाच्यं, परमात्मानं, विधिवाक्यस्य विधीयमानं [4]तत्साधनमेव, तत्र कालान्तरभाविफलस्य क्षणिकायाः क्रियायाः साधनत्वायोगात्, अपूर्वक्लृप्तिः — इत्यर्थः ॥

परिहरति अनाघ्रात इति । भगवच्छब्दः — [5]फलप्रदानानुगुणज्ञानशक्त्यादिपौष्कल्यपरः ; नारायणशब्दः — [6]प्राप्तिपरः ; ईश्वरान्तरसापेक्षत्वव्यावृत्तिपरः — परमेश्वरशब्दः ॥

वेदविद्वचो दर्शयति यथाहुः इति ।

भाष्यग्रन्थं व्याचष्टे फल इति । आत्मानम् — इति पदं व्याचष्टे इन्द्रादि इति । इन्द्रादिदेवतामुखेन इत्यन्वयः । आत्मान्तरव्यावृत्त्यर्थं "परमात्मान" मिति पदम् । भगवच्छब्दः पूर्ववत् । वासुदेवशब्दः — अन्तरात्मत्वे प्रमाणद्योतकः ; [1] "सर्वत्रासौ समस्तं च" इत्यादि ॥

---

* "फलसंविभत्सया" — इति पाठो युक्तः । सति नलोपनिमित्तविरहात् — इति केचित् ।

---

१. सर्वकर्मभिः—पा०
२. प्रीतोऽगम्—पा०
३. इति फलाय—पा०
४. तत्साधनत्वमेव—पा०
५ फलदानानुगुण—पा०
६. प्राप्यत्वपरः—पा०

1. वि. पु. १-२-१२.

भगवन्तं, वासुदेवम्[1] आराधयिष्यन्ति; स हि – कर्मभिराराधितः, तेषाम् इष्टानि फलानि प्रयच्छति–इत्यर्थः ॥

तथा च श्रुतिः—[1] "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति;

"इष्टापूर्तम्" इति सकलश्रुतिस्मृतिचोदितं कर्म उच्यते; तत्, "विश्वं बिभर्ति" इन्द्राग्निवरुणादिसर्वदेवतासंबन्धितया प्रतीयमानं, तत्तदन्तरात्मतया अवस्थितः, परमपुरुषः स्वयमेव "बिभर्ति" स्वयमेव स्वीकरोति; "भुवनस्य नाभिः"—ब्राह्मणादिसर्ववर्णपूर्णस्य[2] भुवनस्य धारकः, तैस्तैः कर्मभिराराधितः, तत्तदिष्टफलप्रदानेन भुवनानां धारक इति, "नाभिः" इत्युक्तः[3]। अग्निवायुप्रभृतिदेवतान्तरात्मतया तत्तच्छब्दाभिधेयः अयमेवेत्याह – [2] "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इति ॥

---

श्रुतिप्रमाणं[4] दर्शयति तथा च इति[5]।

तद्वाक्यं व्याचष्टे सकल इति। श्रौतम् – इष्टं कर्म, स्मार्तम् – पूर्तं कर्म। "विश्वं बिभर्ति" इत्येतद्व्याचष्टे इन्द्राग्नि इति। नानादेवताकत्वेन प्रतीयमानं कर्मजातम् एकदेवताकमित्यर्थः "भुवनस्य नाभिः" इति नाभिवन्नाभिरिति, आधारत्वाभिप्रायेण व्याचष्टे[6] ब्राह्म इति। केन प्रकारेण धारक इत्यत्राह[7] तैस्तैः इति। अभिमतफलप्रदातृत्वमुखेन धारकत्वमित्यर्थः। भिन्नदेवताकत्वेन विधीयमानं कर्म, कथमेकदेवताकमिति शङ्कायाम्—मन्त्रस्य उत्तरार्धं व्याचष्टे अग्नि इति। अग्न्यादिदेवताकत्वेन विधीयमानानाम् एकदेवताकत्वं, तत्तदन्तरात्मभूतपरब्रह्माराधनरूपत्वात् – इत्यर्थः ॥

---

१ आराधयिष्यन्ति–पा०
२. सर्ववर्णस्य भुवनस्य, सर्ववर्णपूर्णभुवनस्य–पा०
३. इत्युक्तम्–पा०
४. श्रुतिं प्रमाणयति–पा०
५. इत्यादि–पा०
६. तद्व्याचष्टे–पा०
७. इत्याह–पा०

1. तै. उ. ६-१-६.
2. तै. उ. ६-१-७.

यथोक्तं भगवता :—

[1] "यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तः तस्याऽऽराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥"

"यां यां [1] तनुम्"— "इन्द्रादिदेवताविशेषाः, तत्तद्न्तर्यामितया अवस्थितस्य भगवतः तनवः—शरीराणि" इत्यर्थः । [2] "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्यादि; "प्रभुरेव च" इति सर्वफलानां प्रदाता चेत्यर्थः ॥

यथा च :—

[3] "यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाऽच्युत !",
[4] "यैस्त्वधर्मपरैर्नाथ! नरैराराधितो भवान् ।
ते तरन्त्यखिलामेताम् मायामात्मविमुक्तये" इति ।

---

"भुवनस्य नाभिः" इत्यनेन प्रतिपादितफलप्रदत्ववैशद्याय "तद्देवाभिः" [2]इत्यादिसामानाधिकरण्यस्य, शरीरात्मभावनिबन्धनत्ववैशद्याय [3]च ।

भगवद्वचनमाह यथोक्तम् इति । अवतारशङ्काव्यावृत्त्यर्थं [4] व्याचष्टे यां याम् इति । तनुशब्दस्य अल्पार्थत्वव्यावृत्त्यर्थमाह शरीराणि इति । भोक्तृत्ववैशद्याय आह अहम् इति । प्रभुशब्दं व्याचष्टे प्रभुः इति ॥

श्रीविष्णुपुराणवचनमाह [5]यथा च इति । एवं [6], कतिपयवचनप्रदर्शनम् उपलक्षणार्थम् ॥

---

१. 'तनु' मिति इन्द्रादि—पा०
२. इति सामानाधिकरण्यस्य—पा०
३. च क्वचिन्न दृश्यते ।
४. अवतारविग्रहशङ्काव्यावृत्त्यर्थम्—पा०
५. तथा च इति — पा०
६. एतत् कतिपयवचन—पा०

1. गीता ७-२१.
2. गीता ९-२४,
3. वि. पु. ५-३०-१७.
4. वि पु. ५-३०-१६.

सेतिहासपुराणेषु सर्वेष्वेव वेदेषु—"सर्वाणि[1] कर्माणि सर्वेश्वराराधनरूपाणि[2]; तैस्तैः कर्मभिराराधितः पुरुषोत्तमः, तत्तदिष्टफलं[3] ददाति" इति तत्र तत्र प्रपञ्चितम् ।

एवमेव हि, सर्वज्ञम्, सर्वशक्तिम्, सर्वेश्वरम्, भगवन्तम् इन्द्रादिदेवतान्तर्यामिरूपेण यागदानहोमादि–वेदोदितसर्वकर्मणां भोक्तारम्, सर्वफलानां[4] प्रदातारं च सर्वाः श्रुतयो वदन्ति, [1]"चतुर्होतारो यत्र संपदं गच्छन्ति देवैः" इत्याद्याः;

"चतुर्होतारः"—यज्ञाः, "यत्र"—परमात्मनि देवेष्वन्तर्यामितया अवस्थिते, "देवैः" संबन्धं गच्छन्ति इत्यर्थः । [5]अन्तर्यामिरूपेण

---

अयमर्थः सर्ववेदशास्त्रानुमतः, इत्याह सेतिहास इति । एवं, प्रमाणं दर्शितम् ॥

अथ, अयमर्थ उपपन्न इति [6]च वदन्, घटकवाक्यं च दर्शयति एवम् इति । आराधनप्रकारविशेष–फलविशेषज्ञानवत्ता 'सर्वज्ञ'पदेन विवक्षिता । 'सर्वशक्तिम्' इति [7]तत्तत्फलदानशक्तिरभिप्रेता । 'सर्वेश्वरं'—सर्वशेषिणम्; अनेन प्राप्तिरुक्ता भवति । 'संपच्छब्दः प्राप्तिवाची, [2]"पद्–गतौ" इति हि धातुः ? संपच्छब्दस्य अवयवार्थः[8] अन्वयस्वारस्यानुगुणो रूढ्याश्रयेण व्याख्यातः[3] श्रीगीताभाष्ये । कर्मणां देवैः संबन्धश्चेत्, अन्तर्यामिस्थितिः[9] अत्र कीदृशी? इत्यत्राह अन्तर्यामिरूपेण इति ।

---

१. सर्वाण्यपि—पा०

२. आराधनभूतानि—पा०

३. तत्तदिष्टं फलम्—पा०

४. सर्वफलानां च—पा०

५. अन्तर्यामितया अवस्थिते—पा०

६. चः कुत्रचिन्नोपलभ्यते ।

७. तत्तत्फलप्रदान—पा०

८. अवयवार्थान्वयस्वारस्य—पा०

९. अन्तर्यामिस्थितिः, अत्र किमित्यत्राह—पा०

1. आर. ३-२१.

2. धातुः । चुरादिः ।

3. श्रीगीता ७-२३-भा.

अवस्थितस्य[1] परमात्मनः शरीरतया अवस्थितानामिन्द्रादीनां[2] यागादि-संबन्धः—इत्युक्तं भवति ।

यथोक्तं भगवता :—[1] "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्" इति ।

तस्मात्, [3]अग्न्यादिदेवतान्तर्यामिभूत[4] परमपुरुषाराधनभूतानि[5] सर्वाणि कर्माणि; स एव च अभिलषितप्रदायी[6] इति, किमनेन अपूर्वेण व्युत्पत्तिपथदूरवर्तिना वाच्यतया अभ्युपगतेन[7], कल्पितेन वा प्रयोजनम् ।

एवं च सति लिङादेः कोऽयमर्थः परिगृहीतो भवति ?[8] [2]"यज-देवपूजायाम्" इति देवताराधनभूतयागादेः प्रकृत्यर्थस्य, कर्तृव्यापारसाध्यतां

---

कर्मभिः देवानां भगवच्छरीरत्वेन परतन्त्रतया संबन्धः, स्वातन्त्र्येण संबन्धः[9] परमात्मन एव इत्यर्थः ।

स्वतन्त्रतया संबन्धे प्रमाणमाह यथोक्तम् इति ।

किं प्रस्तुतानुपपत्तिपरिहारस्य इत्यत्राह तस्मात् इति । परमपुरुषस्यैव फल-प्रदत्वात्, तस्य फलसाधनत्वं न कल्प्यम्; वाच्यापूर्ववादे[10], तस्य वाच्यत्वमपि न कल्प्यम्, व्युत्पत्तिसिद्धत्वाभावात्—इत्यभिप्रायः । किं ... प्रयोजनम् इति । किमनुपपत्तिशमनं प्रयोजनमित्यर्थः ॥

लिङाद्यर्थं विशदयितुमाह एवं च इति । प्रकृत्यर्थस्य कर्तृव्यापारसाध्यता-

---

१. अवस्थितपरमात्मनः—पा०
२. इन्द्रादिदेवानाम्—पा०
३. इन्द्रादिदेवता—पा०
४. अन्तरात्मभूतपरम—पा०
५. आराधनरूपाणि—पा०
६. अभिलषितप्रद इति, अभिलषितप्रदातेति—पा०
७. अभ्युपगमेन कल्प्येन—पा०
८. परिगृहीत इति चेत्—पा०
९. संबन्ध इति क्वचिन्न दृश्यते ।
१०. वाच्यापूर्वादेस्तस्य—पा०

1. गीता ५—२९.
2. धातुः, भ्वादिः ।

व्युत्पत्तिसिद्धां लिङादयः अभिदधति इति, न किञ्चिदनुपपन्नम् । कर्तृवाचिनां प्रत्ययानाम्, प्रकृत्यर्थस्य कर्तृव्यापारसंबन्धप्रकारो हि वाच्यः ; भूतवर्तमानत्वादिम् अन्ये वदन्ति ; लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति ।

अपि च, कामिनः कर्तव्यतया कर्म विधाय, कर्मणो देवताराधनरूपताम्, [1] तद्द्वारेण फलसिद्धिं [2] च तत्तत्कर्मविधिवाक्यान्येव वदन्ति

अभिधानं विवृणोति कर्तृवाचिनाम् इति । कर्तृवाचिनः प्रत्ययाः, प्रकृत्यर्थस्य[3] कर्तृव्यापारसंबन्धम्[4] । अभिदधति ; तत्र लट्, वर्तमानतया कर्तृव्यापारसंबन्धमभिधत्ते ; भूततया लिडादयः ; कर्तृसाध्यतया संबन्धं लिङादयोऽभिदधति ; एवमभिधानात् लिङादयः प्रकृत्यर्थस्यैव कर्तृव्यापारसंबन्ध[5]मभिदधति, न तु प्रकृत्यर्थातिरिक्तस्य । यदि लिङादयो धात्वर्थातिरिक्तस्य कर्तृव्यापारसाध्यतामभिदधति ; तर्हि, लडादयोऽपि धात्वर्थातिरिक्तस्य वर्तमानतादिकं अभिदध्युः[6] । यथा, लडादयो धात्वर्थमात्रस्य वर्तमानतादिकं वदन्ति, तथा लिङादयोऽपि[7] धात्वर्थमात्रस्य कर्तृव्यापारसाध्यतां वदन्ति इत्यर्थः ॥

एवम्, उपनिषद्वाक्यैः सोपबृंहणैः भगवत एव [8]फलप्रदत्वात् न अपूर्वक्लृप्तिरित्युक्तम् ; इदानीं [9]कर्मविधिवाक्यैरेव देवतानां [10]फलप्रदत्वाभिधानान्नापूर्वक्लृप्तिः इत्याह अपि च इति । तत्तत्कर्मविधिवाक्यान्येव वदन्ति इति । [i]"विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युः" इति न्यायात्, अर्थवादवाक्यस्यापि

१. तद्द्वारा—पा०
२. फलं सम्भवं च—पा०
३. प्रकृत्यर्थस्यैव—पा०
४. कर्तृव्यापारत्वं सम्बन्धम्—पा०
५. संबन्धमेव—पा०
६. अभिदध्युः—क्वचिदेतन्न दृश्यते ।
७. अपिः न दृश्यते क्वचित् ।
८. फलप्रदातृत्वात्, फलप्रदत्वाभिधानात्—पा०
९. कर्मगतवाक्यैः—पा०
१०. फलप्रदातृत्वात्—पा०

i. मीमांसा सू. १-२-७.

[1] "वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति. स एवैनं भूतिं गमयति" इत्यादीनि ; नात्र फलसिद्ध्यनुपपत्तिः [1]काऽपि दृश्यते इति, फलसाधनत्वावगतिः औपादानिकी – इत्यपि न सङ्गच्छते; विध्यपेक्षितं यागादेः फलसाधनत्व प्रकारं [2] वाक्यशेष एव बोधयति इत्यर्थः ।

---

विधिशेषतया एकवाक्यत्वम् अभिप्रेत्य [3] कर्मविधिवाक्यान्येव इत्युक्तम् । वाक्यं दर्शयति वायव्यम् इति । कर्मणो देवताद्वारा फलप्रदत्वं श्रौतमिति फलसाधनत्वं विध्याक्षेपसिद्धमिति वक्तुमयुक्तम् [4] इत्याह नात्र इति औपादानिकी इति [5] । उपादानप्रमाणसिद्धा, विध्याक्षेपसिद्धेत्यर्थः । [6]अभिहितापर्यवसानं [7]श्रुत्यर्थापत्तिः [2]"पीनो देवदत्तो दिवा न भुङ्क्ते" इति, अभिधानापर्यवसानम् उपादानमिति तयोर्भेदः । अर्थवादादेः स्तुत्याद्यन्यपरत्वेन स्वार्थे तात्पर्याभावात्, कर्मणां देवताद्वारकं फलसाधनत्वं न सिद्ध्यति इत्यत आह विध्यपेक्षितम् इति । [3]"अक्ताः शर्करा उपदधाति" इत्यादिषु, [4]"तेजो वै घृतम्" इति वाक्यशेषावगतस्य विध्यपेक्षितत्वेन स्वार्थे तात्पर्यमभ्युपगतम्—" [5]" [8]संदिग्धे तु वाक्यशेषात्" [9] इत्यादिसूत्रेण; प्रतिपन्नपरित्यागेन अप्रतिपन्नकल्पनायोगात् । एवम्, अत्रापि विध्यपेक्षितत्वेन देवतास्वरूपे तात्पर्यमस्ति इत्यभिप्रायः ।

---

१. काचिदपि—पा०
२. फलसाधनत्वादिप्रकारम्—पा०
३. अभिप्रेतं कर्म—पा०
४. युक्तम्-पा०
५. इतिः न दृश्यते क्वचित् ।
६. अभिहितार्थपर्यवसानम्—पा०
७. श्रुतार्थापत्तिः—पा०
८. स्ववाक्यशेषात्—पा०
९. इति सूत्रेण—पा०

1. मीमांसा २-३-५. य. वे. संहि. २. का. १-१.
2. मीमांसा सू. १-१-४.
3,4,5. मीमांसा सू. १-४-२९.

[1] "तस्मात् ब्राह्मणाय नापगुरेत" इत्यत्र अपगोरणनिषेध[1]विधि-परवाक्यशेषे[2] श्रूयमाणं,[3] निषेध्यस्य अपगोरणस्य शतयातनासाधनत्वं निषेधविध्युपयोगि इति हि[4] स्वीक्रियते ? अत्र पुनः, कामिनः कर्तव्यतया विहितस्य यागादेः, काम्यस्वर्गादिसाधनत्वप्रकारं वाक्यशेषावगतम् अनादृत्य, किमिति उपादानेन यागादेः फलसाधनत्वं[5] परिकल्प्यते । [2] "हिरण्यनिधिमपवरके निधाय, याचते [6]कोद्रवादिलुब्धः[7] कृपणं जनम्" इति श्रूयते, [8]तदेतत् युष्मासु दृश्यते ।

---

अर्थवादोक्तविध्यपेक्षितार्थ[9]तात्पर्याभ्युपगमे उदाहरणमाह तस्मात् इति । ततः किमित्यत्राह अत्र इति । विधेयाविरोधिनः फलसाधनत्वमर्थवादोक्तं[10] विध्यपेक्षितत्वात् स्वीकृतम्; विधेयस्य[11] फलसाधनत्वं विध्यपेक्षितं ततोऽप्यन्तरङ्गतया अर्थवादोक्तं स्वीकार्यम्; तदनादृत्य, किमिति उपादानेन फलसाधनत्वक्लृप्तिः? इत्यर्थः । लोकसिद्धभाषणानुसरणमुखेन परमुपालभते हिरण्यनिधिम् इति । [3] "हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः" इति परमात्मनो हिरण्यनिधिदृष्टान्तो हि श्रौतः; अतः, "हिरण्यनिधिमपवरके निधाय" इत्युक्तम् ॥

---

१. विधिवाक्य—पा०
२. वाक्यशेषश्रूयमाण—पा०
३. श्रूयमाणनिषेध्यस्य—पा०
४. हिः न दृश्यते क्वचित् ।
५. प्रकल्प्यते—पा०
६. द्रव्यादिलुब्धः—पा०
७. लिप्सुः—पा०
८. यत्तदेतद्युष्मासु—पा०
९. विध्यपेक्षितार्थे तात्पर्याभ्युपगमे—पा०
१०. अर्थवादोक्तविध्यपेक्षितत्वात्—पा०
११. फलसाधनत्वमपेक्षितम्—पा०

1. पू. मी. सू. ३-४-१०
2. श्रुत्यर्थानुवादिलोकसिद्धभाषणम् ।
3. छा. उ. ८-३-२.

शतयातनासाधनत्वमपि न अदृष्टद्वारेण; [1] चोदितान्यनुतिष्ठतः, विहितं कर्म कुर्वतः, निन्दितानि च कुर्वतः सर्वाणि सुखानि, दुःखानि च परमपुरुषानुग्रहनिग्रहाभ्यामेव भवन्ति ।

[1] "एष ह्येवानन्द याति", [2] "अथ सोऽभयंगतो भवति", [3] "अथ तस्य भयं भवति", [4] "भीषास्माद्वातः पवते, भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चम इति", [5] "एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः", [6] "एतस्य वाऽक्षरस्य प्रशासने गार्गि! ददतो मनुष्याः प्रशंसन्ति, यजमानं देवाः, दर्वीं पितरोऽन्वायत्ताः" इत्याद्यनेकविधाः [2] श्रुतयः सन्ति ।

---

शत इति । अपगोरणस्य [3] शतयातनासाधनत्वमपि न कल्प्यापूर्वद्वारेण [4] संभवति; देवताद्वारकत्वश्रुतेः कल्पनायोगात् इत्यर्थः । कथं तर्हि? इत्यत्राह चोदितानि इति ॥

उक्तार्थे श्रुतिमाह "एष हि इति । ददतो मनुष्याः प्रशंसन्ति इति । [5] दानस्य प्रशस्यत्वं भगव[6]दाराधनात्मकतयेत्यर्थः । "दर्वीं पितरोऽन्वायत्ताः" इति, दर्वीशब्दः पैतृककर्मोपलक्षणार्थः; "अन्वायत्ताः" — तत्प्रवणाः । पितॄणां पैतृककर्मणा [7] तृप्तिः भगवदाज्ञया इत्यर्थः ।

---

१. चोदितकर्माणि कुर्वतः निन्दितानि च कुर्वतः—पा०

२. अनेकाः श्रुतयः—पा०

३. अपगोरणशतयातना—पा०

४. ते संभवति—पा०

५. तद्दानस्य—पा०

६. भगवदाज्ञयेत्यर्थः—पा०

७. पैतृककर्मणामपि तद्भगवदाज्ञया—पा०

1, 2, 3, 4. तै. उ. आ. ८.
5, 6. बृ. उ. ५-८-९.

यथोक्तं द्रविडभाष्ये :- "तस्य आज्ञया धावति वायुः, नद्यः [१]स्रवन्ति, तेन च कृतसीमानो जलाशयाः [२]समदा इव मेषविसर्पितं कुर्वन्ति" इति [३], "तत्संकल्पनिबन्धना हि इमे लोकाः— न च्यवन्ते, न स्फुटन्ते [४]; स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् [५]स भगवान् वर्धयेत विद्वान् कर्मदक्षः" इति [६] च ।

परमपुरुषयाथात्म्यज्ञानपूर्वकम्, तदुपासनादि-विहितकर्म-अनुष्ठायिनः, तत्प्रसादात् तत्प्राप्तिपर्यन्तानि सुखानि, अभयं च यथाधिकारं भवन्ति । तदज्ञानपूर्वकं तदुपासनादि विहितं कर्म कुर्वतः, निषिद्धानि च [७] कुर्वतः तन्निग्रहादेव तदप्राप्तिपूर्वकापरिमितदुःखानि, भयं च भवन्ति ।

यथोक्तं भगवता :—[1] "नियतं कुरु कर्म त्वं, कर्म ज्यायो ह्यकर्मणः" इत्यादिना कृत्स्नं कर्म ज्ञानपूर्वकमनुष्ठेयं विधाय, "मयि सर्वाणि कर्माणि संन्यस्य" इति सर्वस्य [८] कर्मणः स्वाराधनताम्, आत्मनां स्वनियाम्यतां च प्रतिपाद्य,

[2] "ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥

---

वेदविद्वचनमाह यथोक्तम् इति । मेषविसर्पितम् – उज्जृम्भणम्, जलोन्नतिः; जलाशयाः – समुद्राः, कृतसीमान एव मेषविसर्पितं कुर्वन्ति, न तु अतिलङ्घितसीमानः—इत्यर्थः ॥

उक्तार्थे भगवद्वचनं दर्शयिष्यन्नाह परमपुरुष इति ॥

---

१. प्रस्रवन्ति, प्रवहन्ति ।—पा०
२. समुद्रा इव—पा०
३. इतिः क्वचिन्न दृश्यते ।
४. शासनानुवर्तिनम्—पा०
५. स्वभावाच्च वर्धयेत—पा०
६. चः क्वचिन्न दृश्यते ।
७. चकारः क्वचिन्न दृश्यते ।
८. सर्वकर्मणाम्, सर्वकर्मणः—पा०

1. गीता ३-८.
2. गीता ३-३०.

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥"

इति स्वाज्ञानुवर्तिनः प्रशस्य, विपरीतान् विनिन्द्य, पुनरपि स्वाज्ञानुपालनम् अकुर्वताम् आसुरप्रकृत्यन्तर्भावम् अभिधाय, अधमा गतिश्च उक्ता;

[1]"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
[1]मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम् ॥" इति ।

[2]"सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥"
—इति च स्वाज्ञानुवर्तिनां शाश्वतं पदं च उक्तम् ॥

"अश्रुतवेदान्तानां कर्मणि अश्रद्धा मा भूत्" इति देवताधिकरणेऽतिवादाः कृताः, कर्ममात्रे यथा श्रद्धा स्यात् इति, सर्वं एकशास्त्रमिति * वेदवित्सिद्धान्तः ॥

---

अश्रुत इति । "देवतायां प्रतिपाद्यमानायां कर्मणि श्रद्धावैकल्यं स्यात्; तदनुत्पत्तये कर्मणि श्रद्धा जननाय च अतिवादाः कृताः, [2]अतो न तत्र तात्पर्यम्; देवतानिरपेक्षं कर्मैव[3] फलदानशक्त[4]मिति [5]श्रद्धातिशयजननमेव अभिप्रेतम् इत्यर्थः । एवम् अविरोधेन निर्वाहः किमर्थमित्यत्राह सर्वम् इति । ऐकशास्त्र्यं[6] भगवद्बोधायनाद्यभिमत[7]मङ्गीकृतम्, तत्र च विरुद्धार्थप्रतिपादने श्रुतिविरोधात् तदनादरणीयं स्यात्; अविरोधे संभवति, विरुद्धार्थपरत्वेन व्याख्यानमयुक्तमिति भावः ॥

---

* वेदार्थविदां बोधायन - टङ्क - द्रमिड - गुहदेव - भारुचिप्रभृतीनां सिद्धान्तः ।

---

१. अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि । मामप्राप्य च कौन्तेय—पा०
२. अतः — एतन्न दृश्यते क्वचित् ।
३. कर्म च—पा०
४. फलसाधनशक्तम्—पा०
५. श्रद्धाजननमेव—पा०
६. एकशास्त्रम्—पा०
७. बोधनाद्यङ्गीकृतम्—पा०

1. गीता १६-१९.
2. गीता १८-५६.

तस्यैतस्य परस्य ब्रह्मणो नारायणस्य अपरिच्छेद्यज्ञानानन्द-अमलत्वस्वरूपम्, ज्ञानशक्तिबलैश्वर्यवीर्य[1]-तेजःप्रभृत्यनवधिकातिशय-असंख्येयकल्याणगुणवत्[2], स्वसंकल्पप्रवर्त्यस्वेतरसमस्तचिदचिद्वस्तुजातवत्, स्वाभिमत–स्वानुरूप–एकरूप–दिव्यरूप[3]–तदुचितनिरतिशयकल्याण–विविधानन्तभूषण–स्वशक्तिसदृश–अपरिमितानन्ताश्चर्यनानाविधायुध-स्वाभिमततदनुरूप[4] स्वरूपरूपविभवैश्वर्य[5] शीलाद्यनवधिकमहिममहिषी

---

एवम्, सर्ववेदान्ताभिमतः सिद्धार्थे व्युत्पत्त्यभावनिरासः कृतः। अथ [6]कैरप्यनभिमतां नित्यविभूतिं समर्थयते तस्यैतस्य इत्यादिना। 'तस्य एतस्य' इति पदद्वयेन, ब्रह्मस्वरूपसिद्धौ, तस्य च [7]नारायणत्वे प्रमाणं स्मारितम्। स्वरूपशब्दः स्वरूपनिरूपकधर्मवाची। 'अपरिच्छेद्य' इति स्वरूपमुक्तम्। 'ज्ञान' इति गुणा उक्ताः। 'स्वसंकल्प' इति विभूतिमत्त्वमुक्तम्। [8]स्वरूप-तद्गुणविभूतयः दिव्यरूपादीनां प्रामाणिकत्वे दृष्टान्ततया उक्ताः। दिव्यविग्रहादयः साध्याः। [9]अननुरूपेऽप्यभिमतिः अस्तीति तद्व्यावृत्त्यर्थम् अनुरूपशब्दः। हेयप्रत्यनीकत्वं कल्याणगुणास्पदत्वं सर्वावस्थस्याप्यस्तीति एकरूपत्वम्। 'तदुचित' इत्यादि भूषणविशेषणम्। 'कल्याणत्वम्' अप्राकृतत्वम्। 'स्वशक्तिसदृश' इत्याद्यायुध-विशेषणम्। 'अनन्ताश्चर्यत्वम्' अत्यन्तविस्मयनीयत्वम्। 'स्वाभिमत' इत्यादि महिषीविशेषणम्। 'स्वरूपरूपगुण' इति [10]रूपतद्गुणा इत्यर्थः। ऐश्वर्य-शीलशब्दौ स्वरूपगुणप्रदर्शनार्थौ। स्वरूपस्य भगवदनुरूपत्वं [1]"यथा सर्वगतो

---

१. बलैश्वर्यतेजःप्रभृति—पा०
२. गुणगणतावत्—पा०
३. दिव्यरूपेति क्वचिन्न दृश्यते।
४. स्वरूपशब्दः क्वचिन्न दृश्यते।
५. शीलाद्यनवधिक—पा०
६. केरप्यनभिमताम्—पा०
७. चः न दृश्यते क्वचित्।
८. स्वरूपविभूतयः—पा०
९. अनुरूपे—पा०
१०. स्वरूपरूपतद्गुणेत्यर्थः—पा०

1. वि. पु. १-८-१७.

— स्वानुरूपकल्याणज्ञानक्रियाद्यपरिमेयं [1] गुणानन्तपरिजनपरिच्छद — स्वोचितनिखिलभोग्यभोगोपकरणाद्यनन्त [2] महाविभव — अवाङ्मनसगोचर-स्वरूपस्वभावदिव्यस्थानादिनित्यतानिरवद्यतागोचराश्च सहस्रशः श्रुतयः [3] सन्ति :—

[1] "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्", [2] "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ... तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी", [3] "स य एषोऽन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषो

---

विष्णुः" इत्यवगम्यते । विग्रहस्य तदनुरूपत्वम् [1] "विष्णोर्देहानुरूपां वै" इति ज्ञायते । महिमशब्दः—उत्कृष्टत्ववाची । महिषीशब्देन—लक्ष्मीः विवक्षिता । अन्यासामपि तच्छेषत्वेन सिद्धिः । 'स्वानुरूप' इत्यादि परिजनपरिच्छदविशेषणम् । क्रिया — कैङ्कर्यम् । परिजनाः — शेषशेषाशनादयः । कलाचिकाप्रभृतयः — परिच्छदाः । 'स्वोचित' इत्यादि परमपदविशेषणम् । भोग्यशब्देन स्रक्चन्दनादिः विवक्षितः । भोगोपकरणशब्देन स्रक्चन्दनादिविनियोगोपयोगिभाजनादयो विवक्षिताः । परिच्छदशब्देन कलाचिकादिस्वरूपेण भोगोपकरणं विवक्षितम् । भोगोपकरणशब्देन भोग्यवस्तुविनियोगसाधनपदार्था विवक्षिताः इति भिदा । आदिशब्देन दिव्योद्यानादि विवक्षितम् । अवाङ्मनसगोचरम् [4] इति । अपरिच्छेद्यत्वात् । स्वभावशब्दः — जाज्वल्यमानत्वादिगुणपरः । आदिशब्देन [5] तत्र तत्रत्यापारादयः अभिप्रेताः । सहस्रशः श्रुतयः सन्ति इति । प्रत्यक्षश्रुतयः उपबृंहण-[6]भूताखिलश्रुतयश्च अभिप्रेताः ।

उक्तार्थविषयाः श्रुतीरुदाहरति वेदाहम् इति । मनोमयशब्दं व्याचष्टे

---

१. गुणगणानन्तपरिजन—पा०
२. अनन्तविभवावाङ्मनस—पा०
३. श्रुतयश्च—पा०
४ इतिः न दृश्यते क्वचित् ।
५. तत्रेति क्वचिन्न दृश्यते ।
६. मूलभूताखिलश्रुतयः—पा०

1. पुरुषसूक्तम् २०.
2. छा. उ. १-६-७.
3. तै. उ. शी. १-७.
4. वि. पु. १-९-१४५.

मनोमयः, अमृतो हिरण्मयः", "मनोमयः" इति, मनसैव विशुद्धेन गृह्यते इत्यर्थः। [1]"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" विद्युद्वर्णात् पुरुषादित्यर्थः।

[2]"नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा" मध्यस्थनीलतोयदा [1]विद्युल्लेखेव; सेयं दहरपुण्डरीकमध्यस्थाऽऽकाशवर्तिनी वह्निशिखा, स्वान्तर्निहित [2]नीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिव आभाति इत्यर्थः।

[3]"मनोमयः प्राणशरीरः भारूपः [3]सत्यकामः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो-

---

मनोमयः इति। मयट् प्रत्ययः — प्राचुर्यार्थोऽयम्[4], सम्बन्धपरो भवति, संबन्धश्च — ग्राह्यग्राहकभावः; "मनसा तु विशुद्धेन" इत्यादिश्रुतेरित्यर्थः।

"नीलतोयद" इत्यादि श्रुतिं व्याचष्टे मध्यस्थ इति। "नीलतोयदमध्यस्था" इति समासो बहुव्रीहिः; पूर्वनिपातः छान्दसः। "अस्य वाक्यस्य कथमयमर्थः" इत्यत्राह सेयम् इति। [1]"तस्य मध्ये वह्निशिखा" इत्यत्र तस्येति पदं सुषिरपरामर्शि इत्यर्थः। स्वान्तः इति। स्वरूपशब्दः विग्रहपरः। पूर्वापरपरामर्शात् नीलतोयदेत्यादिवाक्यस्य उक्त एव अर्थः। "मनोमयः" पूर्ववदर्थः। प्राणशरीरः — शरीरधारकस्यापि धारकः; भारूप इत्यत्र तात्पर्यम्। "आकाशात्मा"—आकाशवत् स्वच्छस्वरूपः; [5]"अक्षरमम्बरान्तधृतेः" इत्युक्तप्रकृत्यन्तरात्मेति वा। "सर्वकर्मा" — सर्वं जगदस्य कर्मेति; [5]क्रियत इति कर्मेति[6], कर्मणि व्युत्पत्तिः। "सर्वकामः" भोग्यभोगोपकरणादिकाम्यवस्तुसमृद्धः। एवम् पदद्वयेन उभयविभूतिमत्त्वम् उक्तं भवति। "सर्वगन्धः

---

१. नीलतोयदविद्युल्लेखेव—पा०
२. नीलतोयदविद्युदिव परमात्म—पा०
३. सत्यकाम इति क्वचिन्न दृश्यते।
४. अयमिति क्वचिन्न दृश्यते।
५. 'क्रियत इति' क्वचिदेतन्न दृश्यते।
६. 'कर्मेति' —एतन्न दृश्यते कुत्रचित्।

1. तै. उ. १-८.
2. तै. उ. ११.
3. छा. उ. ३ १४.
4. तै. उ. ना. ११.
5. ब्र. सू. १-३-९.

ऽवाक्यनादरः", [1]"महारजतं वासः" इत्याद्याः ।

"अस्येशाना जगतो विष्णुपत्नी", [2]"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ", [3]"तद्विष्णोः परमं पदं, सदा पश्यन्ति सूरयः", "क्षयन्तमस्य रजसः पराके", [4]"यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्", [5]"यो वेद निहितं गुहायां परमे व्योमन्", [6]"योऽस्याध्यक्षः परमे व्योमन्", [7]"तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्" इत्यादिश्रुतिशतनिश्चितोऽयमर्थः ॥

---

सर्वरसः" इत्यनेन च विग्रहसिद्धिः । "अभ्यासः"—स्वीकृतवान् । "अवाकी"—अजल्पाकः[1] । "अनादरः" तृणीकृतसकलजगत्त्वादित्यर्थः । * "महारजतम्"[2]—रागद्रव्यविशेषः; तेन रञ्जितं महारजतम्[3] । आद्यशब्देन वक्ष्यमाणाः श्रुतयो विवक्षिताः ।

पत्नीविषयं प्रमाणमाह "अस्य" इति । स्थानपरिजनादौ प्रमाणमाह तद्विष्णोः इति । "क्षयन्तम्"— "क्षि—गतिनिवासयोः इति" धातुः । यदेकम् इति । "अनन्तरूपम्" इति पदं दिव्यविग्रहपरम् । स्पष्टमुपरि ।

---

* अत्र केचित्—"माध्यन्दिन—आरण्यकमूलव्याख्यादौ तथैवोपलम्भात्, महारजनमित्येव युक्तः पाठः । रागद्रव्यविशेषश्च हरिद्रैव, ब्राह्मणव्याख्यादिषु तथैवोक्तत्वात् । तया रक्तं माहारजनमिति "तेन रक्तं रागात्"इति पाणिनिसूत्रेण अणि, साधुरिति प्रतिभाति इत्याहुः । सर्वेष्वपि श्रीकोशेषु 'महाराजतम्' इत्यस्यैव पाठस्य उपलम्भात् श्रीमद्भिः व्यासार्यैः 'रागद्रव्यविशेषः' इति व्याख्यातत्वात्, यथावस्थितपाठ एव सम्प्रदायिकः । रागद्रव्यविशेषः यदि हरिद्रा, तर्हि, प्रख्यातमर्थं परित्यज्य रागद्रव्यविशेषः इति अनिश्चितमर्थं न हि प्रेक्षावान् प्रब्रूते इति अस्माकं प्रतिभाति ॥

---

१. अजल्पकः—पा०

२, ३. महारजनम्—पा०

1. बृ. उ. ४-३-६.
2. पुरुषसूक्तम् २४.
3. ४. का. २. २१.
4. तै. उ. ना. १-५.
5. तै. उ. आ. १.
6. २ अष्ट. प्र.
7. तै. उ. ना. १-२.

[1]"तद्विष्णोः परमं पदम्" इति, विष्णोः[1] परस्य ब्रह्मणः; परमं पदं, 'सदा पश्यन्ति सूरयः' इति वचनात्, सर्वकालदर्शनवन्तः परिपूर्णज्ञानाः[2] [3]केचन सन्ति इति ज्ञायते । "ये सूरयः, ते सदा पश्यन्ति" इति वचनव्यक्तिः । "ये सदा पश्यन्ति, ते सूरयः" इति वा ॥

उभयपक्षेऽप्यनेकविधानं न संभवति इति चेत् [4]न; अप्राप्तत्वात् सर्वस्य सर्वविशिष्टं [5]परमं स्थानं विधीयते । यथोक्तम्ः—[2]"तद्गुणास्तु विधीयेरन्, अविभागाद्विधानार्थे, न चेदन्येन शिष्टाः" इति । यथा

---

"तद्विष्णोः" इत्यादि स्थानविधिः, [6]सूरिविधिः, सदादर्शनविधिश्चेत्यभिप्रेत्य, तत्र चोद्यं परिहारं च वक्ष्यन्, तत्प्रतिपन्नमर्थमाह परस्य इति । ये सूरयः इति । [7]यच्छब्दान्वयः [8]वचनव्यक्तिकृतः; नात्र उद्देश्यं किमप्यस्ति सर्वार्थस्य अप्राप्तत्वात्, तस्मात्, इयं वचनव्यक्तिः न उद्देश्योपादेयविभागवती - इत्यभिप्रायेण वचनव्यक्तिद्वयमुक्तम् ।

अनेकार्थविधाने वाक्यभेद इति शङ्कते उभय इति । परिहरति अप्राप्तत्वात् इति । विशिष्टविधौ[9] जैमिनीयं सूत्रमाह यथोक्तम् इति । सूत्रस्य[10] विषयवाक्यं दर्शयन्, तदर्थं विशदयति यथा इति ।

---

१ 'विष्णोः' क्वचिदेतन्न दृश्यते ।
२. परिपूर्णज्ञानाद्याः—पा०
३. केचित् सन्ति—पा०
४. 'न'—एतन्न दृश्यते क्वचित् ।
५. परमस्थानम्, परस्थानम्—पा०
६. सूरिविधिरिति क्वचिन्न ।
७. यत्तच्छब्दान्वयः—पा०
८. वचनव्यक्त्यै कृतः—पा०
९. विशिष्टविधाने—पा०
१०. सूत्रविषयवाक्यम्—पा०

1. ४ का. २ प्र. २९.
2. पू. मी. १-४-९-अ.

[1]"यदाग्नेयोऽष्टाकपालः" इत्यादिकर्मविधौ कर्मणो गुणानां च अप्राप्तत्वेन सर्वगुणविशिष्टं कर्म विधीयते, तथा अत्रापि सूरिभिः सदा दृश्यत्वेन विष्णोः परं[1] स्थानमप्राप्तं प्रतिपादयति इति न कश्चिद्विरोधः ॥

करणमन्त्राः, क्रियमाणानुवादिनः, स्तोत्रशस्त्ररूपाः, जपादिषु विनियुक्ताश्च, प्रकरणपठिताश्च अप्रकरणपठिताश्च, स्वार्थं सर्वं यथावस्थितमेव अप्राप्तमविरुद्धं ब्राह्मणवत्[2] बोधयन्ति इति हि[3] वैदिकाः ॥

नन्वु विशिष्टविधिरस्तु, तथाऽपि[4] मन्त्राणाम् अनुष्ठेयार्थप्रकाशकत्वात् अत्र अन्यपरत्वेन स्वार्थे न तात्पर्यमिति सर्वमिदं न सिध्यति इत्यत्राह करणमन्त्राः इति। करणमन्त्राः होमादिसाधनतया विहितमन्त्राः ; न तु जप्यत्वेन[5] विहिताः । क्रियमाणानुवादिनः [2]"बर्हिर्देवसदनं दामि" इत्यादयः । 'स्तोत्रम्' गानविशिष्टमन्त्रोच्चारणम् । 'शस्त्रम्' –गानरहितम्[6] एकश्रुतिरूपोच्चारणम् – तद्युक्ताः इत्यर्थः । जपादिषु इति । आदिशब्देन अध्ययनं विवक्षितम् । उपांशु उच्चारणं – जपः, उच्चैरुच्चारणम्–अध्ययनम् । मोक्षप्रकरणानधीतत्वात् न परस्थानादौ तात्पर्यमिति चोद्यपरिहाराय प्रकरणपठिताश्च अप्रकरणपठिताश्च इत्युक्तम् । "तद्विष्णोः" इत्यादिश्रुतिः मोक्षप्रकरणे पठिता च, [3]"अण्डं भिनत्ति" इत्यादिप्रकरणे सुबालोपनिषदि अधीतत्वात् । अप्राप्तमविरुद्धं च इति । साधकबाधकप्रमाणरहितमित्यर्थः । साधकान्तरसद्भावे तदनुवादः स्यात् ; बाधकसद्भावे[7] [4]"आदित्यो यूपः"[8] इत्यादिवाक्यवत् न तत्प्रतिपादक इति तदुभयव्यावृत्त्यर्थम् 'अप्राप्त-

१. परस्थानम्, परमस्थानम्, परमं स्थानम्–पा०
२. ब्राह्मणादिवन्मन्त्राश्च–पा०
३. हिर्न दृश्यते क्वचित् ।
४. तत्रापि–पा०
५. ज्ञाप्यत्वेन–पा०
६. एकश्रुतिरूपेणोच्चारणम्–पा०
७. बाधकस्य सद्भावे–पा०
८. इति वाक्यवत्, इत्यादिवत्–पा०

1. पू. मी. १-४-९. अ. वि.
2. पू. मी. ३-२ २.
3. सु. उ. ११.
4. मी. सू. १-४-१४. वि.

(प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं – स्तोत्रम्; अप्रगीतमन्त्रसाध्य-गुणिनिष्ठगुणाभिधानं – शस्त्रम्।) विनियुक्तार्थप्रकाशिनां च देवतादिषु अप्रामाणविरुद्धगुणविशेषप्रतिपादनं[1] विनियोगानुगुणमेव[2] ॥

---

मविरुद्धं न इत्युक्तम्। करणमन्त्रशब्दस्य कर्मसाधनमन्त्रमात्रपरत्वे तु न अध्याहारः, अन्यथा मन्त्राश्चेति अध्याहारः स्यात्, मन्त्राश्चेत्, नानुष्ठेयार्थप्रकाशिनः, अपि तु [1] "बर्हिर्देवसदनं दामी" इत्यादयः केचन, तदर्थाश्चेत् तत्पराः स्युः; अन्ये [3] व्युत्पत्तिसिद्धस्वार्थपराः।

[4] ब्राह्मणवत् विधिभागवत् विनियोगभेदेऽपि न स्वार्थपरित्यागः "ऐन्द्र्या गार्हपत्यमुपतिष्ठते, सावित्र्या गार्हपत्यमुपतिष्ठते" इत्यत्र विनियोगभेदात्, न हि सावित्र्यादेः सवितृदेवताकत्वादिहानिः। यदि कर्मविशेषविनियुक्तस्य मन्त्रस्य तदेकानुष्ठेयपरत्वम्, तर्हि "वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः" इत्यादिभिः कृत्स्नस्य वेदस्य जपे विनियुक्तत्वात्, ब्राह्मणभागोऽपि विनियुक्त इति ब्राह्मणमपि स्वार्थे न प्रमाणं स्यात्; जपमात्रानुष्ठेयप्रकाशकं स्यात्। न च तथा भवति। शब्दानां व्युत्पत्तिसिद्धस्वार्थाभिधायित्वं चेत्, तत् मन्त्रेष्वपि तुल्यमिति, बाधकसाधकाभावे मन्त्राः स्वार्थप्रतिपादका एवेत्यर्थः। अनुष्ठेयार्थप्रकाशकत्वमभ्युपगम्यमाह विनियुक्त इति। "अनुष्ठेयार्थप्रकाशकत्वेपि अनुष्ठेयं कर्म एवंविधदेवताकं भवतीति, कर्मविशेषणभूतदेवता[5]विशेषणस्थानपत्नीपरिजनादिप्रतिपादनं [6] न विनियोगाननुगुणम्" इत्यर्थः।

---

१. प्रतिपादनं हि—पा०
२. एवं नेयम्—पा०
३. व्युत्पत्तिविरुद्धस्वार्थपराः—पा०
४. ब्राह्मणवाक्यविधिभागवत्—पा०
५. देवताविशेषस्थान—पा०
६. न विनियोगानुगुणम्—पा०

1. मी. सू. १-२-२.

नेयं श्रुतिः मुक्तजनविषया, तेषां सदा दर्शनानुपपत्तेः; नापि मुक्तप्रवाहविषया, [1]"सदा पश्यन्ति" [1]इत्येकैककर्तृविषयतया प्रतीतेः श्रुतिभङ्गप्रसङ्गात्। मन्त्रार्थवादगता ह्यर्थाः कार्यपरत्वेऽपि[2] सिद्ध्यन्ति इत्युक्तम्; किं पुनः सिद्धवस्तुन्येव तात्पर्ये व्युत्पत्तिसिद्ध इति सर्वमुपपन्नम्॥

ननु चात्र[3] [2]"तद्विष्णोः परमं पदम्" इति परस्वरूपमेव [4]परम-पदशब्देन अभिधीयते, [3]"समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यादिषु अव्यतिरेकदर्शनात्;

नैवम् :— [4]"क्षयन्तमस्य रजसः पराके", [5]"तदक्षरे परमे व्योमन्", [6]"सोऽस्याध्यक्षः परमे व्योमन्", [7]"यो वेद निहितं

नित्यविभूतिपरत्वस्थेम्ने [5]मुक्ताविषयत्वादिकमाशङ्क्य परिहरति नेयम् इति। नापि इति। एकैकं सदा[6] दर्शनवन्तोऽनेके प्रतीताः इति श्रुतिभङ्ग-प्रसङ्गात् प्रवाहविषयत्वमयुक्तम् इत्यर्थः। कार्यार्थे एव व्युत्पत्त्या न विवक्षित-सिद्धिरिति चेत्, तत्राह मन्त्रार्थवादगताः इति।

अर्थान्तरपरत्वमुखेन चोदयति ननु च इति। अव्यतिरेकदर्शनात् इति। परमपदशब्दवाच्यस्य भगवत्स्वरूपाव्यतिरेकदर्शनात् इत्यर्थः।

परिहरति नैवम् इति। विलक्षणस्थानस्य प्रमाणान्तरसिद्धत्वात्, अत्रापि "विष्णोः" इति व्यतिरेकनिर्देशात्, [7]परमपदशब्दस्य च स्थानवाचित्वव्युत्पत्ति-

१. इति एककर्तृतया प्रतीत—श्रुतिभङ्ग, इति एकैककर्तृतया श्रुतिभङ्ग—पा॰
२. अपिः नास्ति क्वचित्।
३. अत्र—न दृश्यते क्वचित्।
४. परमशब्देन—पा॰
५. मुक्तविषयत्वादिकम्—पा॰
६. सर्वदा—पा॰
७. परमशब्दः क्वचिन्न दृश्यते।

1, 2. ४ का. २ प्र २९.
3. वि. पु. १-२२-५३.
4. यजु. वे. २-२-१२.
5. तै. उ. ना. ६-१-१.
6. २ अष्ट. ७ प्र. ७५.
7. तै. उ. आ. १-१.

गुहायां परमे व्योमन्" [1]इत्यादिषु परस्थानस्यैव [2]दर्शनात्, [1]"[3]विष्णोः परमं पदम्" इति व्यतिरेकनिर्देशाच्च। [2]"विष्ण्वाख्यं परमं पदम्" इति विशेषणं तु[4] अन्यदपि परमं पदं अस्तीति तेनैव ज्ञाय(ते), यदिदं परस्थानं[5] सूरिभिः सदा दृश्यत्वेन प्रतिपाद्यते ॥

एतदुक्तं भवति :—क्वचित् [6]परस्थानं च परमपदशब्देन प्रतिपाद्यते;

संभवाच्च[7] इदं स्थानपरमित्यर्थः। 'विष्ण्वाख्यम्' इति विशेषणानां व्यावर्तकत्वात् 'विष्ण्वाख्यम्' इति विशेषणेन [8]तद्व्यावर्त्यतया अन्यस्यापि कस्यचित् परमपद-शब्दवाच्यत्वं गम्यते इत्यर्थः। तदिदम् आह। [3]"एकान्तिनः सदा ब्रह्म ध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः" इति श्रीविष्णुपुराणवचनं स्मारितम्। [9]परस्थानशब्देन अस्याः श्रुतेः [10]स्थानपरत्वेन श्रीविष्णुपुराणे व्याख्यातत्वात् इयं श्रुतिः स्थानपरा इत्यभिप्रायः।

स्थानशब्दस्य स्वरूपपरत्वम् अस्वरसम्[11], [12]स्वरसार्थविरोधाभावे हि नाङ्गी-कार्यम्? "विष्ण्वाख्यं परमं पदम्" इत्यत्र व्यावर्त्यं न स्थानम्, अपि तु जीवस्वरूपम् इत्यत्राह एतदुक्तं भवति इति। भगवत्स्वरूपादन्यस्यापि परमपद-शब्दवाच्यत्वं [13]इष्टमित्येतदेव विवक्षितमित्यर्थः। परमपदशब्दस्य अर्थत्रय-

१. इत्यादिषु स्थान, इत्यादिपरमस्थान-पा०
२. निर्देशात्, प्रदर्शनात्-पा०
३ तद्विष्णोः परमं पदम्—पा०
४. निर्देशात्-पा०
५. परमस्थानम्, परम स्थानम्-पा०
६. परमं स्थानं च—पा०
७. व्युत्पत्तिसद्भावाच्च—पा०
८. तद्व्यावृत्ततया—पा०
९. परमस्थानशब्देन—पा०
१०. परमस्थानपरत्वेन—पा०
११. स्वरसम्—पा०
१२. अस्वरसार्थो विरोधाभावे—पा०
१३. द्रष्टव्यम्—पा०

1. तै. ना. १. २९.
2. वि. पु. १-२२-५३.
3. वि. पु. १-६-३९.

क्वचित्[1], प्रकृतिवियुक्तात्मस्वरूपम्; क्वचित्[2] भगवत्स्वरूपम् [1] "तद्विष्णोः परमं पदम्[3]" इति परस्थानम्। [2] "सर्गस्थित्यन्तकालेषु त्रिधैवं संप्रवर्तते। गुणप्रवृत्त्या परमं पदं तस्यागुणं महत्" इत्यत्र प्रकृतिवियुक्तात्मस्वरूपम्; [3] "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यत्र भगवत्स्वरूपम्। त्रीण्यप्येतानि परमप्राप्यत्वेन परमपदशब्देन प्रतिपाद्यन्ते।

कथं त्रयाणां परमप्राप्यत्वमिति चेत्, भगवत्स्वरूपं परमप्राप्यत्वात् परमं[4] पदम्; इतरयोरपि भगवत्प्राप्तिगर्भत्वाच्च परमपदत्वम्। [5] सर्वकर्मविनिर्मुक्त—आत्मस्वरूपप्राप्तिः भगवत्प्राप्तिगर्भा[6] [4] "त इमे

---

वाचित्वेऽपि प्रयोगं दर्शयति तद्विष्णोः इति। त्रिष्वप्यर्थेषु किं शक्तिभेदक्लृप्तिः? तदा कल्पनागौरवं स्यात्; किमेकत्र मुख्यत्वम्, अन्यत्र अमुख्यत्वम्? तदा षष्ठ्याः[7] अस्वारस्यम्; सोऽप्यमुख्यस्वपरस्वरूपस्यापि[8] वाक्ये प्रतिपाद्यत्वसिद्धेः इत्यत्राह त्रिष्वपि इति। एकावयवशक्त्या त्रिष्वपि मुख्यमित्यर्थः।

अर्थत्रयस्यापि[9] प्राप्यत्वं चोद्यपूर्वकमुपपादयति कथम् इति। "इतरयोरपि भगवत्प्राप्तिगर्भत्वात्" — भगवत्प्राप्तिसहितत्वादित्यर्थः। तत्र आत्मप्राप्तेः भगवत्प्राप्तिसाहित्यमाह सर्व इति। "तिरोधायकसर्वकर्मविनाशो हि आत्मप्राप्तिः?

---

१, २. क्वचिच्च—पा०

३. "तद्विष्णोः परमं पदम्, सदा पश्यन्ति सूरयः"—पा०

४. पदमिति क्वचिन्न दृश्यते।

५. सर्वकर्मबन्धविनिर्मुक्त—पा०

६. गर्भा इति—पा०

७. षष्ठ्या स्वारस्ये साक्ये मुख्यस्वपर-स्वरूप—पा०

८. वाक्यप्रतिपाद्यत्व—पा०

९. अर्थत्रयस्याप्राप्यत्वम्—पा०

1. ४. का. २ प्र. २९.

2. वि. पु. १-२२-४१.

3. वि. पु. १-२२-५३.

4. छा. उ. ८-३-१.

सत्याः कामाः अनृतापिधानाः" इति भगवतो गुणगणस्य तिरोधायक-त्वेन अनृतशब्देन कर्मणः प्रतिपादनात् ।

अनृतरूपतिरोधानं क्षेत्रज्ञकर्मेति कथमवगम्यत इति चेत्;

[1]"अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तथा तिरोहितत्वाच्च ... ... ॥"

इत्यादिवचनात्, परस्थानप्राप्तिरूपे [१]भगवत्प्राप्तिगमनैव इति मुख्यक्रमम् ॥

---

भगवद्गुणानामपि तिरोधायकं कर्मेति, तन्निवृत्तिपूर्वक — परमप्राप्तौ [२] भगवद्गुण-तिरोधायकानिवृत्तेरपि [३] अभावात् भगवत्प्राप्तिः सिद्ध्यति इत्यर्थः ।

अनृतशब्दस्य कर्मवाचित्वं कथमिति शङ्कते अनृत इति । परिहरति अविद्या इति । अविद्याशब्दस्य कर्मवाचित्वे प्रयोगः श्रीविष्णुपुराणे दर्शितः ॥

[४]इदमत्राभिप्रेतम् :— ऋतम् — पुण्यम्, [1]"ऋतं पिबन्तौ सुकृतस्य लोके" इति वचनात् । [2]"एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इति प्रकरणे [3]"अनृतादात्मानं जुगुप्सेत्" इति श्रवणात्, पापम् – अनृतशब्दवाच्यम्, न सुकृतम्, न दुष्कृतम् । [5]"सर्वे पाप्मानोऽतो निवर्तन्ते" इति मुमुक्ष्वपेक्षया अनिष्टफलप्रदत्वेन द्वयोरपि पापशब्दवाच्यत्वात् अनृतमिति कर्म उच्यते इति ।

परस्थान इति । अर्चिरादिना स्थानविशेषप्राप्तिः भगवत्प्राप्तिगर्भेति स्पष्ट-मित्यर्थः ।

---

१. भगवद्गमनैव—पा.
२. आत्मप्राप्तेः सत्त्वे भगवद्गुण—पा.
३. प्रतिबन्धकाभावात्—पा.
४. इदमत्राभिप्रेतम्—पा.

1. वि. पु. ६-७-६१.
2. कठ. उ. ३-१.
3, 4. तै. उ. ना. ११.
5. छां. उ. ८-४-१.

[1] "क्षयन्तमस्य रजसः पराके" इति रजश्शब्देन त्रिगुणात्मिका प्रकृतिरुच्यते, केवलस्य रजसोऽनवस्थानात्; इमां त्रिगुणात्मिकां प्रकृतिं [1] अतिक्रम्य स्थिते स्थाने, क्षयन्तं—वसन्तम् इत्यर्थः। अनेन, त्रिगुणात्मिकात्, क्षेत्रज्ञस्य [2] भोग्यभूतात् वस्तुनः परस्तात्, विष्णोः वासस्थानमिति गम्यते।

[2] "वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णं तमसः परस्तात्" इत्यत्रापि तमश्शब्देन सैव प्रकृतिः उच्यते; केवलस्य [3] तमसः अनवस्थानादेः, "रजसः पराके क्षयन्तम्" इत्यनेन एकवाक्यत्वात्; तमसः परस्तात् वसन्तम्, महान्तम्, आदित्यवर्णं [4] पुरुषम् अहं वेद इत्ययमर्थः [5] अवगम्यते।

[3] "सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्", [4] "तदक्षरे परमे व्योमन्" इति तत् स्थानम् [6] अविकाररूपं परमव्योम-

---

उदाहृतवाक्यान्तरं व्याचष्टे क्षयन्तम् इति। [5] "क्षि — निवासगत्योः" इति धातुः। 'पराके'—परस्तात्। [7] फलितमर्थमाह अनेन इति।

वेदाहम् इति। अस्मिन् वाक्येऽपि निवासशब्दार्थोऽनुसन्धेयः इत्याह रजसः इति। "एकवाक्यत्वात्"— एकार्थप्रतिपादकत्वात्[8]।

अस्य परमव्योमशब्दवाच्यत्व — निर्विकारत्वे दर्शयति सत्यं ज्ञानम्

---

१. आक्रम्य—पा०
२. क्षेत्रज्ञभोग्यभूतात्—पा०
३. केवलतमसः—पा०
४. तं पुरुषम्—पा०
५. गम्यते—पा०
६. अव्यक्तरूपम्—पा०
७. फलितमाह—पा०
८. प्रतिपादकत्वादित्यर्थः—पा०

1. यजु. वे. २-२-१२.
2. पुरुषसूक्तम्. २०.
3. तै. उ. आ. १-१.
4. तै. उ. ना. १-२.
5. धातुः; तुदादौ।

शब्दाभिधेयमिति च गम्यते । "अक्षरे परमे व्योमन्" इत्यस्य[1] स्थानस्य अक्षरत्वश्रवणात्, क्षररूप—आदित्यमण्डलादयः[2] न परमव्योमशब्दाभिधेयाः ॥

[1]"यत्र पूर्वे साध्याः सन्ति देवाः", [2]"यत्र ऋषयः प्रथमजा ये पुराणाः" इत्यादिषु च त एव सूरय इति[3] गम्यते ।

[3]"तद्विप्रासो[4] विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम्" इत्यत्रापि, 'विप्रासः'-मेधाविनः, 'विपन्यवः'— स्तुतिशीलाः, 'जागृवांसः'— अस्खलितज्ञानाः[5]; त एव अस्खलितज्ञानाः[6], तत्

इत्यादिना । स्पष्टम् । व्याख्याविशेषव्यावृत्त्यर्थमाह[7] अक्षरे इति ।

यत्र इति । "यत्र पूर्वे" इत्यत्र यच्छब्दः परमपदपरामर्शी,[8] तद्धि नाकशब्देन गृहीतम्, [1]"नाका अकं भवति" इति हि श्रुतिः; अतो नाकशब्दः परमपद एव[9] मुख्यार्थः । यत्र ऋषयः इति[10] । प्रथमजाः — पूर्वमेव सन्तः ।

तद्विप्रासः इति । "विप्रासः" इति पदं व्याचष्टे मेधाविनः इति । [11]आथर्वणे [5]"विष्णुक्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी" इति वचनात् । 'विपन्यवः'— स्तुतिशीलाः इति । [6]"पन, पण — स्तुतिव्यवहारयोः" इति धातुः । [7]"महिमानं पनायते" इति श्रुतिप्रयोगः स्पष्टः ॥

१. इत्यत्र—पा०
२. मण्डलादीनां न परमव्योमशब्दाभिधेयत्वम्—पा०
३. इत्यत्रगम्यते—पा०
४. विपण्यवो—पा०
५,६. अस्खलितविज्ञानाः—पा०
७. तदक्षरे इति—पा०
८. 'तद्धि' — क्वचिदेतन्न दृश्यते ।
९. एवः क्वचिन्न दृश्यते ।
१०. इत्यत्र प्रथमजाः—पा०
११. जौषकपर्वणि, आथर्वणे—पा०

1. पुरुषसूक्तम् १८.
2. यजु. २-७ ६०.
3. पुरुषसूक्तम् १४.
4. यजु. सं. ५-३-३१.
5. अथर्वणसूक्तम् ।
6. धातुः ; भ्वादिः ।
7. यजु. सं.

विष्णोः परमं पदं सदा स्तुवन्तः, समिन्धते—इत्यर्थः ॥

एतेषां परिजनस्थानादीनाम्, [1] "सदेव सोम्येदमग्र आसीत्" इत्यत्र ज्ञानबलैश्वर्यादि[1] कल्याणगुणगणवत्[2], परब्रह्मस्वरूपान्तर्भूतत्वात्[3], [2] "सदेव...एकमेव अद्वितीयम्" इति ब्रह्मान्तर्भावः[4] अवगम्यते ।

एषामपि कल्याणगुणैकदेशत्वादेव[5] "सदेव सोम्येदमग्र आसीत्" इत्यत्र 'इदं' इति शब्दस्य कर्मवश्यभोक्तृवर्गमिश्र—तद्भोग्यभूतविषयत्वाच्च[6] [3] "सदा पश्यन्ति सूरयः" इति सदादर्शित्वेन च तेषां कर्मवश्यानन्तर्भावात्; [4] "अपहतपाप्मा" इत्यादि "अपिपासः"

---

परमपदस्यापि अस्थिरत्वम् एकत्वावधारणादित्यत्राह एतेषाम् इति । यथा कारणवस्त्वन्तर्भूतत्वात् ज्ञानादिगुणानां "सदेव" इत्यादिवाक्ये तेषामभावो[7] न प्रतिपाद्यते; एवं नित्यविभूतेरपि कारणवस्त्वन्तर्भूतत्वात् "सदेव" इत्यादिवाक्यगतैः "सदेव" "एकमेव" "अद्वितीयम्" इति शब्दैः ब्रह्मान्तर्भावः अवगम्यते । नित्यविभूतिविशिष्टं ब्रह्मैव अवगम्यते इत्यर्थः ।

कुत इत्यत्राह एषामपि इति । कल्याणगुणैकदेशत्वात् । अप्राकृतविशेषणैकदेशत्वादित्यर्थः । गुणशब्दः विशेषणवाची[8] । ज्ञानादेरपि हि द्रव्यत्वे सत्यपि गुणत्वं नित्यविशेषणत्वादेव, नित्यविभूतिरपि तथेत्यर्थः । विशेषणत्वं प्रपञ्चस्यापि अविशिष्टमिति तद्व्यावृत्त्यर्थं 'कल्याणगुणैकदेशत्वात' इत्युक्तम् । प्राकृतो हि प्रपञ्चः ? सदेव इत्यादि । स्पष्टम् । अपहत इत्यादि ।

---

१. आदिशब्दः क्वचिन्न दृश्यते ।
२. गुणगणस्येव, गुणवत्—पा०
३. अन्तर्गतत्वात्—पा०
४. ब्रह्मात्मभावः—पा०
५. एवकारः क्वचिन्न दृश्यते ।
६. चः न दृश्यते क्वचित् ।
७. अन्तर्भावः—पा०
८. विशेषवाची, विशेषगुणवाची—पा०

1,2. छा. उ. ६-२-१.
3. ४ का. २ प्र. २९.
4. छा. उ. ८-७-१.

इत्यन्तेन [1] स्वलीलोपकरणभूत [2] त्रिगुणात्मकप्रकृतिप्राकृततत्संसृष्टपुरुषगतं हेयस्वभावं सर्वं प्रतिषिध्य, [1] "सत्यकामः" [3] इत्यनेन स्वभोग्यभोगोपकरणजातस्य सर्वस्य [4] नित्यता प्रतिपादिता ।

"सत्याः कामाः यस्य असौ"— सत्यकामः । "काम्यन्ते" इति— कामाः, तेन परेण ब्रह्मणा स्वभोग्यतदुपकरणादयः स्वाभिमताः ये [5] काम्यन्ते, ते सत्याः—नित्या इत्यर्थः । अन्यस्य लीलोपकरणस्यापि वस्तुनः प्रमाणसंबन्धयोग्यत्वे सत्यपि विकारास्पदत्वेन अस्थिरत्वात्, तद्विपरीतं स्थिरत्वम् एषां "सत्य" पदेन उच्यते [2] "सत्यसंकल्पः" इति, एतेषु भोग्यतदुपकरणादिषु नित्येषु निरतिशयेषु अनन्तेषु सत्स्वपि, अपूर्वाणाम् अपरिमितानाम् अर्थानामपि संकल्पमात्रेण सिद्धिं वदति ।

एषां च भोगोपकरणानां लीलोपकरणानां, चेतनानां, अचेतनानाम्,

---

"सत्यकाम" शब्दस्य कथं भोग्यभोगोपकरणादिवाचित्वमित्यत्राह सत्याः इति । प्रमाणसंबन्धार्हत्वलक्षणं सत्यत्वं प्रपञ्चस्याप्यस्तीति तद्व्यावृत्त्यर्थमाह [6] अन्यस्य इति । सत्यत्वं द्विविधम्:—प्रमाणसम्बन्धार्हत्वम्, अविकारित्वं च; [7] तच्च सत्यत्वं प्रपञ्चस्य [8] नास्ति; तदत्राभिप्रेतमित्यर्थः । सत्यसंकल्पपदं [9] व्याचष्टे सत्य इति ।

अर्थान्तरमाह एषां च इति । चेतनानामचेतनानां च इति । प्रपञ्चे प्राकृतपदार्थाः—अचेतनाः; बद्धाः—चेतनाः; नित्यविभूतौ शुद्धसत्त्वम्—अचेतनम्;

---

१. सर्वलीलोपकरण, स्वलीलोपकरण—पा०
२. त्रिगुणप्रकृति—पा०
३. इत्यन्तेन—पा०
४. सत्यता—पा०
५. ये च काम्यन्ते—पा०
६. अत्राह—पा०
७. यत्सत्यत्वम्—पा०
८. प्रपञ्चे—पा०
९. सत्यसङ्कल्प इति पदम्—पा०

1, 2. छा. उ. ८-७-१.

स्थिराणामस्थिराणां च, तत्संकल्पायत्तस्वरूपस्थितिप्रवृत्तिभेदादि[1] सर्वं वदति [1] "सत्यसंकल्पः" इति ॥

इतिहासपुराणयोः वेदोपबृंहणयोश्च अयमर्थः [2] उच्यते :—

[2] "तौ तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥" इति ;

वेदोपबृंहणतया [3] प्रारब्धे [4] श्रीरामायणे :—

[3] "व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनः महतः परमो महान् ॥

---

नित्या मुक्ताश्च[5] चेतनाः । स्थिराणामस्थिराणां च इति । प्रपञ्चे चिदंशः स्थिरः; अचिदंशः अस्थिरः । नित्यविभूतावपि लीलाव्यापाराद्यः अस्थिराः; अन्यत्सर्वं स्थिरम् । तत्सङ्कल्प इति । आदिशब्देन [6]तत्तत्पदार्थधर्माणामपि तत्सङ्कल्पायत्तत्वं विवक्षितम् ॥

उक्तार्थः अनधीतशाखास्वपि प्रतिपाद्यते इति दर्शयितुम्, भूषणादिकण्ठोक्तिं दर्शयितुं च उपबृंहणवचनं[7] दर्शयति इतिहास इति । तत्र श्रीमद्रामायणे दर्शयिष्यन्, तस्य काव्यसाम्यबुद्धिनिवृत्तये प्रामाण्यमाह तौ तु इति । काव्यत्वकञ्चुकितो वेदार्थो हि तत्र प्रतिपादितः सर्वजनबुद्ध्यारोहणाय ? यथोक्तं महाभारते :—[4] "बिभेति [8] गहनाच्छास्त्रात् नर[9]स्तीव्रादिवौषधात्, भारतः शास्त्रसारोऽयम्, अतः काव्यात्मना कृतः" इति ।

व्यक्तमेष इत्यादि । "अनादिमध्यनिधनः" इति स्वरूपनित्यत्वम् ।

---

१. प्रवृत्तिभोगादिसर्वम्—पा०
२. अभ्युपगम्यते—पा०
३. वेदोपबृंहणार्थायारब्धे—पा०
४. श्रीमद्रामायणे—पा०
५. चः न दृश्यते क्वचित् ।
६. तत्तत्पदार्थानामपि—पा०
७. उपबृंहणम्—पा०
८. निगमाच्छास्त्रात्—पा०
९. तिक्तादिवौषधात्—पा०

1. छा. उ. ८-७-१.
2. रामा. बाल. ४-६.
3. रामा. युद्ध. ११४-१४, १५.
4. भार. उपोद्घातप्रकरणे ।

समस्तः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षाः नित्यश्रीः अजय्यः[1] शाश्वतो ध्रुवः ॥"

[1]"शरा नानाविधाश्चापि धनुरायतविग्रहम् ।
अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः ॥"

[2]"विवेश वैष्णवं[2] धाम सशरीरः सहानुगः ।";

श्रीमद्वैष्णवे पुराणे :—

[3]"समस्ताः शक्तयश्चैताः नृप ! यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥"

[4]"मूर्तं ब्रह्म महाभाग ! सर्वब्रह्ममयो हरिः ।"

[5]"नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुः तथैवेयं द्विजोत्तम ! ॥"

[6]"देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोः[3] देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ॥"

---

"शाश्वतः" इति गुणविशिष्टाकारेण नित्यत्वम् । "ध्रुवः" इति [4]विग्रहविभूति-विशिष्टाकारेण नित्यत्वम् । "नित्यश्रीः" इति पत्नीविधिः ॥

श्रीपराशरवचनमाह श्रीमत् इति । मूर्तम् इति । मूर्तं ब्रह्म यस्यास्ति स हरिः, सर्वब्रह्ममयश्च । ब्रह्मशब्दः जीवपरः, शुद्धजीवस्वरूपं [5]च तच्छेषमित्यर्थः । श्रीपत्न्यां प्रमाणमाह नित्यैव इति । परस्थाने[6] वचनमाह

---

1. अनेयः—पा०
2. तेज.—पा०
3. विष्णोरेवानुरूपाम्—पा०
4. विग्रहविशिष्टाकारेण—पा०
5. चः क्वचिन्न दृश्यते ।
6. परमस्थाने—पा०

1. उत्तररामा. १०९-२.
2. उत्तररामा. ११० १२.
3. वि. पु. ५-७-७०.
4. वि. पु. १-२२-६३.
5. वि. पु. १-८-१७.
6. वि. पु. १-९-१४५.

[1] "एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये।
तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः॥"

[2] "कलामुहूर्तादिमयश्च कालः न यद्विभूतेः परिणामहेतुः।";

महाभारते च :—

[3] "दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम्[1]।
गच्छ प्रभो! रक्ष चास्मान् प्रपन्नान् कल्पे कल्पे जायमानः स्वमूर्त्या॥"

[4] "कालस्सं पच्यते तत्र न कालस्तत्र वै प्रभुः।" इति॥

परस्य ब्रह्मणो रूपवत्त्वं स्वप्रकारश्च वदति :—

[5] "अन्तस्तद्धर्मोपदेशात्" इति।

योऽसावादित्यमण्डलान्तर्वर्ती, तप्तकार्तस्वरगिरिवरप्रभः, सहस्रांशु-

---

एकान्तिनः इति। तस्य नित्यत्वमाह कला इति॥

महाभारतवचनमाह महा इति। परस्य इति॥

"अन्तस्तद्धर्मोपदेशात्" इति सूत्रे न हि रूपवत्त्वं प्रतीयते? कथं वा तस्य विलक्षणत्वं इति शङ्कायां, तद्विषयवाक्यार्थपुरस्सरं तदर्थमाह योऽसौ इत्यादिना। [6] "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादि विषयवाक्यम्; तत्र "यः" इति प्रसिद्धवन्निर्देशात् [2]प्रत्यक्षाप्रत्यक्षसकल-श्रुतिगतविशेषणजातम्[3] अत्र विवक्षितमिति, सर्वश्रुतिस्मृतीतिहासपुराणगतविशेषणानि अत्रोच्यन्ते :— [7] "य एष एतस्मिन्मण्डले पुरुषो, यश्चायं दक्षिणे[4]ऽक्षन्" इति बृहदारण्यके; [8] "य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषः" इति तैत्तिरीयके च

---

१. अद्य—पा०
२. प्रत्यक्षसकलश्रुतिगत—पा०
३. विशेषणजातमात्रम्—पा०
४. दक्षिणेऽक्षिणीति—पा०

1. वि. पु. १-६-३८.
2. वि. पु. ४-१-८४.
3. भार. मो. ५-२७ तालपत्रकोशे।
4. महाभारते।
5. ब्र. सू. १-१-२१.
6. छा. उ. १-६-६
7. बृ. उ. ७-५-१.
8. तै. उ. ना. १-१३.

शतसहस्रकिरणः, गम्भीराम्भःसमुद्भूत-[1] सुमृष्टनाल-रविकरविकसित-

---

श्रवणात्; अत्रादित्यशब्दो मण्डलवाचीत्यभिप्रायेण आदित्यमण्डलान्तर्वर्ती--इत्युक्तम्। आदित्यशब्दादुपरि [1]"दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यप्रत्ययः ॥

[2]"रुक्माभं स्वप्नधीगम्यम्", [3]"यदा पश्यः पश्यते रुक्मवर्णम्", [4]"प्रतप्तकार्तस्वरवर्चसं प्रभुम्" इत्यादिवचनानुसारेण 'तप्तकार्तस्वर[2]गिरिवरप्रभः' इत्युक्तम्। [5]"आदित्यवर्णं तमसः परस्तात्", [6]"दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः" इत्यादिवचनात्, 'सहस्रांशुशतसहस्रकिरणः' इत्युक्तम्।

एवं विशेषणद्वयेन, भक्तजनसौम्यत्वं, प्रतिकूलदुरासदत्वं च विवक्षितम्। तच्च अभियुक्तै[3]रुक्तम्:- [7]"नित्यानुकूलमनुकूलनृणां, परेषामुद्वेजनं तव च तेज उदाहरन्ति" [4]इति ॥

[8]"तस्य[5] यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यस्य अर्थं हृदि निधायाह गम्भीराम्भः इति।

अस्य वाक्यस्य [6]वाक्यकारेण षडर्थाः पूर्वपक्षत्वेन, सिद्धान्तत्वेन च उक्ताः; तत्र [7]सिद्धान्तितार्थत्रयमत्र उक्तम्; इतरार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेव अवगतम्[8]; तत्र पूर्वपक्षानुपन्यासादेव तस्यानुपादेयत्वं स्पष्टम्; न तस्य पृथङ्निरासः क्रियते ग्रन्थेषु; तस्मात्, वाक्यकारोक्तेषु अर्थत्रयम् अत्र विवक्षितम् ॥

---

१. सुमृष्टतरनाल--पा०
२. गिरिवरसमप्रभः--पा०
३. अभियुक्तैरप्युक्तम्--पा०
४. इति: न दृश्यते क्वचित्।
५. तस्येति क्वचिन्न दृश्यते।
६. वाक्यकारैः--पा०
७. सिद्धान्तार्थत्रयम्--पा०
८. प्रवगम्यते--पा०

1. अष्टाध्यायी ४-१-८५.
2. मनुस्मृ. १२-१२२.
3. मु. उ. ३-१-३.
4. भगवच्छास्त्रम्।
5. पुरुषसूक्तम् २०.
6. गीता ११-१२.
7. श्री. वै. स्त. ५४.
8. छा. उ. १-६-७.

के पुनः पूर्वपक्षितार्थाः[1] ? उच्यन्ते :—

कपिः — आदित्यः [1] " कपि — चलने " इति धातुः ; कं पिबतीति च कपिः , [2] " कपिर्बभस्ति तेजनम् " इति वैदिकप्रयोगः ; तस्य " आसम् " मण्डलम् — कप्यासम् ; यथा आदित्यमण्डलं हृदयपुण्डरीकं च उपासनस्थानम् , एवम् अक्षिणी अपि उपासनस्थानम् — इत्येकोऽर्थः । अयं नोपपद्यते :— उपास्यस्येति षष्ठ्यन्तं पदमध्याहार्यम् , उपासनस्थानमिति च[2] अध्याहार्यम् ; एवं पदद्वयाध्याहारः ; समानविभक्त्यन्तयोः पदयोः स्वतः प्राप्तं सामानाधिकरण्यम् , " घटः पटः " इतिवत् अर्थविरोधाभावे, ' च ' शब्दाद्यभावेऽपि स्वतः प्राप्तसामानाधिकरण्यपरित्यागः एको दोषः ; " पुण्डरीक " शब्दस्य गौणता, [3] " पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् " इति श्रुतेः [3]तत्सदृशि तच्छब्दो हि गौणः ? [4] " हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः " इति दिव्याङ्गवर्णनप्रकरणाननुगुणत्वं च ; [5] " य एषोऽक्षिणि पुरुषो दृश्यते " इत्युत्तरत्र अक्षिस्थानस्य अभिधास्यमानत्वात् पुनरुक्तिश्च ; [6] " य एषोऽन्तरक्षिणि पुरुषो दृश्यते " इत्येकस्मिन् अक्षिणि उपासनविधानात् , [7] " य एष एतस्मिन् मण्डले [4] पुरुषो यश्चायं दक्षिणेऽक्षन् " इति बृहदारण्यके दक्षिणस्य अक्ष्णः उपासनस्थानत्वविधानात् " अक्षिणी " इति द्विवचनानुपपत्तिश्चेति । तस्मात् , अस्य वाक्यस्य उपासनस्थानविधिपरत्वम् अनुपपन्नम् ॥

कपिः — मर्कटः । तस्य आसम् — पृष्ठम् , इति, मर्कटपृष्ठसाम्यमुच्यते इति [5] यत् , तदयुक्तम् ; मर्कटपृष्ठं, पुण्डरीकं च उपमाद्वयम् ? उत एकोपमा ?

---

१. पूर्वपक्षीयार्थाः—पा०
२. वा—पा०
३. तत्सदृशे तत्सादृश्यो हि गौणः—पा०
४. मण्डलेऽर्चिषि पुरुषो—पा०
५. ' यत् ' — एतन्न दृश्यते क्वचित् ।

1. धातुः, भ्वादिः, आत्म०
2. आर० ४-२४.
3. तै. उ. ना. ११.
4. छा० उ. १-६-७.
5. छा. उ. ४-५-१.
6. छा. उ. १-७-५.
7. बृ. उ. ५-५-१.

तत्र उपमाद्वित्वमयुक्तम्; स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसंगात्, [1] श्लाघ्यार्थ-तया निर्वाहे संभवत्यपि, हीनोपमाश्रयणायोगाच्च। यद्वैकोपमा? तथा सति, मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्; तदा [2] 'कप्यास' शब्दस्य गौणता स्यादिति॥

"कप्यासम्" — ईषद्विकसितमिति यद्युच्येत[3], तत्र [4] अर्थौचित्यम् अस्त्येव; तथाऽपि, अवयवशक्त्या, रूढ्या वा ईषद्विकासवाचित्वं नास्तीति तदपि अयुक्तमिति॥

एवम्, अर्थत्रयस्याप्यनुपपत्तेः, उपपन्नमर्थत्रयं विवक्षितं भगवता भाष्यकारेण "गम्भीराम्भः" इत्यादि॥

कं पिबतीति कपिः आदित्यः; तेन अस्यते — क्षिप्यते — विकास्यते इति कप्यासम्; तदाह वाक्यकारः — [1] "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति। तत्र आदित्यः स्वकिरणेन विकासयति; [5] अतो घटकं [6] किरणमपि स्वीकृत्य 'रवि-करविकसित' इत्युक्तम्॥

कं पिबतीति कपिः नालम्, तस्मिन्नास्ते इति — कप्यासम्, [7] अपच्छिता-दपि पद्मात्, नालस्थस्य पुण्डरीकस्य शोभातिशयोऽस्तीति, सोऽत्र विवक्षितः। सनाल-मपि उन्मूलितमम्बुजं [8] म्लानं स्यादिति, तद्व्यावृत्त्यर्थमुच्यते 'सुमृष्टनाल' इति॥

---

१. श्लाघ्यार्थे संभवति हीनोपमाश्रयण—पा.
२. कप्यासवदिति गौणता स्यात्, कप्या-सवदिति स्यात्—पा.
३. यद्युच्यते अत्रार्थौचित्यम्—पा.
४. तदाप्यौचित्यम्, तदाप्यनौचित्यम्—पा.
५. अत्र घटकम्—पा.
६. रविकिरणम्—पा.
७. अत्र त्रुटितादपि पद्मनालस्थस्य—पा.
८. म्लानम्—पा.

1. बोधायन वृत्तिग्रन्थः।

अर्थान्तरमुच्यते गम्भीराम्भस्समुद्भूत इति । कम् — जलम्, [1]"अस — भुवि[1]" अपिपूर्वकः, [2]"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति वचनात् अपेः अत्र अल्लोपः; कप्यासम् — सलिले विद्यमानमित्युक्तं भवति ॥

एवं वाक्यकारोक्तार्थत्रयकथनेन [3]"तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति श्रुतिवाक्यं व्याख्यातं भवति ॥

[4]"रामः कमलपत्राक्षः", [5]"पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोद्धृतम्", [6]"प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम्[2]", [7]"जितन्ते पुण्डरीकाक्ष!", [8]"त्वत्तः कमलपत्राक्ष!" इत्यादिभिः पद्मपत्रसाम्यकथनात् पुण्डरीकस्य दलाभ्यामेव साम्यमिति दर्शयितुं दलशब्दः प्रयुक्तः । [9]"यथा....पुण्डरीकम्, एवमक्षिणी" इत्युक्ते 'पुण्डरीकात् अधिकगुणनिवृत्तिः मा भूत्' इति आयतशब्दप्रयोगः । 'एवम्' इति सामान्येन पुण्डरीकधर्मेषु अतिदिष्टेषु तद्गतदोषातिदेशो मा भूदिति अमलशब्दः ॥

एवमधिकगुणान्वयं दोषराहित्यं च अभिप्रेत्याभियुक्तैरुक्तम् :— [10]"अदीर्घसम्भ्रमदुवं क्षणोज्ज्वलं न चोरमन्तःकरणस्य पश्यताम्, अनुकजमब्जं नु कथं निदर्शनं [3]वनाद्रिनाथस्य विशालयोः दृशोः" इति ॥

१. आस-उपवेशने—पा०
२. पद्मरत्ननिभेक्षणम्—पा०
३. नीलाद्रिनाथस्य—पा०

1. धातुः, अदादिः, पर.
2. सि. कौ. अव्य.
3. छा. उ. १-६-७.
4. रामा. सु. ३५-८.
5. रामा. सु. ३२-४.
6. वि. पु. ६-७-८०.
7. जितन्तेस्तोत्रम् ।
8. गीता ११-२.
9. छा. उ. १-६-७.
10. सुन्दरबा. स्त. ४३.

पुण्डरीकदल-अमलायतेक्षणः, सुभ्रूललाटः, [1] सुनासः, सुस्मिताधरविद्रुमः, सुरुचिरकोमलगण्डः, कम्बुग्रीवः, समुन्नतांसविलम्बि [2] चारुरूपदिव्यकर्णकिसलयः, पीनवृत्तायतभुजः, चारुतर-आताम्रकरतलानुरक्ताङ्गुलीभिः अलङ्कृतः, तनुमध्यः, विशालवक्षःस्थलः, समविभक्तसर्वाङ्गः, अनिर्देश्यदिव्यरूपसंहननः, स्निग्धवर्णः, प्रबुद्धपुण्डरीकचारुचरणयुगलः, स्वानुरूपपीताम्बरधरः,

[1] "नारायण! नमस्तेऽस्तु पुण्डरीकायतेक्षण!, सुभ्रूललाटसुनससुस्मिताधरविद्रुम!" इति जितन्तोक्तविशेषणान्येव उक्तानि, 'सुभ्रूललाटः' इत्यादिना [3]। सुरुचिरकोमलगण्डः — इत्यादिविशेषणानामपि मूलभूतवचनानि भगवच्छास्त्रपुराणादिषु द्रष्टव्यानि। [2] "सुकपोलम्" इति पराशरः। [3] "कम्बुग्रीवो महाहनुः" इति वचनमभिप्रेत्य 'कम्बुग्रीवः' इत्युक्तम्। 'कर्णकिसलयः'—कर्णपाशः। पीनवृत्तायतभुजः। [4] "पीनवृत्तायतभुज! [4] श्रीवत्सकृतलक्षण!" इति जितन्तावचनम्। विशालवक्षःस्थलः। [5] "महोरस्को महेष्वासः" इति वचनम्। समविभक्तसर्वाङ्गः [5]। [6] "समः समविभक्ताङ्गः" इति वचनम्। दिव्यरूपसंहननः इति। [7] "रूपसंहननं लक्ष्मीम्" इति; रूपसंहननं नाम — सर्वाङ्गानां संश्लेषौचित्यम्, अभिरूपविरूपाणामङ्गानां हि संश्लेषो नोचितः; सर्वाङ्गानामपि अभिरूपत्वात् अन्योन्यसंश्लेषः; सदृश इति संहननशब्दार्थः। स्निग्धवर्णः। [8] "स्निग्धवर्णः प्रतापवान्" इति वचनम् [6]। प्रबुद्धपुण्डरीकचारुचरणयुगलः इति। [9] "त्वत्पादकमलादन्यत्" इति। स्वानुरूपपीताम्बरधरः इति। [10] "तस्य महारजतं [7] वासः" इति श्रुतिः॥

१. सुनयनः—पा०
२. अंसविलम्बितालकभारः कर्णकिसलयः—पा०
३. इत्यादि—पा०
४. भुजः श्रीवत्सलक्षणः—पा०
५. समविभक्ताङ्गः—पा०
६. 'वचनम्' इति क्वचिन्न दृश्यते।
७. महाराजनम्—पा०

1. ४-जि. ६.
2. वि. पु. ६-७-८०.
3. रामा. बाल. १-९.
4. ४-जि. ७.
5. रामा. बाल. १-१०.
6. रामा. सुन्दर. ३५-१६.
7. रामा आर. ३-१३.
8. रामा. सुन्दर. ३५-१६.
9. १-जि. १०.
10. बृ. उ. ४-३-६.

अमलकिरीटकुण्डलहारकौस्तुभकेयूरकटकनूपुरोदरबन्धनाद्यपरिमिताश्चर्यानन्तदिव्यभूषणः, शङ्खचक्रगदाऽसिशार्ङ्गश्रीवत्सवनमालाऽलङ्कृतः, अनवधिकातिशयसौन्दर्याहृताशेषमनोदृष्टिवृत्तिः, लावण्यामृतपूरिताशेषचराचरभूतजातः, अत्यद्भुताचिन्त्यनित्ययौवनः, पुष्पहाससुकुमारः, पुण्यगन्धवासितानन्तदिगन्तरालः, त्रैलोक्याक्रमणप्रवृत्तगम्भीरभावः, करुणानुरागमधुरलोचनावलोकिताश्रितवर्गः पुरुषवरो दरीदृश्यते[१] ॥

[1] " ध्येयः सदा सवितृमण्डलमध्यवर्ती, नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुः धृतशङ्खचक्रः " [२] इत्याद्युक्तविशेषणानि उच्यन्ते अमलकिरीट इति । अमलशब्देन अप्राकृतत्वं विवक्षितम् । अनवधिक इति । [2] " रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् " इति वचनम् । ' सौन्दर्यम् ' — अवयवशोभा । ' लावण्यम् ' — समुदायशोभा । अत्यद्भुत इति । [3] " युवा कुमारः ", [4] " यः पूर्व्याय वेधसे नवीयसे " इति श्रुतिः । पुष्पहाससुकुमारः इति । [5] " सौकुमार्यं सुवेषताम् " इति वचनम् । पुण्यगन्ध इति । [6] " सर्वगन्धः सर्वरसः ", [7] " तस्याननं पद्मसमानगन्धि " इति । त्रैलोक्य इति । [8] " समुद्र इव गाम्भीर्ये " इति । करुणा इति । [9] " करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय " इति । एवम्, [10] " य एषोऽन्तरादित्ये " इत्यादिवाक्यस्य अर्थ उक्तः ॥

१. दृश्यते—पा.
२. इत्युक्तविशेषणानि—पा.

1. बृहत्पराशरस्मृतिः ५.
2. रामा. अयोध्या. ३-२९.
3. ऋग्वेदे १-१५५-६.
4. २ अष्ट. ४-२९.
5. रामा. आरण्य. १-१३.
6. छा. उ. ३-१४-४.
7. रामा. सुन्दर. ३६-२८.
8. रामा. बाल. १-१७.
9. २-जि. १२.
10. छा. उ. १-६-६.

स च[1], निखिलजगदुदयविभवलयलीलः, निरस्तसमस्तहेयः, समस्तकल्याणगुणनिधिः, स्वेतरसमस्तवस्तुविलक्षणः, परमात्मा, परं ब्रह्म, नारायणः — इत्यवगम्यते ;

[1] "तद्धर्मोपदेशात्", [2] "स एष सर्वेषां लोकानामीशः[2] सर्वेषां कामानाम्", [3] "स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिदर्शनात् ॥

तस्यैते गुणाः, [4] "सर्वस्य वशी सर्वस्येशानः", [5] "अपहतपाप्मा विजरः" इत्यादि [6] "सत्यसंकल्पः" इत्यन्तम्, [7] "विश्वतः परमं नित्यम् - विश्वं नारायणं हरिम्", [8] "पतिं विश्वस्यात्मेश्वरम्" इत्यादिवाक्य-प्रतिपादिताः ॥

---

एतद्विषयस्य सूत्रस्य[9] प्रतिज्ञाखण्डस्य अर्थमाह सः इति । 'निखिलजगत्' इति पदेन आनन्दवल्ल्युक्तजगत्कारणत्वं विवक्षितम्, [10] "यश्चासावादित्ये" इति तत्र हि जगत्कारणस्य आदित्यान्तर्वर्तित्वमुक्तम् । निरस्त इति । "सर्वेभ्यः पाप्मभ्य उदितः" इत्यस्य अर्थो विवक्षितः । हेयप्रतिभटत्वात्, [3] कल्याणगुण-वत्त्वाच्च स्वेतरसमस्तवस्तुविलक्षण — परमात्म — परं ब्रह्म — नारायणशब्दाः — [4] सामान्यविशेषशब्दाः । एवं सूत्रस्य प्रतिज्ञाखण्डो व्याख्यातः ॥

कुत इत्यत्राह तद्धर्मोपदेशात् इति । तद्व्याचष्टे स एषः इति । सर्व-लोकेशत्वादिगुणा हि श्रूयन्ते ? ततः किं परमात्मत्वस्य इत्यत्राह तस्यैते गुणाः इति । तस्यैते गुणाः इत्यादिवाक्यप्रतिपादिताः इत्यन्वयः ॥

---

१. चकारः क्वचिन्न दृश्यते ।
२. ईशे–पा०
३. कल्याणगुणाकरत्वाच्च–पा०
४. सदात्मविशेषशब्दाः–पा०

1. ब्र. सू. १-१-२१
2. महोपनिषत् ।
3. छा. उ. १-६-७.
4. बृ. उ. ६-४-२२.
5,6. छा. उ. ८-१-५.
7,8. तै. उ. ना. ११.
9. ब्र. सू. १-१-२१.
10. तै. उ. आ. ८-४२.

वाक्यकारश्चैतत् [1] सुस्पष्टमाह :—[1] "[4] 'हिरण्मयः पुरुषो दृश्यते' इति, प्राज्ञस्सर्वान्तरस्स्यात् — लोककामेशोपदेशात् — तथोदयात्पाप्मनाम्" इत्यादिना ॥

तस्य च रूपस्य अनित्यतादि वाक्यकारेणैव प्रतिषिद्धम्; [3] "स्या[2]द्रूपं कृतकमनुग्रहार्थं [3] तच्चेतसामैश्वर्यात्" इति, उपासितुः

वाक्यकारश्चैतत् इति। "प्राज्ञ" शब्देन, [4] "[4] ब्रह्मणा विपश्चिता" इत्युक्तं विपश्चित्त्वमुक्तम्। "सर्वान्तर" शब्देन [5] "अन्योऽन्तर आत्माऽऽनन्दमयः" इत्युक्तार्थो विवक्षितः। "लोककामेशोपदेशात्" — लोककामेशत्वोपदेशात्। "तथोदयात्पाप्मनाम्", [6] "स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्युक्तादित्यर्थः ॥

एवम्, आदित्यान्तर्वर्तिनो रूपवत्त्वात् जीवत्वमाशङ्क्य, रूपस्य अप्राकृतत्वात् परमात्मत्वं सिद्धान्तितम्, [7] "अन्तः" इत्यादिसूत्रे वाक्यकारग्रन्थे [5] ॥

रूपस्य अनित्यत्वप्राकृतत्वशङ्काव्यावृत्त्यर्थमाह तस्य च इति। पूर्वपक्षवाक्यमिदम् "स्याद्रूपम्" इत्यादि। "[6] तच्चेतसाम्" — उपासकानाम्, "अनुग्रहार्थम्", "ऐश्वर्यात्" — स्वतन्त्रशक्त्या [7], "रूपं कृतकम्" "स्यात्" इत्यर्थः। वाक्यस्यार्थमाह उपासितुः इति। "रूपं वा" इत्यादि सिद्धान्त-

१. सर्वम्—पा०
२. स्यात्तद्रूपम्—पा०
३. तच्चेतनानाम्—पा०
४. ब्रह्मणो विपश्चित्त्वमुक्तम्—पा०
५. वाक्यकारग्रन्थैरुपास्यस्य अनित्यत्व—पा०
६. तच्चेतनानाम्—पा०
७. शक्त्या वा—पा०

1. बोधायनवृत्तिः
2. छा. उ. १-६-६.
3. बोधायनवृत्तिः।
4. तै. उ. आ. २-१-२.
5. तै. उ. आ. २-५-२.
6. छा. उ. १-६-७.
7. ब्र. सू. १-१-२१.

अनुग्रहार्थः परमपुरुषस्य रूपसंग्रहः इति पूर्वपक्षं कृत्वा, [1]"रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्ष[1]निर्देशात्" इति, यथा [2]ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात् स्वरूपभूता गुणाः, तथा, इदमपि रूपं, श्रुत्या स्वरूपतया निर्देशात् स्वरूपभूतमित्यर्थः ॥

वाक्यकारेण च व्याख्यातम् :—" अञ्जसैव विश्वसृजो रूपम्, तत्तु न चक्षुषा ग्राह्यम्, मनसा त्वकलुषेण साधनान्तरवता गृह्यते, [2]"न चक्षुषा गृह्यते, नापि वाचा, मनसा तु विशुद्धेन" इति श्रुतेः; न हि अरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम्; [3]"महारजतं वासः", [4]"वेदाहमेतं पुरुषं महान्तम्— आदित्यवर्णं तमसः परस्तात्" इति प्रकरणान्तरनिर्देशाच्च साक्षिणः" इत्यादिना ॥

---

वाक्यम् । तत्तात्पर्यमाह यथा इति । स्वरूपतया । स्वरूपनिरूपकधर्मतया, स्वाभाविकत्वेनेत्यर्थः ॥

इत्थमिहार्थः व्याख्यातमित्याह भाष्य इति । "अञ्जसा" — अव्यवधानेन, स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवत्, मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह तत्तु इति । मिथ्याभूतं - दुष्टेन्द्रियग्राह्यम्; अदुष्टकरणग्राह्यत्वश्रवणात् परमार्थभूतम् इत्यभिप्रायः । पारमार्थ्यमेव उपपादयति न हि इति । अरूपायाः [3]रूपोपदेशः कथम्? इत्यत्राह यथाभूतवादि इति । वेदाहमेतम् इत्यादि । "आदित्यवर्णम्" इति पदं तात्पर्यम् । इत्यादिना— भाष्यकारेण व्याख्यातमित्यन्वयः ॥

---

१. प्रत्यक्षं तन्निर्देशात्—पा।
२. ज्ञानानन्दादयः—पा॰
३. रूपानुपदेशः—पा॰

1. बोधायनवृत्तिः ।
2. मु. उ. ३-८.
3. बृ. उ. ४-३-६.
4. पुरुषसूक्तम् २०.

[1] "हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्[१]", [2] "न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः" इति ॥

यथा, ज्ञानादिकल्याणगुणानन्त्यनिर्देशात् अपरिमितकल्याणगुणविशिष्टं[२] [३]परं ब्रह्मेत्यवगम्यते; एवम्, [3] "आदित्यवर्णम्", [4] "पुरुषम्" इत्यादिनिर्देशात्, स्वाभिमतस्वानुरूपकल्याणतमरूपः, परब्रह्मभूतः पुरुषोत्तमो नारायण इति ज्ञायते; तथा, [5] "अस्येशाना",

[illegible]

"हिरण्मय" इति विकारवाचिशब्दश्रवणात् कृतकं रूपमिति शङ्काव्यावृत्त्यर्थं वाक्यमाह हिरण्मयः इति। रूपम् — औज्ज्वल्यम्। तस्य भाष्यमर्थमाह न मयडत्र इति। "विकारमादाय" — विकारार्थमङ्गीकृत्य। अनारभ्यत्वादात्मनः इति। विग्रहविशिष्टस्यात्मनः अनारभ्यत्वादित्यर्थः॥

पूर्वं "रूपं वाऽतीन्द्रियम्" इत्यादिवाक्योपादाने[४] सङ्ग्रहेणोक्तमर्थं भाष्यग्रन्थानन्तरं विस्तरेणाह यथा इति। "कल्याणतमरूपः" इत्यनेन, [6] "तत्ते कल्याणतमं रूपं पश्यामि" इति श्रुतिः स्मारिता। [7] "आदित्यवर्णम्" इति श्रुतिः पुरुषविषया, अतः पुरुषोत्तमशब्दः[५]। स एव ब्रह्मेति दर्शयितुं परब्रह्मशब्दः। विशेषवाची नारायणशब्दः। यथा, ज्ञानादिकल्याणगुणाः प्रामाणिकत्वात् अभ्युपगम्यन्ते, तथा, रूपमपि प्रामाणिकत्वात् अङ्गीकार्यम् — इत्यर्थः। एवम्, "वाक्यकारभाष्यकारग्रन्थयोः दिव्यरूपसमर्थनम्। पत्नीपरिजनादेरपि प्रदर्शनार्थं तुल्यन्यायत्वात्[६]" इत्यभिप्रेत्याह तथा इति। कथं तदावगतम्?

---

१. चन्द्रमुखवत् इति—पा०
२. कल्याणगुणगणविशिष्टम्—पा०
३. परमिति क्वचिन्न दृश्यते।
४. उपादानेन—पा०
५. पुरुषोत्तमशब्दवाच्यस्स एव ब्रह्मेति—पा०
६. तुल्यन्यायात्—पा०

1. बोधायनवृत्तिः।
2. द्रमिडभाष्यम्।
3,4. पुरुषसूक्तम् २०.
5. यजु. तै. ४-७-३९.
6. ई. उ. 1-16.
7. ४ का. २-१९.

[1] "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ", [2] "सदा पश्यन्ति सूरयः", [3] "तमसः परस्तात्", [4] "क्षयन्तमस्य रजसः पराके" [1] इत्यादिना पत्नीपरिजन-स्थानादीनां निर्देशादेव तथैव [2] सन्तीत्यवगम्यते। [3]यथाऽऽह भाष्यकारः— [5] "यथाभूतवादि हि शास्त्रम्" इति ॥

एतदुक्तं भवति :— यथा [6] "सत्यं ज्ञानमनन्तं ब्रह्म" इति निर्देशात्, परमात्मस्वरूपम् समस्तहेयप्रत्यनीक[4] - अनवधिकानन्दैकतान-तया अपरिच्छेद्यतया च सकलेतरविलक्षणम्; [5]तथा, [7] "यस्सर्वज्ञः सर्ववित्", [8] "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", [9] "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यादिनिर्देशात्, निरतिशयासंख्येयाश्च गुणाः सकलेतरविलक्षणाः। तथा, [10] "आदित्यवर्णम्" इत्यादिनिर्देशात्, रूपपरिजनस्थानादयश्च

इत्यत्राह यथा इति ॥

प्रामाणिकत्वात् गुणाभ्युपगमवत् रूपमभ्युपेतव्य[6]मिति [7]हि उक्तम्? तर्हि गुणानपि वयं नाभ्युपगच्छामः इत्यत्राह एतदुक्तं भवति इति। प्रमाणसिद्धत्वात् ब्रह्मणः स्वरूपमभ्युपगम्यते, [8]सर्वज्ञत्व – सर्वशक्तित्व—विश्वावभासकत्वादिसद्गुणाश्च अवगन्तव्याः प्रामाणिकत्वाविशेषात्; तथा रूपपरिजनादीन्यपि इत्यर्थः। "सकले-तरविलक्षणाः" इत्यनेन प्रकृतिप्राकृतवैलक्षण्यम्। प्राकृतेषु पदार्थेषु चतुर्मुखादीना-

---

१. इत्यादि पत्नीपरिजन—पा०
२. 'तथैव' — एतन्न दृश्यते क्वचित्।
३. तथाऽऽह—पा०
४. हेयप्रत्यनीकानन्दैकतानतया, हेयप्रत्य-नीकाकारतया—पा०
५. यथा—पा०
६. अभ्युपगन्तव्यम्—पा०
७. हिः न दृश्यते क्वचित्।
८. सार्वज्ञ—पा०

1. पुरुषसूक्तम् २४.
2. ४ का. २-२५.
3. पुरुषसूक्तम् २०.
4. यजुर्वे. २२-१२.
5. श्रमिडभाष्यम्।
6. तै. उ. आ. १-१.
7. मु. उ. २-२-७.
8. श्वे. उ. ६.
9. कठ. उ. २-५-१५.
10. पुरुषसूक्तम् २०.

सकलेतरविलक्षणाः, स्वासाधारणाः, अनिर्देश्यस्वरूपस्वभावाः इति ॥

वेदाः प्रमाणं चेत्, विध्यर्थवादमन्त्रगतं सर्वम् अपूर्वम् अविरुद्धम् अर्थजातं यथावस्थितमेव बोधयन्ति । प्रामाण्यं च वेदानाम्[1], [1]"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्युक्तम्; यथा, अग्निजलादीनाम् औष्ण्यादिशक्तियोगः स्वाभाविकः, यथा च चक्षुरादीनाम् इन्द्रियाणां बुद्धिविशेषजननशक्तिः स्वाभाविकी; तथा, शब्दस्यापि बोधकत्वशक्तिः स्वाभाविकी ॥

---

मपि अभिमानः अस्तीति, तद्व्यावृत्त्यर्थं "स्वासाधारणाः" इत्युक्तम् । इयत्ताराहित्यम्, औज्ज्वल्यादिगुणोत्कर्षश्च "अनिर्देश्य" इत्यादिपदेन उक्तम् । तत्रायमपि चोद्यपरिहारः अर्थात्सिद्धः । "रूपस्य भोग्यतमत्वे स्वरूपस्य निरतिशयभोग्यत्ववैकल्यं स्यात् इति चेत्, न; स्वरूपस्य भोग्यतमत्वं स्वसंबन्धिनोऽपि भोग्यतमत्वावहमिति, स्वरूप[2]भोग्यतमत्वपूर्तिरेव इति ॥

अर्थवादादेः स्वार्थे तात्पर्याभावात् ब्रह्मस्वरूपमपि न अभ्युपगतमिति पूर्वमीमांसकशङ्कायामाह वेदाः प्रमाणं चेत् इति । अपूर्वाविरुद्धशब्दाभ्यां साधकबाधकाभावोऽभिप्रेतः । प्रामाण्यं च इति । [3]चोदनासूत्रे[2] अवधारणद्वयमस्ति "चोदनैव प्रमाणम्, प्रमाणमेव चोदना" इति । प्रथमावधारणं प्रत्यक्षसूत्रे[3] उपपादितम्; द्वितीयावधारणम् औत्पत्तिकसूत्रप्रतिपाद्यमित्यर्थः । "औत्पत्तिकः"—सत्ताप्रयुक्तः, नित्य इत्यर्थः । स्वाभाविकत्वं विवृणोति यथा इति । स्पष्टम् । बोधव्यतिरिक्तकार्यकरत्वशक्तिः स्वाभाविकी, बोधकार्यकरत्वं तु न स्वाभाविकम् इति, विभागमाशङ्क्य तत्परिहारायाह यथा च इति ॥

---

१. वेदानामौत्पत्तिकम् 'औत्पत्तिकस्तु'—पा०
२. भोग्यत्वपूर्तिः—पा०
३. सूत्रेऽपि, सूत्रे हि—पा०

1. मीमांसा सू. १-१-७.
2. मीमांसा सू. १-१-२.
3. मीमांसा सू. १-१-४.

न च हस्तचेष्टादिवत् सङ्केतमूलं शब्दस्य बोधकत्वम् इति वक्तुं [1]शक्यम्, अनाद्यनुसन्धानाविच्छेदेऽपि सङ्केतयितृपुरुषाज्ञानात् यानि सङ्केतमूलानि, तानि सर्वाणि साक्षाद्वा परंपरया वा ज्ञायन्ते ॥

न च देवदत्तादिशब्दवत् कल्पयितुं युक्तम्; तेषु च साक्षाद्वा परंपरया वा संकेतो ज्ञायते; गव्यादिशब्दानां तु अनाद्यनुसन्धानाविच्छेदेऽपि [2]सङ्केताज्ञानादेव बोधकत्वशक्तिः स्वाभाविकी ॥

अतः अग्न्यादीनाम् औष्ण्यादिशक्तिवत् [3], इन्द्रियाणां बोधकत्वशक्तिवच्च, शब्दस्यापि बोधकत्वशक्तिः [4] आश्रयणीया ॥

ननु च इन्द्रियवत् शब्दस्यापि बोधकत्वं स्वाभाविकम् [5]; संबन्धग्रहणं बोधकत्वाय किमिति अपेक्षते? [6]लिङ्गवत् [7]इत्युच्यते; यथा,

---

हस्तचेष्टादिवत् बोधकत्वात् शब्दस्य सङ्केतितत्वं स्यादित्यत्राह अनादि इति। अनुसन्धानविच्छेदात् संकेतयितृपुरुषाज्ञानमिति शङ्कापरिहारार्थम्, 'अनाद्यनुसन्धानाविच्छेदेऽपि' इत्युक्तम्। सङ्केतयितृपुरुषज्ञानं संकेतमूलत्वे प्रयोजकम्, न बोधकत्वे — इत्यर्थः ॥

एवम्, बोधकत्वात् सङ्केतमूलत्वमाशङ्क्य परिहृतम्; शब्दत्वात् [8]देवदत्तादिशब्दवत् साङ्केतिकत्वमाशङ्क्य परिहरति न च इति। अत्र शङ्कामुखभेद एव; परिहारः तुल्यः। अतः इत्यादि। स्पष्टम् ॥

---

१. युक्तम्—पा०
२. सङ्केतयित्रज्ञानादेव—पा०
३. दाहकत्वशक्तिवत्—पा०
४. शक्तिरवश्याश्रयणीया, शक्तिरेवाश्रयणीया—पा०
५. स्वाभाविकं चेत्—पा०
६. लिङ्गादिवत्—पा०
७. इति च दृश्यते—पा०
८. देवदत्तशब्दवत्, देवदत्तादिवत्—पा०

ज्ञातसंबन्धनियमं धूमादि अग्न्यादिविज्ञानजनकम्; तथा ज्ञातसंबन्ध-नियमः शब्दोऽपि अर्थविशेषबुद्धिजनकः[1] ॥

एवं तर्हि, शब्दोऽपि अर्थविशेषस्य लिङ्गमिति अनुमानमेव स्यात्; नैवम्ः — शब्दार्थयोः संबन्धः — बोध्यबोधकभाव एव; धूमादीनां तु संबन्धान्तरमिति, तस्य संबन्धस्य ज्ञानद्वारेण बुद्धिजनकत्वमिति विशेषः ॥

एवं गृहीतसंबन्धस्य[2] बोधकत्वदर्शनात् अनाद्यनुसन्धानाविच्छेदेऽपि सङ्केताज्ञानात् बोधकत्वशक्तिरेवेति निश्चीयते ॥

एवं बोधकानां पदसंघातानां संसर्गविशेषबोधकत्वेन[3] वाक्य-शब्दाभिधेयानाम् उच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वकः, ते पौरुषेयाः शब्दा[4] इत्युच्यन्ते; यत्र तु[5] उच्चारणक्रमः पूर्वपूर्वोच्चारणक्रमजनित-संस्कारपूर्वकः, सर्वदा अपौरुषेयाः, ते च 'वेदाः' इत्युच्यन्ते ॥

---

बोधकत्वं स्वाभाविकं चेत्, व्युत्पत्तिग्रहणसापेक्षत्वमयुक्तम्; अतः साङ्केतिकमिति शङ्कायामाह गृहीतसंबन्धस्य इति। संबन्धग्रहणमपि सामग्र्यन्तर्भूतम्;[6] यथा, चक्षुरादेः आलोकाद्यपेक्षत्वं न बोधकत्वशक्तिविरोधि; तस्मात् स्वाभाविकी बोधकत्व-शक्तिरित्यर्थः। संबन्धग्रहणसापेक्षत्वात् शब्दोऽपि लिङ्गं स्यात् इति चेत् न; जन्यजनकभावादिसंबन्धान्तरज्ञानसापेक्षं लिङ्गम्; शब्दार्थयोः बोध्यबोधकभावसंबन्ध एव ज्ञातव्य इति लिङ्गशब्दयोर्भेदः।

सर्वशब्दानां बोधकत्वशक्तिः स्वाभाविकी चेत्, लौकिकवैदिकविभागः[7] कथमित्यत्राह एवम् इति ॥

---

१. बुद्धिजनक एव—पा०
२. सम्बन्धस्यापि—पा०
३. बोधनेन—पा०
४. इतिः न दृश्यते क्वचित्।
५. तदुच्चारणक्रमः—पा०
६. तथा—पा०
७. लौकिकवैदिकादिविभागः—पा०

एतदेव वेदानामपौरुषेयत्वं नित्यत्वं च, यत् पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेण उच्चार्यमाणत्वम् [1]॥

ते च आनुपूर्वीविशेषेण संस्थिताः, अक्षरराशयो वेदाः — ऋग्यजुस्सामाथर्वभेदभिन्नाः अनन्तशाखाः वर्तन्ते; ते च विध्यर्थवादमन्त्ररूपाः [2] वेदाः, परब्रह्मभूतनारायणस्वरूपम्, तदाराधनप्रकारम्, [3] आराधितात् फलविशेषं च बोधयन्ति ॥

---

स्मृतिपूर्वकत्वेऽपि उच्चारणस्य पुरुषाधीनत्वात् कथं वेदस्य अपौरुषेयत्वम् [4] इत्यत्राह एतदेव इति । 'अपौरुषेयत्वं' — पुरुषबुद्धिमूलत्वाभावः । 'नित्यत्वं' — सर्वकालसंबन्धित्वम् । पदनित्यत्वम्, वर्णनित्यत्वं वा न अपौरुषेयत्वे प्रयोजकम्, तथा सति कालिदासादिग्रन्थानामपि [5] अपौरुषेयत्वप्रसङ्गात्; तस्मात्, अनाद्यानुपूर्वीविशेषविशिष्टत्वेन पश्चादपि उच्चार्यमाणत्वम् — अपौरुषेयत्वम्, [6] नित्यत्वं च इत्यर्थः ।

तर्हि उपबृंहणापेक्षा कथमित्यत्राह ते च इति । आनन्त्येन दुर्ग्रहत्वात् उपबृंहणापेक्षा, न तु अनित्यतया इत्यर्थः ।

न आनन्त्यम् ऋग्यजुस्सामाथर्वरूपेण [7] संख्यातत्वात् इति चेत्; न । ऋग्यजुस्सामादिकोटिचतुष्टयान्तर्भावेऽपि एकैककोटौ शाखाद्वारा आनन्त्यमित्यर्थः । ते च विध्यर्थ इति । तत्र विधिभाग [8] एव अपौरुषेयः, अर्थवादादयः पौरुषेयाः इति विभागश्चेत्, अर्थवादादीनां स्वार्थे प्रामाण्यं न स्यात्; न च तथाऽस्ति; अतः

---

१. उच्चार्यत्वम्—पा०
२. मन्त्ररूपवेदाः—पा०
३. आराधनात्फलविशेषम्—पा०
४. अपौरुषेयत्वं स्यादित्यत्राह—पा०
५. अपिः न दृश्यते क्वचित् ।
६. नित्यत्वं चेति क्वचिन्न ।
७. अथर्वणरूपेण—पा०
८. 'एव'—क्वचिन्न दृश्यते ।

परमपुरुषवत्, तत्स्वरूप – तदाराधन – [1] तत्फलज्ञापकवेदाख्यं शब्दजातं नित्यमेव ॥

वेदानामनन्तत्वात्, [2] दुरवगाहत्वाच्च परमपुरुषनियुक्ताः परमर्षयः, कल्पे कल्पे निखिलजगदुपकारार्थं वेदार्थं स्मृत्वा, विध्यर्थवादमन्त्र-मूलानि धर्मशास्त्राणि, इतिहासपुराणानि च चक्रुः ॥

---

अपौरुषेयतया प्रमाणत्वाविशेषात् अर्थवादादयोऽपि स्वार्थप्रतिपादका इति [3] सर्वार्थ-सिद्धिरित्यर्थः [4] ।

लोके सिद्धवस्तुपरशब्दानां प्रतिपाद्यात् पश्चात्तनत्वं दृष्टम्; तस्मात् सिद्ध-वस्तुपरत्वे वेदानामनादित्वहानिः इति तत्राह **परमपुरुषवत्** इति । [5] यथा जाति-वाचित्वेन व्रीह्यादिशब्दानां, जातेश्च नित्यत्वात्, [6] न तेषां नित्यत्वहानिः अभ्यु-पेता; एवम्, प्रतिपाद्यप्रतिपादकयोः उभयोरपि अनादित्वम् [7] उपपन्नमित्यर्थः ।

पूर्वम् आनन्त्यं प्रपञ्चितम्, तेन उपबृंहणमपेक्षितमित्युक्तम्; इदानीं, दुरवगाहत्वात् तदपेक्षितमित्याह **वेदानाम्** इति । 'दुरवगाहत्वम् [8] ' — अधीय-मानशाखानामपि दुरवबोधार्थत्वम् [9] । **धर्मशास्त्राणि** । पूर्वभागोपबृंहणानि । उपनिषदुपबृंहणानि — इतिहासपुराणानि ।

---

१. तत्फलज्ञानबीजं वेदाख्यम्—पा०

२. दुरवगम्यत्वाच्च—पा०

३. स्वार्थसिद्धिः—पा०

४. इति भावः—पा०

५. यथा वा—पा०

६. 'न' — एतच्च दृश्यते क्वचित् ।

७. अभ्युपपन्नम्—पा०

८. दुरवगाहत्वात्—पा०

९. दुरवबोधार्थत्वेन—पा०

लौकिकाश्च शब्दाः वेदराशेः उद्धृत्यैव तत्तदर्थविशेषनामतया पूर्ववत् प्रयुक्ताः पारम्पर्येण प्रयुज्यन्ते ॥

ननु च, वैदिका एव सर्वे वाचकाः शब्दाश्चेत्, "छन्दस्येवम्, भाषायामेवम्" इति लक्षणभेदः कथमुपपद्यते; उच्यते;— तेषामेव शब्दानां तस्यामेव आनुपूर्व्यां वर्तमानानां तथैव प्रयोगः; अन्यत्र प्रयुज्यमानानामन्यथेति न कश्चित् दोषः ॥

एवम्, इतिहासपुराणधर्मशास्त्रोपबृंहितसाङ्गवेदवेद्यः, परब्रह्मभूतः, नारायणः, निखिलहेयप्रत्यनीकः, सकलेतरविलक्षणः, [1]अपरिच्छिन्नज्ञानानन्दैकस्वरूपः[2], स्वाभाविकानवधिकातिशय — असंख्येयकल्याणगुणगणाकरः[3], स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेद — चिदचि-

व्युत्पन्नलौकिकशब्दस्य वैदिका[4] न बोधकाः स्युः इत्यत्राह लौकिकाश्च इति । [1]"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥" इत्यादिवचनात्, वेदशब्दा एव[5] लोकेऽपि प्रयुज्यन्ते इति, लौकिकवैदिकशब्दाभेदाद्बोधकाः इत्यर्थः ।

लक्षणभेदाच्छब्दभेद इति चोदयति ननु च इति । परिहरति उच्यते इति । आनुपूर्वीभेदकृतो लक्षणभेदः, न तु शब्दभेदकृतः — इत्यर्थः[6] ।

एतस्मिन् प्रकरणे विस्तरेण प्रतिपादितानामर्थानां सुग्रहत्वाय उक्तार्थजातं सङ्ग्रहेण अनुक्रमते एवम् इत्यादिना । परब्रह्मनारायणशब्दौ—सामान्यविशेषशब्दौ । 'निखिलहेय' इत्यादिना उभयलिङ्गत्वमुक्तम् । विभूतिमत्त्वमाह स्वसङ्कल्प इति ।

---

१ अपरिच्छिन्नानन्दस्वभावः—पा०
२. अपरिच्छिन्नज्ञानानन्दस्वरूपः—पा०
३. कल्याणगुणाकरः—पा०
४. वैदिका अनवबोधकाः स्युः—पा०
५. लौकिकैः प्रयुज्यन्ते—पा०
६. इति—पा०

1. वि. पु. १-५-६३.

द्वस्तुजातः, अपरिच्छेद्यस्वरूपस्वभाव--अनन्तमहाविभूतिः, नानाविधा-नन्तचेतनाचेतनात्मक – प्रपञ्चलीलोपकरणः – इति प्रतिपादितम् ॥

[1]"सर्वं खल्विदं ब्रह्म", [2]"ऐतदात्म्यमिदं सर्वं ... तत्त्वमसि श्वेतकेतो", [3]"एनमेके वदन्त्यग्निं, मरुतोऽन्ये प्रजापतिम्। [1]इन्द्र-मेके परे प्राणम्, अपरे ब्रह्म शाश्वतम्", [4]"ज्योतींषि शुक्राणि च यानि लोके, त्रयो लोका लोकपालाः त्रयी च। त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव", [5]"त्वं यज्ञः त्वं वषट्कारः, त्वमो-ङ्कारः परन्तपः", [6]"ऋतधामा वसुः पूर्वः वसूनां त्वं प्रजापतिः", [7]"जगत्सर्वं शरीरं ते, स्थैर्यं ते वसुधातलम्। अग्निः कोपः प्रसादस्ते, सोमः श्रीवत्सलक्षणः", [8]"ज्योतींषि विष्णुः, भुवनानि विष्णुः

---

नित्यविभूतिमत्त्वमाह अपरिच्छेद्य इति। अपरिच्छेद्यस्वरूपस्वभावशब्देन, इयत्ताराहित्यम्, औज्ज्वल्यादिगुणोत्कर्षश्च विवक्षितः। अनन्तशब्देन नित्यत्वं विवक्षितम्; तद्गतपदार्थानन्त्यं वा। महाविभूतिः इति। [2]भोग्यविभूतिरुच्यते, [9]"शुद्धे महाविभूत्याख्ये" इति वचनात्। लीलाविभूतिमत्त्वमाह नानाविध इति। एवम्, सर्वविलक्षणत्वमुक्तम् ॥

तर्हि कथमैक्यश्रुतिः इत्यत्राह सर्वं खलु इति। "त्वं यज्ञः" इत्यादि-श्लोकानन्तरभावित्वात् "जगत्सर्वं शरीरं ते" इति श्लोकः उदाहृतः। अनेन सामानाधिकरण्यस्यार्थः स्पष्टो भवति ॥

---

१. इन्द्रमेके परं ब्रह्म शाश्वतं परमेश्वरम्—पा०
२. भोगविभूतिः—पा०

1. छा. उ. ३-१४-१.
2. छा. उ. ६-८-७.
3. मनुस्मृ. १२-१२३.
4. महाभारतम्।
5. रामा. युद्ध. १२०-२०.
6. रामा. युद्ध. १२०-७.
7. रामा. युद्ध. १२०-२६.
8. वि. पु. २-१२-३८.
9. वि. पु. ६-५-७२.

वनानि विष्णुः गिरयो दिशश्च । नद्यः समुद्राश्च स एव सर्वम्, यदस्ति यन्नास्ति च द्विजवर्य !" इत्यादि सामानाधिकरण्यप्रयोगेषु सर्वैः शब्दैः सर्वशरीरतया सर्वप्रकारं ब्रह्मैव अभिधीयते इति चोक्तम् ॥

सत्यसङ्कल्पं परं ब्रह्म स्वयमेव, 'बहुप्रकारं स्याम्' इति सङ्कल्प्य, अचित्समष्टिरूपमहाभूतसूक्ष्मं[1] वस्तु, भोक्तृवर्गसमूहं च, स्वस्मिन् प्रलीनं स्वयमेव विभज्य, तस्मात् भूतसूक्ष्मात् वस्तुनः महाभूतानि सृष्ट्वा, तेषु च भोक्तृवर्गम् आत्मतया प्रवेश्य, तैः चिदधिष्ठितैः महाभूतैः

---

कारणावस्थायामेकत्वावधारणात्, शरीरात्मभावः तदानीं नोपपद्यते इति, स्वरूपैक्यनिबन्धनमेव सामानाधिकरण्यमित्यत्राह सत्यसङ्कल्पम् इति । न हि, सत्यसङ्कल्पं ब्रह्मस्वरूपमेव स्वर्गनरकादिभाक् भवति ? [2] अतो विलक्षणमेव ब्रह्मेति सत्यसङ्कल्पशब्दाभिप्रायः । 'बहुप्रकारं स्याम्' इत्यनेन [1] "बहु स्याम्" इत्येतद्व्याख्यातम् । अचित्समष्टिरूपमहाभूतसूक्ष्मम्[3] इति । महदाद्यपेक्षया प्रकृतिः — समष्टिः ; सैव महाभूतसूक्ष्मम्[4] ; इति व्याख्यानव्याख्येयभावः[5] । भोक्तृवर्गसमूहं च इति । अनेन [2] "यतः प्रधानपुरुषौ" इत्यत्र पुरुषशब्दो व्याख्यातः ; पुरुषशब्दो न एकजीवपरः, अपि तु जीवसमष्टिपरः — इत्यर्थः । स्वस्मिन् प्रलीनं स्वयमेव विभज्य इति । एकीभूतम् अव्यक्तावस्थं, व्यक्तं[6] कृत्वा इत्यर्थः । तस्मात् इति । सृष्ट्वा इति । [7] समष्टिसृष्टिरुक्ता । जीवानाम् अचित्संसर्गस्य अनादित्वात्, तद्व्यावृत्त्यर्थम्, "आत्मतया" इत्युक्तम् । व्यष्टि-देहाभिमानितया प्रवेश्य इत्यर्थः । व्यष्टिसृष्टिरुच्यते तैः इति । चिदधिष्ठितैः —

---

१. सूक्ष्मवस्तु—पा०
२. अत उभयविलक्षणमेव—पा०
३. सूक्ष्मवस्तु इति—पा०
४. सूक्ष्मवस्तु इति—पा०
५. व्याख्येयमिति भावः—पा०
६. व्यक्तमिति क्वचिन्न दृश्यते ।
७. समष्टिसृष्टिः—पा०

1. छा. उ. ६-२-३.
2. वि. पु. १-१७-२०.

अन्योन्यसंसृष्टैः कृत्स्नं जगत् विधाय, स्वयमपि, सर्वस्य आत्मतया प्रविश्य, परमात्मत्वेन अवस्थितं सर्वशरीरं बहुप्रकारमवतिष्ठते ॥

यदिदं महाभूतसूक्ष्मं वस्तु, तदेव प्रकृतिशब्देन अभिधीयते। भोक्तृवर्गसमूह एव पुरुषशब्देन उच्यते। तौ च प्रकृतिपुरुषौ परमात्मशरीरतया परमात्मप्रकारभूतौ; तत्प्रकारः परमात्मैव प्रकृतिपुरुषशब्दाभिधेयः। [1] "सोऽकामयत, बहु स्यां प्रजायेयेति ... तत्सृष्ट्वा-तदेवानुप्राविशत् – तदनुप्रविश्य - सच्च त्यच्चाभवत् – निरुक्तं चानिरुक्तं च – निलयनं चानिलयनं च – विज्ञानं चाविज्ञानं च – सत्यं चानृतं च सत्यमभवत्" इति पूर्वोक्तं सर्वं अनयैव श्रुत्या व्यक्तम् ॥

---

चित्संसृष्टैरित्यर्थः। [2] "पुरुषाधिष्ठितत्वाच्चाप्यव्यक्तानुग्रहेण च, महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इत्यत्र पुरुषाधिष्ठितशब्दस्य चित्संसृष्टतापरत्वज्ञापनाय चिदधिष्ठितैः – इत्युक्तम्। 'अन्योन्यसंसृष्टैः' इति पञ्चीकरणं विवक्षितम्। कृत्स्नं जगत् इति। [1]ब्रह्माण्डतदन्तर्गतभोक्तृ[2]भोग्य[3]भोगोपकरणभोगस्थानदेवमनुष्यादिव्यष्टिजातमुच्यते। प्रविश्य इति। तदवस्थचिदचिन्नियन्तृतया अवस्थानमुच्यते। प्रवेश्य, प्रविश्य इति पदाभ्यां, जीवप्रवेशस्य पराधीनत्वं, परमात्मप्रवेशस्य स्वेच्छाकृतत्वं च दर्शितम्। तत्र प्रवेश्य, विधाय, प्रविश्य इति ल्यबन्तपदानां न पौर्वापर्यविवक्षा; अपि तु, कार्यभेदमात्रविवक्षैव; [3] "तस्य त्वष्टा विदधद्रूपमेति" इत्यादिश्रुत्यविरोधात्। परमात्मत्वेन अवस्थितम् इति। अप्रच्युतस्वरूपम् अवस्थितम् इत्यर्थः।

पूर्ववाक्ये गर्भितमर्थं विवृणोति यदिदम् इति। ब्रह्मणः चिदचिद्विलक्षणत्वे, तयोरपि भेदे, ब्रह्मणः [4]तदनुप्रवेशकृततत्तन्नामभाक्त्वे च श्रुतिमाह "सोऽकामयत" इति।

---

१. ब्रह्माण्डान्तर्गत—पा०
२. 'भोक्तृ' – एतन्न दृश्यते क्वचित्।
३. 'भोग्य' – एतन्न दृश्यते क्वचित्।
४. तदनुप्रवेशतत्तन्नामभाक्त्वे—पा०

1. तै. उ. आ. ६.
२. वि. पु. १-२-५४.
३. पुरुषसूक्तम् १९.

ब्रह्मप्राप्त्युपायश्च, शास्त्राधिगततत्त्वज्ञानपूर्वक — स्वकर्मानुगृहीत — भक्तिनिष्ठासाध्य — अनवधिकातिशयप्रिय — विशदतमप्रत्यक्षतापन्न- अनुध्यानरूप — परभक्तिरेव इत्युक्तम् । भक्तिशब्दश्च प्रीतिविशेषे वर्तते । प्रीतिश्च ज्ञानविशेष एव ॥

ननु च 'सुखं, प्रीतिः' इत्यनर्थान्तरम्; सुखं च — ज्ञान- विशेषसाध्यं पदार्थान्तरम् — इति[1] लौकिकाः । नैवम्; येन ज्ञान- विशेषेण तत् साध्यमित्युच्यते, स एव ज्ञानविशेषः[2] — सुखम् ॥

एतदुक्तं भवति :— "विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि । तानि च विषयाधीनविशेषाणि तथा भवन्ति। येन च विषयविशेषेण विशेषितं

---

एवं सिद्धवस्तुविषयसङ्ग्रहः कृतः । अथ उपायविषयं वक्तव्यमाह ब्रह्म इति । "भक्तिनिष्ठा" — भक्तियोगाभ्यासः; तेन साध्या परभक्तिः—[3] प्राप्तिपूर्वा- वस्था । तर्हि ज्ञानस्य कथं मोक्षोपायत्वमित्यत्राह भक्तिशब्दश्च इति । प्रीतिविशेष- शब्देन स्वामिनि[4] भृत्यस्य अनुरागो विवक्षितः । ततः किमित्यत्राह प्रीतिश्च इति ॥

अत्र वैशेषिकमतेन चोदयति ननु च इति । परिहरति नैवम् इति ॥

व्याहतमिदं ज्ञानसाध्यं सुखं ज्ञानमेवेति; न हि दण्डचक्रादिरेव घटः ? इत्यत्राह एतदुक्तं भवति इति । [5]सुखदुःखमध्यस्थशब्दाः—अनुकूल[6]प्रतिकूलानुभय- रूपविषयवाचिनः, तेषां साधारणानि इत्यर्थः । तथा भवन्ति — सुखम्, दुःखम्, अनुभयं च भवन्ति इत्यर्थः । [7]ज्ञानमेव सुखं स्यादित्यत्राह येन इति। ज्ञानं सुखजनकं चेत्, घटज्ञानमपि सुखजनकं स्यात्; नैवम्; स्रक्चन्दनादि-

---

१. इति हि लौकिकाः—पा०

२. ज्ञानविशेष एव सुखम्—पा०

३. प्राप्तेः पूर्वावस्था—पा०

४. भृत्यानुरागः—पा०

५. सुखदुःखमध्यस्थसाधारणानीति सुख- दुःखमध्यस्थशब्दः—पा०

६. प्रतिकूलानुभवरूपविषय—पा०

७. ज्ञानत्वे सुखम्—पा०

ज्ञानं सुखस्य[१] जनकमित्यभिमतम् । [२]तद्विषयज्ञानमेव सुखम् । तदतिरेकिपदार्थान्तरं नोपलभ्यते । तेनैव [३]सुखित्वव्यवहारोपपत्तेश्च ।

एवंविधसुखरूपज्ञानस्य विशेषकत्वम् — ब्रह्मव्यतिरिक्तस्य वस्तुनः सातिशयम्, अस्थिरं च; ब्रह्मणस्तु अनवधिकातिशयं, स्थिरं च इति, [1]"आनन्दो ब्रह्म" इत्युच्यते[४] । विषयायत्तत्वात् ज्ञानस्य, सुखरूपतया ब्रह्मैव सुखम् ।

---

विषयविशेषज्ञानं सुखजनकमिति चेत्, स्रक्चन्दनादिविषयज्ञानमेव सुखमिति न दोषः इत्यर्थः । ज्ञानातिरेकि सुखं किं दृष्टम्, उत कल्प्यम्? इति विकल्प्य दूषणमाह तदतिरेकि इति । पदार्थान्तरानुपलब्धेः इत्यर्थः । द्वितीयं शिरो दूषयति तेनैव इति । तेनैव — [५]विषयविशेषितज्ञानेनैवेत्यर्थः ।

ततः किं प्रस्तुतोपासनस्य अनवधिकातिशयप्रीतिरूपत्वे? इत्यत्राह एवंविध इति । ब्रह्मव्यतिरिक्तस्य वस्तुनः एवंविधसुखरूपज्ञानविशेषकत्वम् अनुकूलत्वम् — अल्पम्, अस्थिरं च; ब्रह्मणस्तु अनवधिकातिशयं स्थिरं च अनुकूलत्वमित्यर्थः । तत्र श्रुतिमाह **आनन्दो ब्रह्म** इति । ननु आनन्दशब्दस्य सुखपर्यायत्वात्, अनुकूलविषयज्ञानस्य सुखशब्दवाच्यतोपपादनाच्च, "आनन्दो ब्रह्म" इति ब्रह्मणः सुखत्ववचनम्[६] अयुक्तम् इत्यत्राह विषय इति । अयमर्थः — "आत्मानुकूलं सुखम्" इत्यानुकूल्यं हि [७]सुखशब्दप्रवृत्तिनिमित्तम्? तच्च ज्ञानस्य विषयानुकूल्यप्रयुक्तमिति विषयस्य स्वतोऽनुकूलस्य सुखशब्दवाच्यत्वं युक्तमिति ॥

---

१. सुखजनकम्—पा०
२. तद्विषयं ज्ञानमेव—पा०
३. सुखीति व्यवहार, सुखित्वदुःखित्वव्यवहार, सुखव्यवहार—पा०
४. इति ह्युच्यते—पा०
५. विषयविशेषविशेषित—पा०
६. सुखत्ववर्णनम्—पा०
७. सुखशब्दप्रवृत्तेः निमित्तम्—पा०

1. तै. उ. भृ. ६.

तदिदमाह :—[1] "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति । ब्रह्मैव सुखम् इति, ब्रह्म लब्ध्वा सुखी भवतीत्यर्थः । परमपुरुषः स्वेनैव स्वयमनवधिकातिशयसुखस्सन्[1] परस्यापि [2]सुखं भवति, सुखरूपत्वाविशेषात्; ब्रह्म यस्य ज्ञानविषयो [3]भवति स सुखी भवति इत्यर्थः ।

---

ज्ञानानुकूलत्वस्य विषयानुकूल्यप्रयुक्तत्वे श्रुतिमाह तदिदम् इति । अस्यां श्रुतौ ब्रह्मणः सुखरूपत्वाप्रतीतेः तां व्याचष्टे ब्रह्मैव इति । तच्छब्दः कारणतया प्रकृतब्रह्मपरामर्शी — इत्यर्थः । अत्र सुखवाचिशब्दः कः? [4]यो यस्य सुखं भवति तत्र स्वस्यापि सुखं भवति; एवं "परस्य भोग्यभूतं[5] ब्रह्म न स्वभोग्यमित्यत्राह परमपुरुषः इति । स्वयम् । स्वस्य इत्यर्थः । सुखरूपत्वाविशेषात् इति । स्वपरविभागरहितम्, [2] "आनन्दो ब्रह्म" [7]इत्यविशेषेण आनन्दत्वकथनादित्यर्थः । तर्हि "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति परं प्रति आनन्दत्वश्रवणं कथमित्यत्राह ब्रह्म यस्य इति । "ब्रह्म, परस्य ज्ञानविषयश्चेत् तस्य सुखं भवति; स्वस्य ज्ञानविषयत्वे स्वस्य सुखं भवति; अतः यस्य ज्ञानविषयभूतं ब्रह्म, अविशेषेण, तस्य तत् सुखमिति जीवस्यापि सुखरूपं भवति" इति [8]तस्याः श्रुतेरर्थः — [9]इत्यर्थः ।

---

१. अनवधिकातिशयसुखी परस्यापि—पा०
२. सुखाय भवतीत्यर्थः—पा०
३. भवतीति क्वचिन्न दृश्यते ।
४. लोके यो यस्य—पा०
५. परंपरस्य—पा०
६. भोग्यम्—पा०
७. इत्यविशेषादानन्दत्व—पा०
८. अस्याः—पा०
९. 'इत्यर्थः' इति क्वचिन्न दृश्यते ।

1. तै. उ. आ. ७-१.
2. तै. उ. भृ. ६.

तदेवं, परस्य ब्रह्मणः — अनवधिकातिशयासंख्येयकल्याणगुणाकरस्य, निरवद्यस्य, अनन्तमहाविभूतेः, अनवधिकातिशय[1] सौशील्यवात्सल्यसौन्दर्यजलधेः सर्वशेषित्वात्, आत्मनः [2] शेषत्वात्, प्रतिसम्बन्धितया अनुसन्धीयमानम्, अनवधिकातिशयप्रीतिविषयं [3] सत् परं ब्रह्मैव [4] एनमात्मानं प्रापयति — इति ॥

ननु च, अत्यन्तशेषतैव आत्मनः अनवधिकातिशयं सुखमित्युक्तं भवति, तदेतत् सर्वलोकविरुद्धम्। तथा हि:— सर्वेषामेव चेतनानां स्वातन्त्र्यमेव इष्टतमं दृश्यते, पारतन्त्र्यं [5] दुःखतरम्; स्मृतिश्च :— [1] "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् [6]", तथा [7] च, [2] "सेवा श्ववृत्तिराख्याता [8] तस्मात्तां परिवर्जयेत्" इति।

---

प्रीतिविशेषशब्देन अभिप्रेतमर्थं [9] विवृणोति तदेवम् इति। महाविभूतेः इत्यन्तेन परत्वोपयोगिगुणजातमुक्तम्। अनवधिक इत्यादिना, सौलभ्योपयोगि गुण उक्तः। प्रीतिविषयम् इति। स्वदास्यानुसन्धानगर्भा प्रीतिः विवक्षिता। एवंविधप्रीतिरूपज्ञानविषयभूतं ब्रह्म स्वप्राप्त्युपायभूतमित्यर्थः।

[10] अपुरुषार्थत्वापादनमुखेन चोदयति ननु च इति। अत्यन्त इत्यादि। स्पष्टम्। सर्वलोकविरुद्धत्वम् उपपादयति तथा हि इति।

---

१. सौलील्य—पा०
२. शेषताप्रतिसम्बन्धितया—पा०
३. प्रीतिविषयभूतं सत्—पा०
४. एवकारः क्वचिन्न दृश्यते।
५. पारतन्त्र्यं तु—पा०
६. सुखमिति—पा०
७. चकारः क्वचिन्न दृश्यते।
८. व्याख्याता—पा०
९. अभिमतमर्थम्, अभिहितमर्थम्—पा०
१०. अपुरुषार्थत्वोपपादनमुखेन—पा०

1. मनुस्मृ. ४-१६०.
2. मनुस्मृ. ४-६.

तदिदम् , अनधिगतदेहातिरिक्तात्मस्वरूपाणां शरीरात्माभिमान-विजृम्भितम् ; तथा हि :—शरीरं हि मनुष्यत्वादिजातिगुणाश्रयपिण्डभूतं स्वातन्त्र्यं प्रतीयते, तस्मिन्नेव 'अहम्' इति संसारिणां[1] प्रतीतिः, आत्माभिमानो यादृशः, तदनुगुणैव पुरुषार्थप्रतीतिः[2]; सिंहव्याघ्रवराहमनुष्ययक्ष-रक्षःपिशाचदेवदानवस्त्रीपुंव्यवस्थितात्माभिमानानां[3] सुखानि व्यवस्थि-तानि, तानि च परस्परविरुद्धानि ; तस्मात् , आत्माभिमानानुगुण-पुरुषार्थव्यवस्थया सर्वं समाहितम् ॥

---

'तदिदम्' इत्यादिना परिहरति । देहात्माभिमानविजृम्भितत्वमुपपादयति तथा हि इति । सुखत्वं[4], दुःखत्वं च न पारतन्त्र्यस्वातन्त्र्यप्रयुक्ते, अपि तु कर्मकृतदेहात्माभिमानप्रयुक्ते इति, सोपाधिकत्वं[5] दूषणं[6] वक्ष्यन् विपरीतात्माभि-मानं दर्शयति शरीरं हि इति । ततः किमित्यत्राह आत्माभिमानः इति । आत्माभिमानानुगुणपुरुषार्थप्रतीतौ उदाहरणमाह सिंहव्याघ्र इति । परस्पर-विरुद्धानि इति । "परस्परविरुद्धेषु सुखदुःखेषु तत्तदसाधारणं प्रयोजकं[7] न भवति व्यभिचारात ; तस्मात् , अनुयायिप्रयोजकं विपरीतात्माभिमानरूपम्[8] " इत्यभि-प्रायः । सोपाधिकत्वमुपसंहरति तस्मात् इति । [1]"आत्मानुकूलं सुखम् , आत्मप्रतिकूलं दुःखम्" इति सुखदुःखलक्षणम् । तस्मात् , स्वतन्त्रतया[9] आत्माभिमाने प्रतिकूलत्वात् पारतन्त्र्यं दुःखं भवति, न तु पारतन्त्र्यात् इत्यर्थः ।

---

१. प्रतिपत्तिः—पा०
२. पुरुषार्थप्रतिपत्तिः—पा०
३. आत्माभिमानिनाम्—पा०
४. सुखत्वदुःखत्वे च—पा०
५. सोपाधिकम्—पा०
६. दूषणमिति क्वचिन्न दृश्यते ।
७. प्रयोजनम्—पा०
८. आत्माभिमानानुरूपम्—पा०
९. स्वतन्त्रतया अभिमानप्रतिकूलत्वात्—पा०

1. लाक्षणिकवाक्यम् ।

आत्मस्वरूपं तु देवादिदेहविलक्षणं ज्ञानैकाकारम्; तच्च परशेषतैकस्वरूपम्। यथावस्थितात्माभिमाने तदनुगुणैव पुरुषार्थप्रतीतिः। [1] "आत्मा ज्ञानमयोऽमलः" इति स्मृतेः ज्ञानैकाकारता प्रतिपन्ना; [2] "पतिं विश्वस्य" इत्यादिश्रुतिगणैः परमात्मशेषतैकाकारता च [1] प्रतिपादिता; अतः, [2] सिंहव्याघ्रादि [3] शरीरात्माभिमानवत् [4], [5] स्वतन्त्रात्माभिमानोऽपि कर्मकृतविपरीतात्मज्ञानरूपो [6] वेदितव्यः॥

---

कथं समाहितमित्यत्राह आत्मस्वरूपं तु इति। ज्ञानैकाकारत्वे परशेषतैकस्वरूपत्वे च प्रमाणमाह आत्मा ज्ञानमयः इति। अतः इत्यादि। स्पष्टम्। एवं सोपाधिकत्वं कण्ठोक्तम्। अनैकान्त्यं च लोकसिद्धमित्यनुक्तम्॥

केवलमुपायतया स्वीकृतं [7] पतिपारतन्त्र्यमेव अपुरुषार्थः; भोग्यतमत्वेन स्वीकृतं [8] पतिपारतन्त्र्यं पुरुषार्थ एव लोके दृश्यते इति। किं च कालात्ययापदेशश्च [9] अभिप्रेतः। तथा हि:— भगवत्पारतन्त्र्यस्य दुःखरूपत्वं साध्यते, किम् इतरपारतन्त्र्यस्य? इतरस्य चेत्, साध्यताम्; भगवत्पारतन्त्र्यस्य दुःखरूपत्वं केन प्रमाणेन साध्यते; न तावत्प्रत्यक्षादिना, तदगोचरत्वात्; [10] आगमतस्तु भगवत्पारतन्त्र्यं सुखरूपमेवावगम्यते इति। पारतन्त्र्यसाम्यात् लोकसिद्धपारतन्त्र्यं सपक्षीकृत्य दुःखरूपत्वं साध्यते चेत्; अत्र किम् आगममभ्युपगम्य साध्यते?, उत,

---

१. प्रतीता—पा०
२. सिंहव्याघ्रवराहादिशरीरात्मा—पा०
३. आदिशब्दः क्वचिन्न दृश्यते।
४. शरीराभिमानवत्—पा०
५. स्वातन्त्र्याभिमानोऽपि—पा०
६. विपरीतज्ञानरूपः—पा०
७. स्वीकृतं प्रति पारतन्त्र्यम्—पा०
८. स्वीकृतं प्रति पारतन्त्र्यम्, स्वीकृतं पारतन्त्र्यम्—पा०
९. कालात्ययापदिष्टश्च—पा०
१०. आगमैस्तु—पा०

1. वि. पु. ६-७-२२.
2. तै. उ. ना. १३-१.

अतः, कर्मकृतमेव [1]परमपुरुषव्यतिरिक्तविषयाणां सुखत्वम् ; अत [2] एव तेषाम् अल्पत्वम्, अस्थिरत्वं च । परमपुरुषस्यैव स्वत [3] एव सुखत्वम् । अतः, तदेव स्थिरम्, अनवधिकातिशयं च, [1]"कं ब्रह्म, खं ब्रह्म", [2]"आनन्दो ब्रह्म", [3]"सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः ॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य वस्तुनः स्वरूपेण सुखत्वाभावः, कर्मकृतत्वेन च अस्थिरत्वं भगवता पराशरेण उक्तम् :—

[4]"नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम !
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च यतस्तस्मात् वस्तु वस्त्वात्मकं कुतः ॥"

---

अनभ्युपगम्य ? अनभ्युपगमे आश्रयासिद्धिः; अभ्युपगमे [4] धर्मिग्राहकप्रमाणबाधः [5]इत्यभिप्रेतं दूषणम्; परशेषतैकस्वरूपत्वे [5]"पतिं विश्वस्य" इत्यादि, प्रमाणतया भाष्यकारेण अभिप्रेतम् ।

भगवत्पारतन्त्र्यं सुखरूपमस्तु, विपरीतात्माभिमानेऽपि सुखमनुभूयते चेत् किं ब्रह्मप्राप्त्येत्यत्राह अतः कर्मकृतमेव इति । "इतरसुखानां कर्मकृतत्वात् [6]तत्तारतम्यानुगुणे तदल्पत्वास्थिरत्वे [7]; स्वाभाविकसुखरूपत्वात् ब्रह्मणोऽनन्तस्थिरत्वे" इत्यर्थः । अत्र [8] प्रमाणमाह कं ब्रह्म इति । ब्रह्मणोऽपरिमितसुखत्वे श्रुतिरुक्ता ।

[9]व्यतिरिक्तसुखास्थिरत्वादिके प्रमाणं श्रीविष्णुपुराणवचनमाह ब्रह्म इति । पापपुण्ये । पापपुण्यकृते इत्यर्थः । "वस्तु वस्त्वात्मकं कुतः" इत्येतद्व्याचष्टे

---

१. परमेश्वरव्यतिरिक्त—पा०
२. अत एतेषाम्—पा०
३. एवकारः क्वचिन्न दृश्यते ।
४. अभ्युपगम्यते—पा०
५. इत्यादिकं दूषणम्—पा०
६. तत्र तारतम्य—पा०
७. अस्थिरत्वे च—पा०
८. तत्र—पा०
९. व्यतिरिक्तसुखत्वास्थिरत्वादिके—पा०

1. छा. उ. ४-१०-५.
2. तै. उ. भृ. ६.
3. तै. उ. आ. १.
4. वि. पु. २-६-४६.
5. तै. उ. ना. १३-१.

सुखदुःखाद्येकान्तरूपेण[1] वस्तुनो वस्तुत्वं कुतः ? तदेकान्तता पुण्यपापकृतेत्यर्थः ॥

एवम्, अनेकपुरुषापेक्षया कस्यचित् सुखमेव कस्यचित् दुःखं भवति – इत्यवस्थां[2] प्रतिपाद्य, एकस्मिन्नपि पुरुषे न व्यवस्थित-मित्याह :—

[1] "तदेव प्रीतये भूत्वा पुनः दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ।
तस्मात् दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ॥"

इति[3] । सुखदुःखात्मकत्वं सर्वस्य वस्तुनः कर्मकृतम्, न वस्तु-स्वरूपकृतम्; अतः कर्मावसाने तदपैति – इत्यर्थः ॥

यत्तु [2] "सर्वं परवशं दुःखम्" इत्युक्तम्, तत् – परमपुरुषव्यति-रिक्तानां[4] परस्परशेषशेषिभावाभावात्, "तद्व्यतिरिक्तं प्रति शेषता –

---

सुखदुःखादि इति । [3] "तस्मादुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्" इत्य-त्रापि कथनात्, अत्रापि एकान्तसुखतया वस्तुत्वम्, एकान्तदुःखतया वस्तुत्वं च[5] निषिद्धमिति भावः । सुखाद्येकान्तत्वप्रतीतिः कथमित्यत्राह तदेकान्तता इति ॥

उक्त – वक्ष्यमाणश्लोकयोः अपौनरुक्त्यार्थमाह एवम् इति । एकस्मि-न्नपि पुरुषे न व्यवस्थितम् इति । कालभेदेनेत्यध्याहारः । उदाहृतश्लोकार्थ-माह सुखदुःखात्मकत्वम् इति ।[6] फलितमर्थमाह अतः इति ॥

पूर्वपक्षोक्तग्रन्थार्थमाह यत्तु इति ।[7] परस्परशेषशेषिभावाभावात् इति ।

---

१, रूपिणः—पा०
२. इत्यव्यवस्थाम्, इति व्यवस्थाम्—पा०
३. इतिः न दृश्यते क्वचित् ।
४. परस्परशेषशेषीभावाभावात्—पा०
५. न सिद्धमिति भावः—पा०
६. फलितार्थमाह—पा०
७. परस्परशेषशेषीभावाभावात्—पा०

1. वि. पु. २-६-४८.
2. मनुस्मृ. ४-६.
3. वि. पु. २-६-४८.

दुःखमेव" इत्युक्तम् । [1]"सेवा [१]श्ववृत्तिराख्याता[२]" इत्यत्रापि असेव्यसेवा — श्ववृत्तिरित्युक्तम् । [2]"स ह्यात्मगुणैः [३]सदोपास्यः समस्तैः एक एव [४]तु" इति, सर्वैः आत्मयाथात्म्यविद्भिः[५] सेव्यः पुरुषोत्तम एक एव ॥

यथोक्तं भगवता :—

[3]"मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥" इति ।

इयमेव भक्तिरूपा सेवा — [4]"ब्रह्मविदाप्नोति परम्", [5]"तमेवं विद्वानमृत इह भवति[६]", [6]"ब्रह्मवेद ब्रह्मैव भवति" इत्यादिषु

स्वभावतो भावादित्यर्थः । सेवा इत्यादि । स्पष्टम् । कथमस्य वचनस्य असेव्यसेवाविषयत्व[७]मित्यत्राह स हि इति । तद्व्याचष्टे सर्वैः इति ।

भगवद्वचनमाह यथोक्तम् इति ।

कथं सेवाया मोक्षोपायत्वम्? ज्ञानं हि मोक्षोपायः? इत्यत्राह इयमेव इति । [7]"भज इत्येष धातुर्वै सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी" इति भगवद्बोधायनवचनम् । [8]"सेवा भक्तिरुपास्तिः" इति निघण्टुः । तस्माद्भक्तिरूपा सेवा वेदनादिशब्दवाच्येत्यर्थः । सेवा भक्तिरस्तु, कथं वेदनादि-

१. श्ववृत्तिरप्यसेव्यसेवा, श्ववृत्तिरित्यसेव्यसेवा—पा०
२. व्याख्याता—पा०
३. सदा सेव्यः—पा०
४. च—पा०
५. याथात्म्यवेदिभिः—पा०
६. भवतीत्यादिषु—पा०
७. अपसेवाविषयत्वम्, सेव्यसेवाविषयत्वम्—पा०

1. मनुस्मृ. ४-६.
2. महाभारतम् ।
3. गीता १४-२६.
4. तै. उ. आ. १-१.
5. पुरुषसूक्तम् २०.
6. मु. उ. ३-२-९.
7. बोधायनस्मृतिः ।
8. हलायुधनिघण्टुः ।

[1]वेदनशब्देनाभिधीयते इत्युक्तम् । [1]"यमेवैष वृणुते तेन लभ्यः" इति विशेषणात्, [2]"यमेवैष वृणुते" इति भगवता वरणीयत्वं प्रतीयते; वरणीयश्च प्रियतमः; यस्य भगवति अनवधिकातिशया प्रीतिः जायते, स एव भगवतः प्रियतमः ।

तदुक्तं भगवतैव[2]:—

[3]"प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः ।" इति ।

तस्मात्, परभक्तिरूपापन्नमेव वेदनं तत्त्वतो भगवत्प्राप्तिसाधनम् ॥

यथोक्तं [3]भगवता द्वैपायनेन मोक्षधर्मे, सर्वोपनिषद्व्याख्यानरूपम्[4]:—

[4]"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं [5]परिपश्यतीह ॥" इति ।

---

शब्दवाच्या भक्तिरित्यत्राह यमेव इति । कथं विशेषितत्वमित्यत्राह यमेव इति । ततः किमित्यत्राह वरणीयश्च इति । प्रियतमश्च [6]कः? इत्यत्राह यस्य इति ।

[7]तत्र भगवद्वचनमाह तदुक्तम् इति ।

तस्मात् इति । पुत्रत्वादिरूपेण भगवत्प्राप्तिः दशरथादेरप्यस्तीति तद्व्यावृत्त्यर्थं तत्त्वतः इत्युक्तम् । [8]यथावदनुभवसाधनमित्यर्थः ॥

[9]तत्र महाभारतवचनमाह यथोक्तम् इति । "न सन्दृशे तिष्ठति" इत्यादि [10]श्रुतिगणरूपत्वात् "सर्वोपनिषद्व्याख्यानरूपम्" इत्युक्तम् । "न सन्दृशे"

---

१. वेदनादिशब्देन—पा०
२. एवः क्वचिन्न ।
३ भगवद्द्वैपायनेन—पा०
४. व्याख्यानरूपेण—पा०
५. परिपश्यन्ति धीराः—पा०
६. कुत इत्यत्राह—पा०
७. तत्रेति क्वचिन्न दृश्यते ।
८. यथावद्भगवदनुभवसाधनम्—पा०
९. तथा—पा०
१०. श्रुत्युपबृंहणरूपत्वात्—पा०

1. मु. उ. ३-२-३.
2. कठ. उ. २-२३.
3. गीता ७-१७.
4. गीता ११-५४.

धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं[1] पश्यति — साक्षात्करोति, प्राप्नोति इत्यर्थः ;[1] "भक्त्या त्वनन्यया शक्यः" इत्यनेन ऐकार्थ्यात् ।

भक्तिश्च ज्ञानविशेष एव इति सर्वमुपपन्नम् ॥

सारासारविवेकज्ञाः गरीयांसो विमत्सराः ।

प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसङ्ग्रहः ॥

इति श्रीभगवद्रामानुजविरचितः वेदार्थसङ्ग्रहः समाप्तः ॥

---

इत्यादि पूर्वार्धं वेदे, महाभारते च तुल्यम् । 'भक्त्या' इत्यनेन, उत्तरार्धगत-हृच्छब्दो[2] व्याख्यातः इति ज्ञायते । स्थानप्रमाणात् धृतिः — इन्द्रियाणां विषयवैमुख्यकरणम्[3] । अनेन शमदमादयः उपलक्षिताः । [2]"हृदा मनीषा मनसाऽभिक्लृप्तः" भक्त्या, शमदमादिना च अन्वितेन मनसा संपद्यत इति तस्य वाक्यस्य अर्थः ।

श्लोकमन्वयक्रमेण व्याचष्टे धृत्या इति । अन्वयक्रमः एवमिति कथ-मवगम्यते[4] ? इत्यत्राह भक्त्या तु इति ।

ततः किं वेदनादिशब्दैः भक्तेरभिधेयत्वे ? इत्यत्राह भक्तिश्च ज्ञानविशेष एव इति । भक्तिः — प्रीतिविशेषः ; प्रीतिश्च — ज्ञानादनर्थान्तरमिति * पूर्वमेवोक्तम् ; तस्मात, प्रीतिरूपा भक्तिः ज्ञानविशेष[5] इति । सर्वमुपपन्नम् इति । [6]स्वपक्षस्थापन — परपक्षप्रतिक्षेपयोः[7] यत् प्रमाणजातमुक्तम्, तेनैव अनुक्तमन्यदपि च वक्तव्यं सर्वं निर्वाह्यम्, अत्रैव कृत्स्नान्तर्भावात् इत्यर्थः ॥

---

* ३४० पुटे ।

१. परिपश्यति—पा०

२. व्याख्यायते—पा०

३. वैमुख्यकरधारणम्—पा०

४. अवगन्तव्यमित्यत्राह—पा०

५. ज्ञानविशेष एवेति—पा०

६. स्वपक्षसाधन—पा०

७. प्रतिक्षेपरूपयोः—पा०

1. भार. मोक्षधर्मे ।

2. तै. उ. ना. १-१०.

अस्य प्रबन्धस्य अतिगम्भीरत्वप्रदर्शनार्थमाह सारासार इति । अनेन, सर्वजनापरिग्रहो न दोषः; अशिष्टपरिग्रह एव दोषः; तस्मात्, [1] विशिष्टपरिग्रह एव श्लाघ्यताहेतुरिति च उक्तं भवति । "सारासारविवेकज्ञाः" — परस्परविरुद्धानेकार्थेषु प्रतिपन्नेषु, [2] तत्र प्रमाणतर्कैः प्राबल्यदौर्बल्यादिविभागविदः । "गरीयांसः" — बहुश्रुताः; न [3] बाहुश्रुत्याभावे तत्तच्छास्त्रोक्तानां प्राबल्यदौर्बल्यविभागः [4] उपपद्यते । [5] बाहुश्रुत्ये सत्यपि, "अस्मिन् शास्त्रे अयमर्थ उक्तः, अन्यत्र अन्यः, किमत्र तत्त्वम्" इति व्यवस्थितिः नास्तीति, केचिन्मन्दधियां [6] मन्वते, अतः सारासारविवेकज्ञत्वमपेक्षितम् । एवमुभयस्मिन् सत्यपि, अस्मत्सवयसा अनेनोक्तं कथं वयमङ्गीकुर्मः? इति मत्सरोपहताश्चेत्, उभयमपि [7] विफलमिति, तद्व्यावृत्त्यर्थं "विमत्सराः" इत्युक्तम् । उक्तविशेषणत्रयफलमाह प्रमाणतन्त्राः इति । ये प्रमाणानुसारिणः—तदनुगुणैः तर्कैः अर्थं निरूपयन्ति; न तु [8] स्वापेक्षितार्थे प्रमाणजातं क्लेशेन नयन्ति, ते प्रमाणतन्त्राः । [1] "कालो ह्ययं निरवधिः विपुला च पृथ्वी" इति प्रकारेण यत्र कुत्रचित् यदा कदाचित् एवंविधाः पुरुषा [9] अपि [10] सम्भविष्यन्ति — इति मत्वा, तेषाम् अभिमतिविषयत्वेन वेदार्थसङ्ग्रहः कृतः इत्यर्थः ॥

वेदार्थसङ्ग्रहसुधां [11] वेदान्ताब्धेर्य [12] आहरत् ।
रामानुजाय मुनये तस्मै भगवते नमः ॥

१. विशिष्टजनपरिग्रह एव—पा०
२. तत्रेति क्वचिन्न दृश्यते ।
३. बहुश्रुतत्वाभावे—पा०
४. दौर्बल्यादिविभागः—पा०
५. बहुश्रुतत्वेऽप्यस्मिन्—पा०
६. मन्यन्ते—पा०
७. निष्फलम्—पा०
८. स्वोत्प्रेक्षितार्थे—पा०
९. अपिः न दृश्यते क्वचित् ।
१०. संभवन्ति—पा०
११. वेदान्तार्थैर्यः—पा०
१२. आचरत्—पा०

1. मालतीमाधवे १ अङ्के ६ श्लो.

वेदार्थसङ्ग्रहव्याख्या [1]विहितेयं यथा श्रुता ।
[2]वेदव्यासापराह्वेन श्रीसुदर्शनसूरिणा ॥

इति श्रीहरितकुलतिलक — श्रीवाग्विजयसूनुना, [3]श्रीवत्साङ्कमिश्रवंश्येन, श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन, श्रीगद्धरदाचार्यपादसेवासमधिगत-वेदार्थसङ्ग्रहतात्पर्येण[4], श्रीसुदर्शनसूरिणा विलिखिता तात्पर्यदीपिका समाप्ता * ॥

तारकल्पितयुक्तिभिः शकलशः कृत्वा तदीयं मतं
याच्छब्दैरुदमर्दि सात्वतमतस्पर्धावतामुद्धतिः ।
यस्येतः सततं मुकुन्दचरणद्वन्द्वास्पदं वर्तते
जीयान्नाथमुनिः स योगमहिमप्रत्यक्षतत्त्वत्रयः ॥

वन्दिषीय वरणीयवाङ्मयं वारिधिं वरगुणौघसंपदाम् ।
वत्सवंशवरदार्यसंश्रयं वादिहंसनववारिदं गुरुम् ॥

श्रीविष्णुचित्तपदपङ्कजसङ्गमाय चेतो मम स्पृहयते किमतः परेण ।
नो चेन्ममापि यतिशेखरभारतीनां भावः कथं भवितुमर्हति वाग्विधेय ॥

यः पर्याप्तकलः ख्यातो यतिराजाब्धिचन्द्रमाः ।
कुशलं दिशतां मेऽसौ कुरुकेश्वरदेशिकः ॥

तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणाम् अन्तर्ज्वरमशीशमत् ॥

---

* अत्र केषुचिद्ग्रन्थेषु श्लोकद्वयमेतत् दृश्यते :—

(१) शरणागतरक्षित्री गुरुस्नेहदशां गता । सुदर्शनाद्भवा भाति स्थिरा तात्पर्यदीपिका ॥

(२) बाह्यान्तरतमोहन्त्री वाद्यवाद्यविचालिनी । अनन्यगोप्रतिहता द्योतते भावदीपिका ॥

---

१. लिखितेयम्—पा०

२. लोके व्यासापराह्वेन, वेदव्यासापराख्यान-श्रीसुदर्शन—पा०

३. 'श्रीवत्साङ्कमिश्रवंश्येन'-क्वचिदेतन्न दृश्यते ।

४. सारसङ्ग्रहतात्पर्येण—पा०

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

# अनुबन्धः १

## अस्मिन् ग्रन्थे उदाहृतानां प्रमाणानाम् आकराद्यनुक्रमणिका

र

| ( प्रमाणानि ) | ( स्थलनाम ) |
|---|---|
| सत्यसंकल्पः | छा. उ. ८-७-१ ; ८-७-३. |
| सत्यस्य सत्यम् | बृ. उ. ४-३-६ |
| सदा तद्भावभावितः | गीता ८-६ |
| सदा पश्यन्ति सूरयः | ४ का. २ प्र. २९ |
| सदेव | छा. उ. ६-२-१ |
| सदेव...एकमेव | छा. उ. ६-२-१ |
| सदेव सोम्येदमग्रे | छा. उ. ६-२-१. १ १२१, |
| स नो देवः शुभया | तै. उ. ना. १२-३ |
| सन्मूलास्सोम्येमाः | छा. उ. ६-८-४ ; ६-८-६. |
| स ब्रह्मा स शिवः | तै. उ. ना. १३-२ |
| समस्तहेयरहितम् | वि. पु. १-२२-५३ |
| समस्ताश्शक्तयश्चैताः | वि. पु. ६-७-७० |
| समस्समविभक्ताङ्गः | रामा. सुन्दर. ३५-१६ |
| समुद्र इव गाम्भीर्ये | रामा. बाल. १-१७ |
| स य एषोऽन्तर्हृदय | तै. उ. शी. ६-१ |
| स यथा सैन्धवघनः | बृ. उ. ६-६-१२ |
| सर्गस्थितिविनाशानाम् | वि. पु. १-२-४ |
| सर्गस्थित्यन्तकालेषु | वि. पु. १-२३-४१ |
| सर्वं खल्विदं ब्रह्म | छा. उ. ३-१४-१. |
| सर्वं परवशं दुःखम् | मनुस्मृ. ४-१६० |
| सर्वकर्माण्यपि सदा | गीता १८-५६ |
| सर्वगत्वादनन्तस्य | वि. पु. १-१९-८५ |
| सर्वगन्धः सर्वरसः | छा. उ. ३-१४-४ |
| सर्वत्रासौ समस्तं च | वि. पु. १-२-१२ |
| सर्वदा चरणद्वन्द्वम् | जितन्तेस्तो. २ |
| सर्वमिदं प्रशास्ति | बृ. उ. ६-४-२२ |
| सर्वश्शर्वश्शिवः | श्रीविष्णुसहस्र. १८ |



---

**गमनिका:**— १५६ ( ४ प्र. ), २३६ ( २ प्र. ), २४४ ( १ प्र. ), ३२६ ( १ प्र. ); ३३१ ( १, २ प्र. ), ३३३ ( १ प्र. )— एषु पत्रेषु बोधायनवृत्तेः स्थाने वाक्यकारग्रन्थः आकरतया ग्राह्यः ॥

श्री

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

# अनुबन्धम् २

## अस्मिन् ग्रन्थे उदाहृतानां ग्रन्थानाम् अकाराद्यनुक्रमणिका

( ग्रन्थनाम ) ( पृष्ठसंख्या )

श्री
श्री श्रीनिवासपरब्रह्मणे नमः
श्रीमते रामानुजाय नमः

# अनुबन्धम् ३

## अस्मिन् ग्रन्थे उदाहृतानां प्रामाणिकानाम् अनुक्रमणिका

| (नामानि) | (पत्रसंख्या) | (नामानि) | (पत्रसंख्या) |
|---|---|---|---|
| अक्षपादः | वे. २०२. | जैमिनिः | ता. २१०. |
| | ता. २०२. | टङ्कः | वे. २०२. |
| आपस्तम्बः | वे. ८८, ९१. | | ता. २०२. |
| | ता. ९१. | दक्षः | ता. १५५. |
| औलूक्यः | वे. २०२. | द्रमिडाचार्याः | वे. १८७, २०२, २७८, २९५, ३०४. |
| | ता. २०२. | | ता. १८७, २७८, ३३२. |
| कणादः | ता. २०२. | द्वैपायनः | वे. ८८, ८९, ३५३. |
| कपर्दिः | वे. २०२. | | ता. ८८. |
| कपिलः | वे. २०२. | पतञ्जलिः | वे. २०२. |
| कल्पसूत्रकारः | ता. २१५. | पराशरः | वे. ४५, ८८, ९०, ११७, १४९, २०१, ३५०. |
| कालिदासः | ता. ३३८. | | ता. ४५, ९०, २६९, ३१२. |
| क्षपणकः | वे. २०२. | | |
| गुरुः | ता. २८६. | | |
| गुहदेवः | वे. २०२. | | |
| गौतमः | वे. ८८. | पुरुषोत्तमः (गीताचार्यः) | वे. २०१. |
| चाणक्यः | वे. २४२. | | |
| | ता. २४२. | प्रह्लादः | वे. २४३. |
| चार्वाकः | वे. २०२. | प्राभाकरा | ता. २९१. |

वे = वेदार्थसंग्रहः ; ता = तात्पर्यदीपिका.

श्रीः

श्री श्रीनिवास परब्रह्मणे नमः

श्रीमते रामानुजाय नमः

# अनुबन्धम् ४

अस्मिन् ग्रन्थे उदाहृतानां प्राचीनविशिष्टाद्वैतिनां नामधेयानि, ग्रन्थाश्च

नामधेयानि :—

भगवान् बोधायनमहर्षिः — शारीरकमीमांसासूत्राणां कृतकोटिनामक (?) अतिविपुल - वृत्तिग्रन्थप्रणेतारः। एतेषां नामधेयं परम् अत्र संगृहीतम्; ग्रन्थस्तु श्रीभाष्ये अनेकेषु स्थलेषु उदाहृतः ॥

टङ्काचार्याः — छान्दोग्यस्य, तथा ब्रह्मसूत्राणां च वाक्यनामकविपुलव्याख्यान-कर्तारः। एतेषां नाम, ग्रन्थश्च अत्र संगृहीतौ ॥

द्रमिडाचार्याः — छान्दोग्यवाक्यग्रन्थस्य, ब्रह्मसूत्राणां च परिमित - प्रौढ-गम्भीर - भाष्यप्रणेतारः। एतेषां नाम, ग्रन्थश्च अत्र समुट्टङ्कितौ ॥

गुहदेवः, कपर्दिः —, भारुचिः — एते त्रय. विशिष्टाद्वैतमतानुरोधेन व्याख्यानग्रन्थप्रणेतारः। एतेषां नामधेयानि परम् अत्र संगृहीतानि। अविगीत-शिष्टाचार्यपदे च एते अभिषिक्ताः।

भगवन्तः श्रीमद्यामुनाचार्याः — एते भगवद्रामानुजाचार्याणां परमाचार्याः; (१) आगमप्रामाण्य, (२) सिद्धित्रय, (३) चतुश्श्लोकी, (४) स्तोत्र-रत्न, (५) पुरुषनिर्णयादिग्रन्थप्रणेतारः। एतेषां सुगृहीतं नाम, सिद्धि-त्रयग्रन्थश्च समुदाहृतौ ॥

ग्रन्थाः :—

## वाक्यग्रन्थः

“हिरण्मय इति रूपसामान्याचन्द्रमुखवत्।” (ता. दी. १५६ पु; वे. सं. ३३३ पु.)

"'तस्मिन् यदन्तः' इति कामक्षयाद्ये. ८"। (वे. सं. २३६ पु.)

"आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः।" (वे. सं. २४४ पु.)

"आदित्याक्षिगं च श्रीमद्रामात्।" (ता. दी. २२६ पु.)

"'हिरण्मयः पुरुषो दृश्यते' इति शास्त्रसर्वान्तरत्वात्, लोककामेशोपदेशात्, तथोदयाद्यपाप्मनाम्।" (वे. सं. २३१ पु.)

"स्वाद्रूपं भक्तानुग्रहार्थं तच्चैतन्यमैश्वर्यात्।" (वे. सं. २३१ पु.)

"रूपं नाऽतीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्।" (वे. सं. २३२ पु.)

## द्रमिडभाष्यम्

"यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसा अनुधावेत्, तथाऽपि अन्तर्गुणामेव देवतां भजते इति, तत्रापि सगुणैव देवता प्राप्यते।" (वे. सं. १८७ पु.)

"फलसंविभक्तया कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलाय इति शास्त्रमर्यादा।" (वे. सं. २९५ पु.)

"तस्य आज्ञया धावति वायुः, नद्यः स्रवन्ति, तेन कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति।" (वे. सं. २०४ पु.)

"तत्संकल्पनिबन्धना हि इमे लोकाः — न च्यवन्ते, न स्फुटन्ते स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवान् वर्धयेन विद्वान् कर्मदक्षः।" (वे. सं. ३०४ पु.)

"न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः।" (वे. सं. ३३२ पु.)

"यथाभूतवादि हि शास्त्रम्।" (वे. सं. ३३४ पु.)

## सिद्धित्रयम्

"उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिक — भक्तियोगलभ्यः।" (वे. सं. १९७ पु.)

तिरुमलै तिरुपति देवस्थानमुद्राक्षरशाला, तिरुपति—१९५२.